# ॥ श्रौतपाठः ॥

# A VEDIC READER

*FOR M. A. STUDENTS*



**IN TWO PARTS**

**PART I, SAMHITĀS**
**PART II, BRĀHMAṆAS**

## PART II






PUBLISHED BY THE
UNIVERSITY OF CALCUTTA
1942

# सूचीपत्रम्

## पूर्वखण्डम्



## उत्तरखण्डम्



---

# १। ऐतरेयब्राह्मणम्

॥ १ ॥

१-३

पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति। यं दीक्षयन्ति। अद्भिरभिषिञ्चन्ति। रेतो वा आपः। सरेतसमेवनं तत्कृत्वा दीक्षयन्ति। नवनीतेनाभ्यञ्जन्ति। आज्यं वै देवानाम्। सुरभि घृतं मनुष्याणाम्। आयुतं पितृणाम्। नवनीतं गर्भाणाम्। तद्यन्नवनीतेनाभ्यञ्जन्ति। स्वेनैवैनं तद्भागधेयेन समर्धयन्ति। आञ्जत्येनम्। तेजो वा एतदक्ष्योर्यदाञ्जनम्। सतेजसमेवैनं तत्कृत्वा दीक्षयन्ति। एकविंशत्या दर्भपिञ्जूलैः पावयन्ति। शुद्धमेवैनं तत्पूतं दीक्षयन्ति। दीक्षितविमितं प्रपादयन्ति। योनिर्वा एषा दीक्षितस्य। यद्दीक्षितविमितम्। योनिमेवैनं तत्स्वां प्रपादयन्ति। तस्माद् ध्रुवाद्योनेरास्ते च चरति च। तस्माद् ध्रुवाद्योनेर्गर्भा धीयन्ते च प्र च जायन्ते। तस्माद्दीक्षितं नान्यत्र दीक्षितविमितादादित्योऽभ्युदियाद्वाऽभ्यस्तमियाद्वाऽपि वाऽभ्याश्रावयेयुः। वाससा प्रोर्णुवन्ति। उल्बं वा एतद्दीक्षितस्य यद्वासः। उल्बेनैवैनं तत्प्रोर्णुवन्ति। कृष्णाजिनमुत्तरं भवति। उत्तरं वा उल्बाज्जरायु। जरायुणैवैनं तत्प्रोर्णुवन्ति। मुष्टी कुरुते। मुष्टी वै कृत्वा गर्भोऽन्तः शेते। मुष्टी कृत्वा कुमारो जायते। तद्यन्मुष्टी कुरुते। यज्ञं चैव तत्सर्वाश्च देवता मुष्ट्योः कुरुते। तदाहुर्न पूर्वदीक्षिणः संसवोऽस्ति। परिगृहीतो वा एतस्य यज्ञः। परिगृहीता देवता। नैतस्यार्तिरस्ति। अपरदीक्षिण एव यथा तथेति। उन्मुच्य कृष्णाजिनमवभृथमभ्यवैति। तस्मान्मुक्ता गर्भा जरायोर्जायन्ते। सहैवोल्बेन कुमारो जायते ॥१-३॥

॥ २ ॥

१-६

अथो पञ्चवीर्यं वा एतच्छन्दो यद्विराट्। यत्त्रिपदा तेनोष्णिहागायत्र्यौ। यदस्या एकादशाक्षराणि पदानि तेन त्रिष्टुप्। यत्त्रयस्त्रिंशदक्षरा तेनानुष्टुप्। न वा एकेनाक्षरेण च्छन्दांसि वियन्ति। न द्वाभ्याम्। यद्विराट् तत्पञ्चमम्। सर्वेषां छन्दसां वीर्यमवरुन्धे। सर्वेषां छन्दसां वीर्यमश्नुते। सर्वेषां छन्दसां सायुज्यं सरूपतां सलोकतामश्नुते। अन्नपतिर्भवति। अश्नुते प्रजयाऽन्नाद्यम्। य एवं विद्वान्विराजौ कुरुते। तस्माद्विराजावेव कर्तव्ये। प्रेद्धो अग्न (ऋ० सं० ७-१-३) इमो अग्न (ऋ०

स० ७·१·१८) इत्येते। ऋतं वाव दीक्षा। सत्यं दीक्षा। तस्माद्दीक्षितेन सत्यमेव वदितव्यम्। अथो खल्वाहुः। कोऽर्हति मनुष्यः सर्वं सत्यं वदितुम्। सत्यसंहिता वै देवाः। अनृतसंहिता मनुष्या इति। विचक्षणवतीं वाचं वदेत्। चक्षुर्वै विचक्षणम्। वि ह्येनेन पश्यति। एतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुः। तस्मादाचक्षाणमाहुः। अद्रागिति। स यद्यदर्शमित्याह। अथास्य श्रद्दधति। न बहूनां च नान्येषां श्रद्दधाति। तस्माद्विचक्षणवतीं वाचं वदेत्। सत्योत्तरा हैवास्य वागुदिता भवति ॥१·६॥

॥ ३ ॥

३·२

सोमाय क्रीताय प्रोह्यमाणायानुब्रूहि। इत्याहाध्वर्युः। भद्रादभि श्रेयः प्रेहीत्यन्वाह। अयं वाव लोको भद्रः। तस्मादसावेव लोकः श्रेयान्। स्वर्गमेव तल्लोकं यजमानं गमयति। बृहस्पतिः पुर एता ते अस्त्विति। ब्रह्म वै बृहस्पतिः। ब्रह्मैवास्मा एतत्पुरोगवमकः। न वै ब्रह्मण्वद्रिष्यति। अथेमवस्य वर आ पृथिव्या इति। देवयजनं वै वरं पृथिव्यै। देवयजन एवैनं तदवसाययति। आरे शत्रूंकृणुहि सर्ववीर इति। द्विषन्तमेवास्मै तत्पाप्मानं भ्रातृव्यमपबाधते। अधरं पादयति। सोम यास्ते मयोभुव (ऋ० स० १·९५·९-११) इति तृचं सोम्यं गायत्रमन्वाह सोमे राजनि प्रोह्यमाणे। स्वयैवैनं तद्देवतया स्वेन च्छन्दसा समर्धयति। सर्वे नन्दन्ति यशसाऽऽगतेन ( ऋ० स० १०·७१·१० ) इत्यन्वाह। यशो वै सोमो राजा। सर्वो ह वा एतेन क्रीयमाणेन नन्दति। यश्च यज्ञे लप्स्यमानो भवति। यश्च न। सभासाहेन सख्या सखाय इति। एष वै ब्राह्मणानां सभासाहः सखा यत्सोमो राजा। किल्बिषस्पृदिति। एष उ एव किल्बिषस्पृद्। यो वै भवति। यः श्रेष्ठतामश्नुते। स किल्बिषं भवति। तस्मादाहुः। माऽनुवोचः। मा प्रचारीः। किल्बिषं नु मा यातयन्निति। पितुषणिरिति। अन्नं वै पितु। दक्षिणा वै पितु। तामेनेन सनोति। अन्नसनिमेवैनं तत्करोति। अरंहितो भवति वाजिनायेति। इन्द्रियं वै वीर्यं वाजिनम्। आजरसं हास्मै वाजिनं नापच्छिद्यते। य एवं वेद। आगन्देव ( ऋ० स० ४·५३·७ ) इत्यन्वाह। आगतो हि स तर्हि भवति। ऋतुभिर्वर्धतु क्षयमिति। ऋतवो वै सोमस्य राज्ञो राजभ्रातरः। यथा मनुष्यस्य। तैरेवैनं तत्सहा गमयति। दधातु नः सविता सुप्रजामिषमिति। आशिषमाशास्ते। स नः क्षपाभिरहभिश्च जिन्वत्विति। अहानि वा

अहानि। रात्रयः क्षपाः। अहोरात्रैरेवास्मा एतामाशिषमाशास्ते। प्रजावन्त रायमस्मे समिन्वतु इति। आशिषमेवाशास्ते। या ते धामानि हविषा यजन्ति (ऋ० स० १·९१·१९) इत्यन्वाह। ता ते विश्वा परिभूरस्तु यज्ञम्। गयस्फानः प्रतरणः सुवीर इति। गवां नः स्फावयिता प्रतारयितैधीत्येव तदाह। अवीरहा प्रचरा सोम दुर्यानिति। गृहा वै दुर्याः। बिभ्यति वै सोमाद्राज्ञ आयतो यजमानस्य गृहाः। स यदेतामन्वाह। शान्त्यैव। एनं तच्छमयति। सोऽस्य शान्तो न प्रजां न पशून्हिनस्ति। इमां धियं शिक्षमाणस्य देवेति। (ऋ० स० ८·४२·३) वारुण्या परिदधाति वरुणदेवत्यो वा एष तावत्। यावदुपनद्धः। यावत्परिश्रितानि प्रपद्यते। स्वयैवैनं तद्देवतया स्वेन च्छन्दसा समर्धयति। शिक्षमाणस्य देवेति। शिक्षते वा एष यो यजते। क्रतुं दक्षं वरुण सं शिशाधीति। वीर्यं प्रज्ञानं वरुण सं शिशाधीत्येव तदाह। ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेमेति। यज्ञो वै सुतर्मा नौः। कृष्णाजिनं वै सुतर्मा नौः। वाग्वै सुतर्मा नौः। वाचमेव तदारुह्य तया स्वर्गं लोकमभिसन्तरति। ता एता अष्टावन्वाह रूपसमृद्धाः। एतद्वै यज्ञस्य समृद्धम्। यद्रूपसमृद्धम्। यत्कर्म क्रियमाणमृगभिवदति। तासां त्रिः प्रथमामन्वाह। त्रिरुत्तमाम्। ता द्वादश संपद्यते। द्वादश वै मासाः संवत्सरः प्रजापतिः। प्रजापत्यायतनाभिरेवाभी राध्नोति। य एवं वेद। त्रिः प्रथमां त्रिरुत्तमामन्वाह। यज्ञस्यैव तद्बर्सौ नह्यति। स्थेम्ने बलायाविस्रंसाय ॥३·२॥

॥ ४ ॥

३·३

अन्यतरोऽनड्वान्युक्तः स्यादन्यतरो विमुक्तः। अथ राजानमुपावहरेयुः। यदुभयोर्विमुक्तयोरुपावहरेयुः। पितृदेवत्यं राजानं कुर्युः। यद्युक्तयोः। अयोगक्षेमः। प्रजा विन्देत्ताः प्रजाः परिप्लवेरन्। योऽनड्वान्विमुक्तः। तच्छालासदां पशूनां रूपम्। यो युक्तः। तच्च क्रियाणाम्। ते ये युक्तेऽन्ये विमुक्तेऽन्य उपावहरन्ति। उभावेव ते योगक्षेमं कल्पयन्ति। देवासुरा वा एषु लोकेषु समयतन्त। त एतस्यां प्राच्यां दिश्ययतन्त। तांस्ततोऽसुरा अजयन्। ते दक्षिणस्यां दिश्ययतन्त। तांस्ततोऽसुरा अजयन्। ते प्रतीच्यां दिश्ययतन्त। तांस्ततोऽसुरा अजयन्। त उदीच्यां दिश्ययतन्त। तांस्ततोऽसुरा अजयन्। त उदीच्यां प्राच्यां दिश्ययतन्त। ते ततो न पराजयन्त। सैषा दिगपराजिता।

तस्मादेतस्यां दिशि यतेत वा यातयेद्वा। ईश्वरो ह्यनृणा कर्तोः। ते देवा अब्रुवन्। अराजतया वै नो जयन्ति। राजानं करवामहा इति। तथेति। ते सोमं राजानमकुर्वन्। सोमेन राज्ञा सर्वा दिशोऽजयन्। एष वै सोमो राजा यो यजते। प्राचि तिष्ठत्यादधति। तेन प्राचीं दिशं जयति। तं दक्षिणा परिवहन्ति। तेन दक्षिणां दिशं जयति। तं प्रत्यञ्चमावर्तयन्ति। तेन प्रतीचीं दिशं जयति। तमुदीचस्तिष्ठत उपावहरन्ति। तेनोदीचीं दिशं जयति। सोमेन राज्ञा सर्वा दिशो जयति। य एवं वेद ॥३-३॥

॥ ५ ॥

३.४

हविरातिथ्यं निरुप्यते सोमे राजन्यागते। सोमो वै राजा यजमानस्य गृहानागच्छति। तस्मा एतद्धविरातिथ्यं निरुप्यते। तदातिथ्यस्यातिथ्यत्वम्। नवकपालो भवति। नव वै प्राणाः। प्राणानां क्लृप्त्यै। प्राणानां प्रतिप्रज्ञात्यै। वैष्णवो भवति। विष्णुर्वै यज्ञः। स्वयैनं तद्देवतया स्वेन च्छन्दसा समर्धयति। सर्वाणि वाव च्छन्दांसि च पृष्ठानि च सोमं राजानं क्रीतमन्वायन्ति। यावन्तः खलु वै राजानमनुयन्ति। तेभ्यः सर्वेभ्य आतिथ्यं क्रियते। अग्निं मन्थन्ति। सोमे राजन्यागते। तद्यथैवादो मनुष्यराज आगतेऽन्यस्मिन्वाऽर्हत्युक्षाणं वा वेहतं वा क्षदन्ते। एवमेवास्मा एतत्क्षदन्ते। यदग्निं मन्थन्ति। अग्निर्हि देवानां पशुः॥३-४॥

॥ ६ ॥

६.१

यज्ञेन वै देवा ऊर्ध्वाः स्वर्गं लोकमायन्। तेऽबिभयुः। इमं नो दृष्ट्वा मनुष्याश्च ऋषयश्चानु प्रज्ञास्यन्तीति। तं वै यूपेनैवायोपयन्। तं यद्यूपेनैवायोपयन्। तद्यूपस्य यूपत्वम्। तमवाचीनाग्रं निमित्योर्ध्वा उदायन्। ततो वै मनुष्याश्च ऋषयश्च देवानां यज्ञवास्त्वभ्यायन्। यज्ञस्य किञ्चिदेषिष्यामः प्रज्ञात्या इति। ते वै यूपमेवाविन्दन्नवाचीनाग्रं निमितम्। ते विदुरनेन वै देवा यज्ञमयूयुपन्निति। तमुत्खायोर्ध्वं न्यमिन्वन्। ततो वै ते प्र यज्ञमजानन्। प्र स्वर्गं लोकम्। तद्यद्यूप ऊर्ध्वो निमीयते यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै। वज्रो वा एष यद्यूपः। सोऽष्टाश्रिः कर्तव्यः। अष्टाश्रिर्वै वज्रः। तं तं प्रहरति द्विषते भ्रातृव्याय वधम्। योऽस्य स्तृत्यस्तस्मै स्तर्तवै। वज्रो वै यूपः। स एष द्विषतो वध

उद्यतस्तिष्ठति। तस्माद्धाप्येतर्हि यो द्वेष्टि तस्याप्रियं भवति अमुष्यायं यूपोऽमुष्यायं यूप इति दृष्ट्वा। खादिरं यूपं कुर्वीत स्वर्गकामः। खादिरेण वै यूपेन देवाः स्वर्गं लोकमजयन्। तथैवैतद्यजमानः खादिरेण यूपेन स्वर्गं लोकं जयति। बैल्वं यूपं कुर्वीतान्नाद्यकामः पुष्टिकामः। समां समां वै बिल्वो गृभीतः। तदन्नाद्यस्य रूपम्। आमूलाच्छाखाभिरनुचितः। तत्पुष्टेः। पुष्यति प्रजां च पशूंश्च। य एवं विद्वान्बैल्वं यूपं कुरुते। यदेव बैल्वाऽ३म्। बिल्वं ज्योतिरिति वा आचक्षते। ज्योतिः स्वेषु भवति। श्रेष्ठः स्वानां भवति। य एवं वेद। पालाशं यूपं कुर्वीत तेजस्कामो ब्रह्मवर्चसकामः। तेजो वै ब्रह्मवर्चसं वनस्पतीनां पलाशः। तेजस्वी ब्रह्मवर्चसी भवति। य एवं विद्वान्पालाशं यूपं कुरुते। यदेव पालाशाऽ३म्। सर्वेषां वा एष वनस्पतीनां योनिर्यत्पलाशः। तस्मात्पलाशस्यैव पलाशेनाचक्षते। अमुष्य पलाशममुष्य पलाशमिति। सर्वेषां हास्य वनस्पतीनां काम उपाप्तो भवति। य एवं वेद ॥६-१॥

॥ ७ ॥

६.८

पुरुषं वै देवाः पशुमालभन्त। तस्मादालब्धान्मेध उदक्रामत्। सोऽश्वं प्राविशत्। तस्मादश्वो मेध्योऽभवद्। अथैनमुत्क्रान्तमेधमत्यार्जन्त। स किम्पुरुषोऽभवत्। तेऽश्वमालभन्त। सोऽश्वादालब्धादुदक्रामत्। स गां प्राविशत्। तस्माद्गौर्मेध्योऽभवद्। अथैनमुत्क्रान्तमेधमत्यार्जन्त। स गौरमृगोऽभवत्। ते गामालभन्त। स गोरालब्धादुदक्रामत्। सोऽविं प्राविशत्। तस्मादविर्मेध्योऽभवद्। अथैनमुत्क्रान्तमेधमत्यार्जन्त। स गवयोऽभवत्। तेऽविमालभन्त। सोऽवेरालब्धादुदक्रामत्। सोऽजं प्राविशत्। तस्मादजो मेध्योऽभवद्। अथैनमुत्क्रान्तमेधमत्यार्जन्त। स उष्ट्रोऽभवत्। सोऽजे ज्योक्तमामिवारमत। तस्मादेष एतेषां पशूनां प्रयुक्ततमो यदजः। तेऽजमालभन्त। सोऽजादालब्धादुदक्रामत्। स इमां प्राविशत्। तस्मादियं मेध्याऽभवद्। अथैनमुत्क्रान्तमेधमत्यार्जन्त। स शरभोऽभवत्। त एत उत्क्रान्तमेधा अमेध्याः पशवः। तस्मादेतेषां नाश्नीयात्। तमस्यामन्वगच्छन्। सोऽनुगतो व्रीहिरभवत्। तद्यत्पशौ पुरोळाशमनुनिर्वपन्ति। समेधेन नः पशुनेष्टमसत्। केवलेन नः पशुनेष्टमसदिति। समेधेन हास्य पशुनेष्टं भवति। केवलेन हास्य पशुनेष्टं भवति। य एवं वेद ॥६-८॥

॥ ८ ॥

७.१

* देवा वै यज्ञमतन्वत। तांस्तन्वानानसुरा अभ्यायन्यज्ञवेशसमेषां करिष्याम इति। तानाप्रीते पशौ पुर इव पर्यग्नेर्यूपं प्रति पुरस्तादुपायन्। ते देवाः प्रतिबुध्याग्निमयीः पुरस्त्रिपुरं पर्यास्यन्त। यज्ञस्य चात्मनश्च गुप्त्यै। ता एषामिमा अग्निमय्यः पुरो दीप्यमाना भ्राजमाना अतिष्ठन्। ता असुरा अनपधृष्यैवापाद्रवन्। तेऽग्निनैव पुरस्तादसुररक्षांस्यपाघ्नत। अग्निना पश्चात्। तथैवैतद्यजमानाः। यत्पर्यग्नि कुर्वन्ति। अग्निमयीरेव तत्पुरस्त्रिपुरं पर्यस्यन्ते। यज्ञस्य चात्मनश्च गुप्त्यै। तस्मात्पर्यग्नि कुर्वन्ति। तस्मात्पर्यग्नयेऽन्वाह। तं वा एतं पशुमाप्रीतं सन्तं पर्यग्निकृतमुदञ्चं नयन्ति। तस्योल्मुकं पुरस्ताद्धरन्ति। यजमानो वा एष निदानेन यत्पशुः। अनेन ज्योतिषा यजमानः पुरोज्योतिः स्वर्गं लोकमेष्यतीति। तेन ज्योतिषा यजमानः पुरोज्योतिः स्वर्गं लोकमेति। तं यत्र निहनिष्यन्तो भवन्ति। तदध्वर्युर्बर्हिरधस्तादुपास्यति। यदेवैनमद आप्रीतं सन्तं पर्यग्निकृतं बहिर्वेदि नयन्ति। बर्हिषदमेवैनं तत्कुर्वन्ति। तस्योवध्यगोहं खनन्ति। औषधं वा ऊवध्यम्। इयं वा ओषधीनां प्रतिष्ठा। तदेनत्स्वायामेव प्रतिष्ठायामन्ततः प्रतिष्ठापयन्ति। तदाहुः। यदेष हविरेव यत्पशुः। अथास्य बह्वपैति। लोमानि त्वगसृक्कुष्ठिकाः शफा विषाणे स्कन्दति पिशितम्। केनास्य तदापूर्यत इति। यदेवैतत्पशौ पुरोळाशमनुनिर्वपन्ति। तेनैवास्य तदापूर्यते। पशुभ्यो वै मेधा उदक्रामन्। तौ व्रीहिश्चैव यवश्च भूतावजायेताम्। तद्यत्पशौ पुरोळाशमनुनिर्वपन्ति। समेधेन नः पशुनेष्टमसत्। केवलेन नः पशुनेष्टमसत्। समेधेन हास्य पशुनेष्टं भवति। केवलेन हास्य पशुनेष्टं भवति। य एवं वेद ॥७-१॥

॥ ९ ॥

७.२

तस्य वपामुत्खिद्याहरन्ति। तामध्वर्युः स्रुवेणाभिघारयन्नाह। स्तोकेभ्योऽनुब्रूहीति। तद्यत्स्तोकाश्चोतन्ति। सर्वदेवत्या वै स्तोकाः। नेन्म इमेऽनभिप्रीता देवान्गच्छानिति। जुषस्व सप्रथस्तमम् (ऋ० स० १-७५-१) इत्यन्वाह। वचो देवप्सरस्तमम्। हव्या जुह्वान आसनीति। अग्नेरेवैनांस्यदास्ये जुहोति। इमं नो यज्ञममृतेषु धेहीति (ऋ० स० ६-२१) सूक्तमन्वाह। इमा हव्या जातवेदो जुषस्वेति।

हव्यजुष्टिमेवाशास्ते। स्तोकानामग्ने मेदसो घृतस्येति। मेदसश्च हि घृतस्य च भवन्ति। होतः प्राशानप्रथमो निषद्येति। अग्निर्वै देवानां होता। अग्ने प्राशान प्रथमो निषद्येत्येव तदाह। घृतवन्तः पावकः ते स्तोकाश्चोतन्ति मेदस इति। मेदसश्च ह्येव हि घृतस्य च भवन्ति। स्वधर्मन्देववीतये श्रेष्ठं नो धेहि वार्यमिति। आशिषमाशास्ते। तुभ्यं स्तोका घृतश्चुतोऽग्ने विप्राय सन्त्येति। घृतश्चुतो हि भवन्ति। ऋषिः श्रेष्ठः समिध्यसे घृतस्य प्राविता भवेति। यज्ञसमृद्धिमाशास्ते। तुभ्यं श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्येति। मेदसश्च ह्येव हि घृतस्य च भवन्ति। कविशस्तो बृहता भानुनाऽऽगा हव्या जुषस्व मेधिरेति। हव्यजुष्टिमेवाशास्ते। ओजिष्ठं ते मध्यतो मेद उद्भृतं प्र ते वयं ददामहे। श्चोतन्ति ते वसो स्तोका अधि त्वचि प्रति तान्देवशो वीहीति। अभ्येवैनांस्तद्वषट् करोति। यथा सोमस्याग्ने वीहीति। तद्यत्स्तोकाश्चोतन्ति। सर्वदेवत्या वै स्तोकाः। तस्मादियं स्तोकशो वृष्टिर्विभक्तोपाचरति ॥७-२॥

॥ १० ॥

९.१

देवा वै सोमस्य राज्ञोऽग्रपेये न समपादयन्। अहं प्रथमः पिबेयम् अहं प्रथमः पिबेयमित्येवाकामयन्त। ते संपादयन्तोऽब्रुवन्। हन्ताऽजिमयाम। स यो न उज्जेष्यति। स प्रथमः सोमस्य पास्यतीति। तथेति। त आजिमयुः। तेषामाजिं यतामभिसृष्टानां वायुर्मुखं प्रथमः प्रत्यपद्यत। अथेन्द्रः। अथ मित्रावरुणौ। अथाश्विनौ। सोऽवेदिन्द्रः। वायुर्वै जयतीति। तमनुपरापतत्। सह नावथोज्जयावेति। स नेत्यब्रवीद्। अहमेवोज्जेष्यामीति। तृतीयं मे। अथोज्जयावेति। नेति हैवाब्रवीद्। अहमेवोज्जेष्यामीति। तुरीयं मे। अथोज्जयावेति। तथेति। तं तुरीयेऽत्यार्जत। तत्तुरीयभागिन्द्रोऽभवत्। त्रिभाग्वायुः। तौ सहैवेन्द्रवायू उदजयताम्। सह मित्रावरुणौ। सहाश्विनौ। त एवामेते यथोज्जितं भक्षाः। इन्द्रवाय्वोः प्रथमः। अथ मित्रावरुणयोः। अथाश्विनोः। स एष इन्द्रतुरीयो ग्रहो गृह्यते। यदैन्द्रवायवः। तदेतदृषिः पश्यन्नभ्यनूवाच। नियुत्वाँ इन्द्रसारथिरिति। तस्माद्धाप्येतर्हि भरताः सत्वनां वित्तिं प्रयन्ति। तुरीये हैव संग्रहीतारो वदन्ते। अमुनैवानूकाशेन। यदद इन्द्रः सारथिरिव भूत्वोदजयत ॥९-१।

॥ ११ ॥

९.७

देवा वै यदेव यज्ञेऽकुर्वन्। तदसुरा अकुर्वन्। ते समावद्वीर्या आसन्। न

व्यावर्तन्त। ततो वै देवा एतं तूष्णींशंसमपश्यन्। तमेषामसुरा नान्ववायन्। तूष्णींसारो वा एषः। यत्तूष्णींशंसः। देवा वै यं यमेव वज्रमसुरेभ्य उदयच्छन्। तं तमेषामसुराः प्रत्यबुध्यन्त। ततो वै देवा एतं तूष्णींशंसं वज्रमपश्यन्। तमेभ्य उदयच्छन्। तमेषामसुरा न प्रत्यबुध्यन्त। तमेभ्यः प्राहरन्। तेनैनानप्रतिबुद्धेनाघ्नन्। ततो वै देवा अभवन्। पराऽसुरा भवन्ति। आत्मना पराऽस्य द्विषन्पाप्मा भ्रातृव्यो भवति। य एवं वेद। ते वै देवा विजितिनो मन्यमाना यज्ञमतन्वत। तमेषामसुरा अभ्यायन्यज्ञवेशसमेषां करिष्याम इति। तान्समन्तमेवोदारान्परियत्तानुदपश्यन्। तेऽब्रुवन्त्संस्थापयामेमं यज्ञम्। यज्ञं नोऽसुरा मा वधिषुरिति। तथेति। तं तूष्णींशंसे संस्थापयन्। भूरग्निर्ज्योतिर्ज्योतिरग्निरित्याज्यप्रउगे संस्थापयन्। इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्र इति निष्केवल्यमरुत्वतीये संस्थापयन्। सूर्यो ज्योतिर्ज्योतिः स्वः सूर्य इति वैश्वदेवाग्निमारुते संस्थापयन्। तमेवं तूष्णींशंसे संस्थापयन्। तमेवं तूष्णींशंसे संस्थाप्य तेनारिष्टेनोदृचमाश्नुवत। स तदा वाव यज्ञः संतिष्ठते। यदा होता तूष्णींशंसं शंसति। स य एवं शस्ते तूष्णींशंसे उप वा वदेद्। अनु वा व्याहरेत्। तं ब्रूयाद्। एष एवैतामार्तिमारिष्यति। प्रातर्वाव वयमद्येमं शस्ते तूष्णींशंसे संस्थापयामः। ते यथा गृहानितं कर्मणाऽनुसमियाद्। एवमेवैनमिदमनुसमिम इति। स ह वाव तामार्तिमृच्छति। य एवं विद्वान्संशस्ते तूष्णींशंस उप वा वदति। अनु वा व्याहरति। तस्मादेवं विद्वान्संशस्ते तूष्णींशंसे नोपवदेत्। नानु व्याहरेत् ॥९·७॥

॥ १२ ॥
१०·५

देवरथो वा एष यद्यज्ञः। तस्यैतावन्तरौ रश्मी यदाज्यप्रउगे। तद्यदाज्येन पवमानमनुशंसति। प्रउगेणाज्यम्। देवरथस्यैव तदन्तरौ रश्मी विहरत्यलोभाय। तामनुकृति मनुष्यरथस्यैवान्तरौ रश्मी विहरन्त्यलोभाय। नास्य देवरथो लुभ्यति। न मनुष्यरथः। य एवं वेद। तदाहुर्यथा वाव स्तोत्रमेवं शस्त्रम्। पावमानीषु सामगाः स्तुवते। आग्नेयं होताऽऽज्यं शंसति। कथमस्य पावमान्योऽनुशस्ता भवन्तीति। यो वा अग्निः स पवमानः। तदप्येतदृषिणोक्तम्। अग्निरृषिः पवमान ( ऋ० स० ९·६५·२० ) इति। एवमु हास्याग्नेयोभिरेव प्रतिपद्यमानस्य पावमान्योऽनुशस्ता भवन्ति। तदाहुर्यथा वाव स्तोत्रमेवं शस्त्रम्। गायत्रीषु सामगाः स्तुवते। आनुष्टुभं होताऽऽज्यं शंसति। कथमस्य गायत्र्योऽनुशस्ता

भवन्तीति। संपदेति ब्रूयात्। सप्तैता अनुष्टुभः। तास्त्रिः प्रथमया त्रिरुत्तमयैकादश भवन्ति। विराड्याज्या द्वादशी। न वा एकेनाक्षरेण छन्दांसि वियन्ति। न द्वाभ्याम्। ताः षोडश गायत्र्यो भवन्ति। एवमु हास्यानुष्टुब्भिरेव प्रतिपद्यमानस्य गायत्र्योऽनुशस्ता भवन्ति। अग्न इन्द्रश्च दाशुषो दुरोणे (ऋ० सं० ३-२५-४) इत्याग्नेन्द्र्या यजति। न वा एताविन्द्राग्नी सन्तौ व्यजयेताम्। आग्नेन्द्रौ वा एतौ सन्तौ व्यजयेताम्। तद्यदाग्नेन्द्र्या यजति। विजित्या एव। सा विराट् त्रयस्त्रिंशदक्षरा भवति। त्रयस्त्रिंशद्वै देवाः। अष्टौ वसवः। एकादश रुद्राः। द्वादशादित्याः। प्रजापतिश्च वषट्कारश्च। तत्प्रथम उक्थमुखे देवता अक्षरभाजः करोति। अक्षरमक्षरमेव तद्देवता अनुप्रपिबन्ति। देवपात्रेणैव तद्देवतास्तृप्यन्ति। तदाहुर्यथा वाव शस्त्रमेवं याज्या। आग्नेयं होताऽऽज्यं शंसति। अथ कस्मादाग्नेन्द्र्या यजतीति। या वा आग्नेन्द्री। ऐन्द्राग्नी वै सा। सैन्द्राग्नमेतदुक्थं ग्रहेण च तूष्णींशंसेन च। इन्द्राग्नी आगतं सुतं गीर्भिर्नभो वरेण्यम्। अस्य पातं धियेषितेति। (ऋ० सं० ३-१२-१) ऐन्द्राग्नमध्वर्युर्ग्रहं गृह्णाति। भूरग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रः सूर्यो ज्योतिर्ज्योतिः स्वः सूर्य इति होता तूष्णींशंसं शंसति। तद्यथैव शस्त्रमेवं याज्या ॥१०-५॥

॥ १३ ॥

२२.९

नाभानेदिष्ठं शंसति। नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन्। सोऽब्रवीदेत्य। किं मह्यमभाक्तेति। एतमेव निष्ठावमववदितारमित्यब्रुवन्। तस्माद्धाप्येतर्हि पितरं पुत्रा निष्ठावोऽववदितेत्येवाचक्षते। स पितरमेत्याब्रवीत्। त्वां ह वाव मह्यं तताभाक्षुरिति। तं पिताब्रवीत्। मा पुत्रक तदादृथाः। अङ्गिरसो वा इमे स्वर्गाय लोकाय सत्रमासते। ते षष्ठं षष्ठमेवाहरागत्य मुह्यन्ति। तानेते सूक्ते षष्ठेऽहनि शंसय। तेषां यत्सहस्रं सत्रपरिवेषणम्। तत्ते स्वर्यन्तो दास्यन्तीति। तथेति। तानुपैत्। प्रतिगृभ्णीत मानवं सुमेधसः (ऋ० सं० १०-६२-१) इति। तमब्रुवन्। किंकामो वदसीति। इदमेव वः षष्ठमहः प्रज्ञापयानीत्यब्रवीद्। अथ यद्व एतत्सहस्रं सत्रपरिवेषणम्। तन्मे स्वर्यन्तो दत्तेति। तथेति। तानेते सूक्ते षष्ठेऽहन्यशंसयत्। ततो वै ते प्र यज्ञमजानन्। प्र स्वर्गं लोकम्। तद्यदेते सूक्ते षष्ठेऽहनि शंसति। यज्ञस्य प्रज्ञात्यै। स्वर्गस्य लोकस्यानुख्यात्यै। तं स्वर्यन्तोऽब्रुवन्। एतत्ते ब्राह्मण सहस्रमिति। तदेनं समाकुर्वाणं पुरुषः कृष्णश-

वास्युत्तरत उपोत्थायाब्रवीत्। मम वा इदं मम वै वास्तुहमिति। सोऽब्रवीत्। मह्यं वा इदमदुरिति तमब्रवीत्। तद्वै नौ तवैव पितरि प्रश्न इति। स पितरमैत्। तं पिताब्रवीत्। ननु ते पुत्रकादू३रिति। अदुरेव म इत्यब्रवीत्। तत्तु मे पुरुषः कृष्णशवा स्युत्तरत उपोदतिष्ठन्मम वा इदं मम वै वास्तुहमित्यादितेति। तं पिताऽब्रवीत्। तस्यैव पुत्रक तत्। तत्तु स पुत्रक तुभ्यं दास्यतीति। स पुनरेत्या-तव ह वाव किल भगव इति मे पिताहेति। सोऽब्रवीत्। तदहं तुभ्यमेव ददामि। य ब्रवीत्। एव सत्यमवादीरिति। तस्मादेवंविदुषा सत्यमेव वदितव्यम्। स एव सहस्रसनिर्मन्त्रो यन्नाभानेदिष्ठः। उपैनं सहस्रं नमति। प्र षष्ठेनाह्ना स्वर्गं लोकं जानाति। य एवं वेद ॥२२-९॥

॥ १४ ॥

२४·६

अध्वर्यो इत्याह्वयते चतुर्होतृषु वदिष्यमाणः। तदाहावस्य रूपम्। ओं होत-स्तथा होतरित्यध्वर्युः प्रतिगृणाति। अवसितेऽवसिते दशसु पदेषु। तेषां चित्तिः स्रुगासी३त्। चित्तमाज्यमासी३त्। वाग्वेदिरासी३त्। आधीतं बर्हिरासी३त्। केतो अग्निरासी३त्। विज्ञातमग्नीदासी३त्। सामाध्वर्युरासी३त्। वाच-स्पतिर्होतासी३त्। मन उपवक्तासी३त्। ते वा एतं ग्रहमगृह्णत। वाचस्पते विधे नामन्। विधेम ते नाम। विधेस्त्वमस्माकं नाम्ना द्यां गच्छ। यां देवाः प्रजापतिगृहपतय ऋद्धिमराध्नुवंस्तामृद्धिं रात्स्यामः। अथ प्रजापतेस्तनू-रनुद्रवति। ब्रह्मोद्यं च। अन्नदा च अन्नपत्नी च। अन्नादा तदग्निरन्नपत्नी तदादित्यः। भद्रा च कल्याणी च। भद्रा तत्सोमः। कल्याणी तत्पशवः। अनि-लया चापभया च। अनिलया तद्वायुः। न ह्येष कदाच नेलयति। अपभया तन्मृत्युः। सर्वं ह्येतस्माद्बिभाय। अनाप्ता चानाप्या च। अनाप्ता तत्पृथिवी। अनाप्या तद् द्यौः। अनाधृष्या चाप्रतिधृष्या च। अनाधृष्या तदग्निः। अप्रतिधृष्या तदादित्यः। अपूर्वा चाभ्रातृव्या च। अपूर्वा तन्मनः। अभ्रातृव्या तत्संवत्सरः। एता वाव द्वादश प्रजापतेस्तन्वः। एव कृत्स्नः प्रजापतिः। तत्कृत्स्नं प्रजापतिमाप्नोति दशममहः। अथ ब्रह्मोद्यं वदन्ति। अग्निर्गृहपतिरिति हैक आहुः। सोऽस्य लोकस्य गृहपतिः। वायुर्गृहपतिरिति हैक आहुः। सोऽन्तरिक्षलोकस्य गृह-पतिः। असौ वै गृहपतिः। योऽसौ तपति। एष पतिर्ऋतवो गृहाः। येषां वै गृहपतिं देवं विद्वान्गृहपतिर्भवति। राध्नोति स गृहपतिः। राध्नुवन्ति ते यज-

मानाः। येषां वा अपहतपाप्मानं देवं विद्वान्गृहपतिर्भवति। अप स गृहपतिः पाप्मानं हते। अप ते यजमानाः पाप्मानं घ्नते। अध्वर्यो अरात्स्मारात्स्म ॥२४-६॥

॥ १५ ॥

२५.४

वृषशुष्मो ह वातावत उवाच जातूकर्ण्यः। वक्तास्मो वा इदं देवेभ्यः। यद्वैतदग्निहोत्रमुभयेद्युरहूयत। अन्येद्युर्वाव तदेतर्हि हूयत इति। एतदु हैवोवाच कुमारी गन्धर्वगृहीता। वक्तास्मो वा इदं पितृभ्यः। यद्वैतदग्निहोत्रमुभयेद्युरहूयत। अन्येद्युर्वाव तदेतर्हि हूयत इति। एतद्वा अग्निहोत्रमन्येद्युर्हूयते। यदस्तमिते सायं जुहोति। अनुदिते प्रातः। अथैतदग्निहोत्रमुभयेद्युर्हूयते। यदस्तमिते सायं जुहोति। उदिते प्रातः। तस्मादुदिते होतव्यम्। चतुर्विंशे ह वै संवत्सरेऽनुदितहोमी गायत्रीलोकमाप्नोति। द्वादश उदितहोमी। स यदा द्वौ संवत्सरावनुदिते जुहोति। अथ हास्यैको हुतो भवति। अथ य उदिते जुहोति। संवत्सरेणैव संवत्सरमाप्नोति। य एवं विद्वानुदिते जुहोति। तस्मादुदिते होतव्यम्। एष ह वा अहोरात्रयोस्तेजसि जुहोति। योऽस्तमिते सायं जुहोति। उदिते प्रातः। अग्निना वै तेजसा रात्रिस्तेजस्वती। आदित्येन तेजसाऽहस्तेजस्वद्। अहोरात्रयोर्हास्य तेजसि हुतं भवति। य एवं विद्वानुदिते जुहोति। तस्मादुदिते होतव्यम् ॥२५.४॥

॥ १६ ॥

२५.७

प्रजापतिरकामयत प्रजायेय भूयान्स्यामिति। स तपोऽतप्यत। स तपस्तप्त्वेमाँल्लोकानसृजत। पृथिवीमन्तरिक्षं दिवम्। ताँल्लोकानभ्यतपत्। तेभ्योऽभितप्तेभ्यस्त्रीणि ज्योतींष्यजायन्त। अग्निरेव पृथिव्या अजायत। वायुरन्तरिक्षाद्। आदित्यो दिवः। तानि ज्योतींष्यभ्यतपत्। तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त। ऋग्वेद एवाग्नेरजायत। यजुर्वेदो वायोः। सामवेद आदित्यात्। तान्वेदानभ्यतपत्। तेभ्योऽभितप्तेभ्यस्त्रीणि शुक्राण्यजायन्त। भूरित्येव ऋग्वेदादजायत। भुव इति यजुर्वेदात्। स्वरिति सामवेदात्। तानि शुक्राण्यभ्यतपत्। तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्त। अकार उकारो मकार इति। तानेकधा समभरत्। तदेतदोमिति। तस्मादोमोमिति प्रणौति। ओमिति वै स्वर्गो लोकः। ओमित्यसौ। योऽसौ तपति। स प्रजापतिर्यज्ञमतनुत। तमाहरत्। तेना-

यजत। स ऋचैव हौत्रमकरोद्। यजुषाऽऽध्वर्यवम्। साम्नोद्गीथम्। यदेतत्त्रय्यै विद्यायै शुक्रम्। तेन ब्रह्मत्वमकरोत्। स प्रजापतिर्यज्ञं देवेभ्यः संप्रायच्छत्। ते देवा यज्ञमतन्वत। तमाहरन्त। तेनायजन्त। त ऋचैव हौत्रमकुर्वन्। यजुषाऽऽध्वर्यवम्। साम्नोद्गीथम्। यदेवैतत्त्रय्यै विद्यायै शुक्रम्। तेन ब्रह्मत्वमकुर्वन्। ते देवा अब्रुवन्प्रजापतिम्। यदि नो यज्ञ ऋक्त आर्तिः स्याद्। यदि यजुष्टः। यदि सामतः। यद्यविज्ञाता सर्वव्यापद्वा। का प्रायश्चित्तिरिति। स प्रजापतिरब्रवीद्। यदि वो यज्ञ ऋक्त आर्तिर्भवति। भूरिति गार्हपत्ये जुहवाथ। यदि यजुष्टः। भुव इत्याग्नीध्रीये। अन्वाहार्यपचने वा हविर्यज्ञेषु। यदि सामतः। स्वरित्याहवनीये। यद्यविज्ञाता सर्वव्यापद्वा। भूर्भुवःस्वरिति सर्वा अनुद्रुत्याहवनीय एव जुहवाथेति। एतानि ह वै वेदानामन्तः श्लेषणानि। यदेता व्याहृतयः। तद्यथाऽऽत्मनाऽऽत्मानं सन्दध्याद्। यथा पर्वणा पर्व। यथा श्लेष्मणा चर्मण्यं वा। अन्यद्वा विश्लिष्टं संश्लेषयेद्। एवमेवैताभिर्यज्ञस्य विश्लिष्टं सन्दधाति। सैषा सर्वप्रायश्चित्तिर्यदेता व्याहृतयः। तस्मादेषैव यज्ञे प्रायश्चित्तिः कर्तव्या ॥२५·७॥

॥ १७ ॥

२६·१

देवा ह वै सर्वचरौ सत्रं निषेदुः। ते ह पाप्मानं नापजघ्निरे। तान्होवाचार्बुदः काद्रवेयः सर्पऋषिर्मन्त्रकृद्। एका वै वो होत्राऽकृता। तां वोऽहं करवाणि। अथ पाप्मानमपहनिष्यध्व इति। ते ह तथेत्यूचुः। तेषां ह स्म स मध्यन्दिने मध्यन्दिन एवोपोदासर्पद् ग्राव्णोऽभिष्टौति। तस्मान्मध्यन्दिने मध्यन्दिन एव ग्राव्णोऽभिष्टुवन्ति तदनुकृति। स ह स्म येनोपोदासर्पत्। तद्धाप्येतर्ह्यर्बुदोदासर्पणी नाम प्रपदस्ति। तान्ह राजा मदयाञ्चकार। ते होचुः। आशीविषो वै नो राजानमवेक्षते। हन्तास्योष्णीषेणाक्ष्यावपिनह्यामेति। तथेति। तस्य होष्णीषेणाक्ष्यावपिनह्युः। तस्मादुष्णीषमेव पर्यस्य ग्राव्णोऽभिष्टुवन्ति। तदनुकृति। तान्ह राजा मदयामेव चकार। ते होचुः। स्वेन वै नो मन्त्रेण ग्राव्णोऽभिष्टौति। हन्तास्यान्याभिर्ऋग्भिर्मन्त्रमापृणचामेति। तथेति। तस्य हान्याभिर्ऋग्भिर्मन्त्रमापपृचुः। ततो हैनान्न मदयाञ्चकार। तद्यदस्यान्याभिर्ऋग्भिर्मन्त्रमापृञ्चन्ति। शान्त्या एव। ते ह पाप्मानमप जघ्निरे। तेषामन्वपहति सर्पाः पाप्मानमपजघ्निरे। त एतेऽपहतपाप्मानो हित्वा पूर्वां जीर्णां त्वचं नवयैव प्रयन्ति। अप पाप्मानं हते। य एवं वेद ॥२६·१॥

॥ १८ ॥

३५·१

विश्वन्तरो ह सौषद्मनः श्यापर्णान्परिचक्षाणो विश्यापर्णं यज्ञमाजह्रे । तद्धानुबुध्य श्यापर्णास्तं यज्ञमाजग्मुः । ते ह तदन्तर्वेद्यासाञ्चक्रिरे । तान्ह दृष्ट्वोवाच । पापस्य वा इमे कर्मणः कर्तार आसतेऽपूतायै वाचो वदितारो यच्छ्यापर्णाः । इमानुत्थापयत । इमे मेऽन्तर्वेदिमाऽऽसिषतेति । तथेति । तानुत्थापयाञ्चक्रुः । ते होत्थाप्यमाना रुरुविरे । ये तेभ्यो भूतवीरेभ्योऽसितमृगाः कश्यपानां सोमपीथमभिजिग्युः पारिक्षितस्य जनमेजयस्य विकश्यपे यज्ञे । तैस्ते तत्र वीरवन्तः आसुः । कः स्वित्सोऽस्माकास्ति वीरो य इमं सोमपीथमभिजेष्यतीति । अयमहमस्मि वो वीर इति । होवाच रामो मार्गवेयः । रामो हास मार्गवेयः । अनूचानः श्यापर्णीयः । तेषां होत्तिष्ठतामुवाच । अपि नु राजन्नित्थंविदं वेदेरुत्थापयन्तीति । यस्त्वं कथं वेत्थ ब्रह्मबन्धविति ॥३५·१॥

॥ १९ ॥

३५·२

यत्रेन्द्रं देवताः पर्यवृञ्जन् । विश्वरूपं त्वाष्ट्रमभ्यमंस्त । वृत्रमस्तृत । यतीन्सालावृकेभ्यः प्रादाद् । अरुर्मघानवधीद् । बृहस्पतेः प्रत्यवधीदिति । तत्रेन्द्रः सोमपीथेन व्यार्ध्यत । इन्द्रस्यानु व्यृद्धिं क्षत्रं सोमपीथेन व्यार्ध्यत । अपीन्द्रः सोमपीथेऽभवत्त्वष्टुरामुष्य सोमम् । तद्व्यृद्धमेवाद्यापि क्षत्रं सोमपीथेन । स यस्तं भक्षं विद्याद् । यः क्षत्रस्य सोमपीथेन व्यृद्धस्य । येन क्षत्रं समृध्यते । कथं तं वेदेरुत्थापयन्तीति । वेत्थ ब्राह्मण त्वं तं भक्षम् । वेद हीति तं वै नो ब्राह्मण ब्रूहीति । तस्मै वै ते राजन्निति होवाच ॥३५·२॥

॥ २० ॥

३५·३

त्रयाणां भक्षाणामेकमाहरिष्यन्ति । सोमं वा । दधि वा । अपो वा । स यदि सोमम् । ब्राह्मणानां स भक्षः । ब्राह्मणांस्तेन भक्षेण जिन्विष्यसि । ब्राह्मणकल्पस्ते प्रजायामाजनिष्यते । आदाय्यापाय्यावसायी यथाकामप्रयाप्यः । यदा वै क्षत्रियाय पापं भवति । ब्राह्मणकल्पोऽस्य प्रजायामाजायते । ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा ब्राह्मणतामभ्युपैतोः । स ब्रह्मबन्धवेन जिज्यूषितः । अथ यदि दधि । वैश्यानां स भक्षः । वैश्यांस्तेन भक्षेण जिन्विष्यसि । वैश्यकल्पस्ते प्रजायामाज-

निष्यते। अन्यस्य बलिकृदन्यस्याद्यो यथाकामज्येयः। यदा व क्षत्रियाय पापं भवति। वैश्यकल्पोऽस्य प्रजायामाजायते। ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा वैश्यतामभ्युपैतोः। स वैश्यतया जिज्यूषितः। अथ यद्यपः। शूद्राणां स भक्षः। शूद्रांस्तेन भक्षेण जिन्विष्यसि। शूद्रकल्पस्ते प्रजायामाजनिष्यते। अन्यस्य प्रेष्यः कामोत्थाप्यो यथाकामवध्यः। यदा वै क्षत्रियाय पापं भवति। शूद्रकल्पोऽस्य प्रजायामाजायत। ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा शूद्रतामभ्युपैतोः। स शूद्रतया जिज्यूषितः ॥३५.३॥

॥ २१ ॥

३९.७

एतेन ह वा ऐन्द्रेण महाभिषेकेण तुरः कावषेयो जनमेजयं पारिक्षितमभिषिषेच। तस्मादु जनमेजयः पारिक्षितः समन्तं सर्वतः पृथिवीं जयन्परीयाय। अश्वेन च मेध्येनेजे। तदेषाऽभियज्ञगाथा गीयते—

आसन्दीवति धान्यादं रुक्मिणं हरितस्रजम्।
अश्वं बबन्ध सारङ्गं देवेभ्यो जनमेजयः॥ इति।

एतेन ह वा ऐन्द्रेण महाभिषेकेण च्यवनो भार्गवः शार्यातं मानवमभिषिषेच। तस्मादु शार्यातो मानवः समन्तं सर्वतः पृथिवीं जयन्परीयाय। अश्वेन च मेध्येनेजे। देवानां हापि सत्रे गृहपतिरास। एतेन ह वा ऐन्द्रेण महाभिषेकेण सोमशुष्मा वाजरत्नायनः शतानीकं सात्राजितमभिषिषेच। तस्मादु शतानीकः सात्राजितः समन्तं सर्वतः पृथिवीं जयन् परीयाय। अश्वेन च मेध्येनेजे। एतेन ह वा ऐन्द्रेण महाभिषेकेण पर्वतनारदावाम्बष्ठ्यमभिषिषिचतुः। तस्मादाम्बष्ठ्यः समन्तं सर्वतः पृथिवीं जयन् परीयाय। अश्वेन च मेध्येनेजे। एतेन ह वा ऐन्द्रेण महाभिषेकेण पर्वतनारदौ युधांश्रौष्टिमौग्रसैन्यमभिषिषिचतुः। तस्मादु युधांश्रौष्टिरौग्रसैन्यः समन्तं सर्वतः पृथिवीं जयन्परीयाय। अश्वेन च मेध्येनेजे। एतेन ह वा ऐन्द्रेण महाभिषेकेण कश्यपो विश्वकर्माणं भौवनमभिषिषेच। तस्मादु विश्वकर्मा भौवनः समन्तं सर्वतः पृथिवीं जयन्परीयाय। अश्वेन च मेध्येनेजे। भूमिर्ह जगावित्युदाहरन्ति।

न मा मर्त्यः कश्चन दातुमर्हति विश्वकर्मन्भौवन मां दिदासिथ।
निमङ्क्ष्येऽहं सलिलस्य मध्ये मोघस्त एष कश्यपायाससङ्गरः॥ इति।

एतेन ह वा ऐन्द्रेण महाभिषेकेण वशिष्ठः सुदासं पैजवनमभिषिषेच। तस्मादु सुदाः पैजवनः समन्तं सर्वतः पृथिवीं जयन्परीयाय। अश्वेन च मेध्येनेजे। एतेन ह वा ऐन्द्रेण महाभिषेकेण संवर्त आङ्गिरसो मरुत्तमाविक्षितमभिषिषेच। तस्मादु मरुत्त आविक्षितः समन्तं सर्वतः पृथिवीं जयन्परीयाय। अश्वेन च मेध्येनेजे। तदप्येष श्लोकोऽभिगीतः—

मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे।
आविक्षितस्य कामप्रेर्विश्वे देवाः सभासदः॥ इति ॥३९.७॥

॥ २२ ॥

३९.८

एतेन ह वा ऐन्द्रेण महाभिषेकेणोदमय आत्रेयोऽङ्गमभिषिषेच। तस्मादङ्गः समन्तं सर्वतः पृथिवीं जयन् परीयाय। अश्वेन च मेध्येनेजे। स होवाचालोपाङ्गः। दशनागसहस्राणि दश दासीसहस्राणि ददामि ते ब्राह्मण। उप माऽस्मिन्यज्ञे ह्वयस्वेति। तदप्येते श्लोका अभिगीताः—

याभिर्गोभिरुदमयं प्रैयमेधा अयाजयन्।
द्वे द्वे सहस्रे बद्धानामात्रेयो मध्यतोऽददात् ॥१॥
अष्टाशीतिः सहस्राणि श्वेतान्वैरोचनो हयान्।
प्रष्टीन्निश्रुत्य प्रायच्छद्यजमाने पुरोहिते ॥२॥
देशाद्देशात्समोळ्हानां सर्वासामाढ्यदुहितॄणाम्।
दशाददात्सहस्राण्यात्रेयो निष्ककण्ठ्यः ॥३॥
दश नागसहस्राणि दत्त्वाऽऽत्रेयोऽवचत्नुके।
श्रान्तः पारिकुटान्प्रैप्सद्दानेनाङ्गस्य ब्राह्मणः ॥४॥
शतं तुभ्यं शतं तुभ्यमिति स्मैव प्रताम्यति।
सहस्रं तुभ्यमित्युक्त्वा प्राणान्स्म प्रतिपद्यते ॥५॥ इति ॥३९.८॥

॥ २३ ॥

३९.९

एतेन ह वा ऐन्द्रेण महाभिषेकेण दीर्घतमा मामतेयो भरतं दौःषन्तिमभिषिषेच। तस्मादु भरतो दौःषन्तिः समन्तं सर्वतः पृथिवीं जयन्परीयाय। अश्वैरु च मेध्यैरीजे। तदप्येते श्लोका अभिगीताः—

हिरण्येन परीवृतान्कृष्णाञ्छुक्लदतो मृगान् ।
मष्णारे भरतोऽददाच्छतं बद्धानि सप्त च ॥१॥
भरतस्यैष दौःषन्तेरग्निः साचीगुणे चितः ।
यस्मिन्सहस्रं ब्राह्मणा बद्वशो गा विभेजिरे ॥२॥
अष्टासप्ततिं भरतो दौःषन्तिर्यमुनामनु ।
गङ्गायां वृत्रघ्नेऽबध्नात्पञ्चपञ्चाशतं हयान् ॥३॥
त्रयस्त्रिंशच्छतं राजाश्वान् बध्वाय मेध्यान् ।
दौःषन्तिरत्यगाद्राज्ञो मायां मायवत्तरः ॥४॥
महाकर्म भरतस्य न पूर्वे नापरे जनाः ।
दिवं मर्त्य इव हस्ताभ्यां नोदापुः पञ्च मानवाः ॥५॥ इति ।

एतं ह वा ऐन्द्रं महाभिषेकं बृहदुक्थ ऋषिर्दुर्मुखाय पाञ्चालाय प्रोवाच । तस्मादु दुर्मुखः पाञ्चालोऽराजा सन्विद्यया समन्तं सर्वतः पृथिवीं जयन्परीयाय । एतं ह वा ऐन्द्रं महाभिषेकं वासिष्ठः सात्यहव्योऽत्यरातये जानन्तपये प्रोवाच । तस्माद्वत्यरातिर्जानन्तपिरराजा सन्विद्यया समन्तं सर्वतः पृथिवीं जयन्परीयाय । स होवाच वसिष्ठः सात्यहव्यः । अजैषीर्वै समन्तं सर्वतः पृथिवीम् । महन्मा गमयेति । स होवाचात्यरातिर्जानन्तपिः । यदा ब्राह्मणोत्तरान्कुरूञ्जयेयम् । अथ त्वमु हैव पृथिव्य राजा स्याः । सेनापतिरेव तेऽहं स्यामिति । स होवाच वासिष्ठः सात्यहव्यः । देवक्षेत्रं वै तत् । न वै तन्मर्त्यो जेतुमर्हति । अद्रुक्षो वै मे । आ त इदं दद इति । ततो हात्यरातिं जानन्तपिमात्तवीर्यं निःशुक्रममित्रतपनः शुष्मिणः शैब्यो जघान । तस्मादेवंविदुषे ब्राह्मणायैवंचक्रुषे न क्षत्रियो द्रुह्येत् । नेद्राष्ट्राद-वपद्येय । नेद्वा मा प्राणो जहदिति । जहदिति ॥३९·९॥

## २। साङ्ख्यायनं ब्राह्मणम्

॥ १ ॥

२·२

उपसदोऽग्निहोत्रे वेदितव्याः । उन्नीयोत्तरेण गार्हपत्यमुपसादयति । तदिमं लोकमाप्नोति । आहवनीये होष्यन्द्वितीयम् । तदन्तरिक्षलोकमाप्नोति । हुत्वा तृतीयं

तदमुं लोकमाप्नोति। पालाशीं समिधमभ्यादधाति। सोमो वै पलाशः। सा प्रथमा सोमाहुतिः। प्रादेशमात्री भवति। प्रादेशमात्रं हीम आत्मनोऽभि प्राणाः। द्व्यङ्गुलं समिधोऽतिरिच्यानुद्दभन्निवाभिजुहोति। द्व्यङ्गुले वा इदं मुखस्यान्नं धीयते। धूमायन्त्यां ग्रामकामस्य जुहुयात्। ज्वलन्त्यां ब्रह्मवर्चसकामस्य। अङ्गारेषु पशुकामस्य। अभ्याधायेति त्वेव स्थितम्। अत्र ह्येवैते सर्वे कामा उपायन्त इति। उभे आहुती हुत्वा जपति। या यज्ञस्य समृद्धस्याशीः सा मे समृध्यतामिति। या वै यज्ञस्य समृद्धस्याशीः सा यजमानस्य भवति। उत्तरावतीराहुतीर्जुहुयाद्। उत्तरोत्तरेणैव तत्स्वर्गांल्लोकानाप्नोति। स्रुचो बुध्नेनाङ्गारानुपस्पृशति। स्वर्ग एव तं लोके यजमानं दधाति। द्विरुदीचीं स्रुचमुद्यच्छति। रुद्रमेव तत्स्वायां दिशि प्रीत्वाऽवसृजति। तस्माद्धूयमानस्योत्तरतो न तिष्ठेत्। नेदेतस्याघलस्य देवस्य परिप्रार्द्धेऽसानीति। तामुत्तरतः सायमुपमार्ष्टि। प्रतीचीमादित्यं तदस्तं नयति। दक्षिणत ऊर्ध्वां प्रातः। आदित्यं तदुन्नयति। यत्पूर्वमुपमार्ष्टि। तत्कूर्चे निलिम्पति। ओषधींस्तेन प्रीणाति। यद्द्वितीयं तद्दक्षिणेन कूर्चमुत्तानं पाणिं निदधाति। पितॄंस्तेन प्रीणाति। अथ यद्द्विः प्रदेशिन्या प्राश्नाति। गर्भान्पूर्वेण प्रीणाति। तस्मादनश्नन्तो गर्भाः प्राणन्ति। वयांस्युत्तरेण। तस्माद्वयांसि बहु किंचिदिव भक्षयन्ति। श्वेतमिव प्रस्रावयन्ति। अथ यत् स्रुचा भक्षयति। भूतं च तेन भव्यं च प्रीणाति। अथ यत्स्रुचं निर्लेढि। सर्पदेवजनांस्तेन प्रीणाति। अथ यत्स्रुचं मार्जयते। रक्षोदेवजनांस्तेन प्रीणाति। अथ यत्प्रागुदीचीरप उत्सिञ्चति। गन्धर्वाप्सरसस्तेन प्रीणाति। अथ यत्प्रागुदीचीं स्रुचमुद्दिशति। रुद्रमेव तत्स्वायां दिशि दधाति। एवमग्निहोत्रेण सर्वाणि भूतानि प्रीणाति ॥ २-२ ॥

॥ २ ॥

२.९

उदिते होतव्यश्म्। अनुदिते। इति मीमांसन्ते। स य उदिते जुहोति। प्रवसत एवैतन्महते देवायातिथ्यं करोति। अथ योऽनुदिते जुहोति। सन्निहितायैवैतन्महते देवायातिथ्यं करोति। तस्मादनुदिते होतव्यम्। तद्धापि वृषशुष्मो वातावतः पूर्वेषामेको जीर्णिः शयानो रात्र्यामेवोभे आहुती हूयमानं दृष्ट्वोवाच। रात्र्यामेवोभे आहुती जुह्वतीति। रात्र्यां हीति। स होवाच। वक्तास्मोऽन्त्वेव वयममुं लोकं

परेत्य देवेभ्यः। अथो एतन्नः श्रद्धातारो यद्वैवैतदुभयेद्यु रग्निहोत्रमहूयत। अन्येद्यु र्वा तदेतर्हि हूयते राज्यामेवेति। एतदेव कुमारी गन्धर्वगृहीतोवाच। रात्र्यामेवोभे आहुती जुह्वतीति। रात्र्यां हीति। सा होवाच। वक्तास्मोऽन्वेव वयममुं लोकं परेत्य पितृभ्यः। अथो एतन्नः श्रद्धातारो यद्वैवैतदुभयेद्युर-हूयत। अन्येद्युर्वा तदेतर्हि हूयत इति। सन्धौ जुहुयात्। समुद्रो ह वा एष सर्वंहरो यदहोरात्रे। तस्य हैते अगाधे तीर्थे यत्सन्ध्ये। तद्यथाऽगाधाभ्यां तीर्थाभ्यां समुद्रमतीयात्। तादृक्तत्। यत् सन्धौ जुहोति। अथो देवसेना ह वा एषाध्वगा हनिष्यन्ती यदहोरात्रे। तस्या हैते पक्षसी यत्सन्ध्ये। तद्यथा पक्षाभ्यां क्षिप्रमध्वानमन्वियात्। तादृक्तत्। यत् सन्धौ जुहोति। अथो मृत्योर्ह वा एतौ व्राजबाहू यदहोरात्रे। तद्यथा व्राजबाहुभ्यां परिजिग्रहीष्यन्नन्तरेणाति मुच्येत। तादृक्तत्। यत् सन्धौ जुहोति। तदु ह स्माह कौषीतकिः। सायमस्तमिते पुरा तमसस्तस्मिन्काले जुहुयात्। स देवयानः केतुः। तमेवारभ्य स्वस्ति स्वर्गं लोकं समश्नुते। प्रातः पुरोदयादपहते तमसि तस्मिन्काले जुहुयात्। स देवयानः केतुस्तमेवारभ्य स्वस्ति स्वर्गं लोकं समश्नुते। अथ योऽतोऽन्यथाग्निहोत्रं जुहोति। श्यामशबलौ हास्याग्निहोत्रं विषी-दतः। अहर्वै शबलः। रात्रिः श्यामः। स यो महारात्रे जुहोति। श्यामो हास्याग्निहोत्रं विषीदति। अथ यो महाह्ने जुहोति। शबलो हास्याग्निहोत्रं विषीदति। तद्वै खलु यदैव कदाचन जुहुयाद्धुतसमृद्धिमेवोपासीतेति। हुत-समृद्धिमेवोपासीतेति॥ २·९॥

॥ ३॥

५·१

अथातश्चातुर्मास्यानाम्। चातुर्मास्यानि प्रयुञ्जानः फाल्गुन्यां पौर्णमास्यां प्रयुङ्क्ते। मुखं वा एतत्संवत्सरस्य यत्फाल्गुनी पौर्णमासी। मुखमुत्तरे फल्गू। पुच्छं पूर्वे। तद्यथा प्रवृत्तस्यान्तौ समेतौ स्याताम्। एवमेवैतौ संवत्सरस्यान्तौ समेतौ। तद्यत्फाल्गुन्यां पौर्णमास्यां वैश्वदेवेन यजते। मुखत एव तत्संवत्सरं प्रीणाति। अथो भैषज्ययज्ञा वा एते यच्चातुर्मास्यानि। तस्मादृतुसन्धिषु प्रयुज्यन्ते। ऋतुसन्धिषु हि व्याधिर्जायते। तानि वा अष्टौ हवींषि भवन्ति। अष्टौ वै चतसृणां पौर्णमासीनां हवींषि भवन्ति। चतसृणां वै पौर्णमासीनां वैश्वदेवं स मासः। यदग्निर्मथ्यते। प्रजातिर्वै वैश्वदेवम्। तस्मादेतं दैवं गर्भं प्रजनयति।

अथ यत्सप्तदश सामिधेन्यः। सद्वन्तावाज्यभागौ। विराजौ संयाज्ये। तस्योक्तं ब्राह्मणम्। अथ यन्नव प्रयाजाः। नवानुयाजाः। अष्टौ हवींषि। वाजिनं नवमम्। तन्नक्षत्रियां विराजमाप्नोति ॥ ५-१ ॥

॥ ४ ॥

६·१

प्रजापतिः प्रजातिकामस्तपोऽतप्यत। तस्मा त्तप्तात्पञ्चाजायन्त। अग्निर्वायुरादित्यश्चन्द्रमा उषाः पञ्चमी। तानब्रवीत्। यूयमपि तप्यध्वमिति। तेऽदीक्षन्त। तान्दीक्षितांस्तेपानानुषाः प्राजापत्याप्सरोरूपं कृत्वा पुरस्तात्प्रत्युदैत्। तस्यामेषां मनस्समापतत्। ते रेतोऽसिञ्चत। ते प्रजापतिं पितरमेत्याब्रुवन्। रेतो वा असिञ्चामहै। इदं नो मामुया भूदिति। स प्रजापतिर्हिरण्मयं चमसमकरोत्। इषुमात्रमूर्ध्वम्। एवं तिर्यञ्चम्। तस्मिन्नेतत्समसिञ्चत। तत उदतिष्ठत्। सहस्राक्षः सहस्रपात्सहस्रे ण प्रतिहिताभिः ॥ ६·१ ॥

॥ ५ ॥

६·११

तदाहुः। ऋचा होता होता भवति। यजुषाध्वर्युरध्वर्युः। साम्नोद्गातोद्गाता। केन ब्रह्मा ब्रह्मा भवतीति। यमेवामुं त्रय्यै विद्यायै तेजोरसं प्रावृहत्। तेन ब्रह्मा ब्रह्मा भवति। तदाहुः। किंविदं किंछन्दसं ब्रह्माणं वृणीतेति। अध्वर्युमित्येके। स परिक्रमाणां क्षेत्रज्ञो भवतीति। छन्दोगमित्येके। तथा ह्यस्य त्रिभिर्वेदैर्हविर्यज्ञाः संस्क्रियन्त इति। बह्वृचमिति त्वेव स्थितम्। एतत्परिचरणावितरौ वेदौ अत्र च भूयिष्ठा होत्रा आयत्ता भवन्तीन्ति। ऋग्भिर्ग्रहा गृह्यन्ते। ऋक्षु सामानि गीयन्ते। तस्माद्बह्वृच एव स्यात्। तदाहुः कियद्ब्रह्मा यज्ञस्य संस्करोति। कियदन्य ऋत्विज इति। अर्धमिति ब्रूयात्। द्वे वै यज्ञस्य वर्तनी। वाचाऽन्या संस्क्रियते। मनसाऽन्या। सा या वाचा संस्क्रियते। तामन्य ऋत्विजः संस्कुर्वन्ति। अथ या मनसा। तां ब्रह्मा। तस्माद्यावदृचा यजुषा साम्ना कुर्युः। तूष्णीं तावद्ब्रह्माऽऽसीत। अर्धं हि तद्यज्ञस्य संस्करोति ॥ ६-११ ॥

॥ ६ ॥

७.४

अथातः केशिनो दीक्षा। केशी ह दाल्भ्यो दीक्षितो निषसाद। तं ह हिरण्मयः शकुन आपत्योवाच। दीक्षितो वा असि। दीक्षामहं वेद। तां ते ब्रवाणि। सकृद् यजेत्। तस्य क्षयाद्बिभेमि। सकृदिष्टस्याहो त्वमक्षितिं वेत्थ। ब्रूहि तां त्वं मह्य मिति। स ह तथेत्योवाच। तौ ह संप्रोचाते। स ह स आसोलो वा वार्ष्णिः। वृद्ध इटन्वा काव्यः। शिखण्डी वा याज्ञसेनः। यो वा आस। स आस। स होवाच। शरीराणि वा एतयेष्ट्या दीक्षन्ते। या वा इमाः पुरुषे देवताः। यस्यैता दीक्षन्ते। स दीक्षित इति ह स्माह। स यत्राध्वर्युरौद्ग्रभणानि जुहोति। तदुप यजमानः पञ्चाहुतीर्जुहुयात्। मनो मे मनसा दीक्षतां स्वाहेति प्रथमाम्। वाङ् मे वाचा दीक्षतां स्वाहेति द्वितीयाम्। प्रणो मे प्राणेन दीक्षतां स्वाहेति तृतीयाम्। मध्ये प्राणमाह। मध्ये ह्ययं प्राणः। चक्षुर्मे चक्षुषा दीक्षतां स्वाहेति चतुर्थीम्। श्रोत्रं मे श्रोत्रेण दीक्षतां स्वाहेति पञ्चमीम्। तदु ह स्माह कौषीतकिः। न होतव्या अतिरिक्ता आहुतयः स्युः। यद्धूयेरन्। अध्वर्युमेव जुह्वतमन्वारभ्य प्रतीकैरनुमन्त्रयेत। मनो ने मनसा दीक्षतामिति प्रथमाम्। वाङ् मे वाचा दीक्षतामिति द्वितीयाम्। प्राणो मे प्राणेन दीक्षतामिति तृतीयाम्। मध्ये प्राणमाह। मध्ये ह्ययं प्राणः। चक्षुर्मे चक्षुषा दीक्षतामिति चतुर्थीम्। श्रोत्रं मे श्रोत्रेण दीक्षतामित पञ्चमीम्। दीक्षयत्यु हि ता याः पुरुषे देवताः। नो अतिरिक्ता आहुतयो हूयन्त इति। अथ खलु श्रद्धैव सकृदिष्टस्याक्षितिः। स यः श्रद्दधानो यजते। तस्येष्टं न क्षीयते। आपोऽक्षितिः। या इमा एषु लोकेषु। याश्चेमा अध्यात्मन्। स यो महाक्षितिरिति विद्वान्यजते। तस्येष्टं न क्षीयते। एतामु हैव तत्केशी ह दाल्भ्यो हिरण्मयाय शकुनाय सकृदिष्टस्याक्षितिं प्रोवाच। अपराह्णे दीक्षते। अपराह्णे ह वा एष सर्वाणि भूतानि सम्पृक्ते। अपि ह वा एनं रजता अतियन्ति। तस्माल्लोहितायन्निवास्तम्वेति। एतमेवात्मानं दीक्षमाणोऽभि दीक्षते। सर्वेषामेव कामानामाप्त्यै॥ ७.४ ॥

॥ ७ ॥

७.५

प्रायणीयेन वै देवाः प्राणमाप्नुवन्। उदयनीयेनोदानम्। तथा एवतद्यजमानः प्रायणीयेनैव प्राणमाप्नोति। उदयनीयेनोदानम्। तौ वा एतौ प्राणोदानावेव यत्प्रा-

यणीयोदयनीये। तस्माद्य एव प्रायणीयस्यर्त्विजः। त उदयनीयस्य स्युः। समानौ ह्रीमौ प्राणोदानौ ॥ ७-५ ॥

॥ ८ ॥

७·६

प्रायणीयेन ह व देवाः स्वर्गं लोकमभिप्रयाय दिशो न प्र जज्ञुः। तानग्नि-रुवाच। मह्यमेकामाज्याहुतिं जुहुत। अहमेकां दिशं प्रज्ञास्यामीति। तस्मा अजु-हवुः। स प्राचीं दिशं प्राजानात्। तस्मात्प्राञ्चमग्निं प्रणयन्ति। प्राग्यज्ञस्तायते। प्राञ्च उ एवास्मिन्नासीना जुह्वति। एषा हि तस्य दिक्प्रज्ञाता। अथाब्रवीत्सोमः। मह्यमेकामाज्याहुतिं जुहुत। अहमेकां दिशं प्रज्ञास्यामीति। तस्मा अजुहवुः। स दक्षिणां दिशं प्राजानात्। तस्मात्सोमं क्रीतं दक्षिणा परिवहन्ति। दक्षिणा तिष्ठन्नभिषौति। दक्षिणा तिष्ठन्परिदधाति। दक्षिणा एवैनमासीना अभि-षुण्वन्ति। एषा हि तस्य दिक्प्रज्ञाता। अथाब्रवीत्सविता। मह्यमेकामाज्या-हुतिं जुहुत। अहमेकां दिशं प्रज्ञास्यामीति। तस्मा अजुहवुः। स प्रतीचीं दिशं प्राजानात्। असौ वै सविता। योऽसौ तपति। तस्मादेनं प्रत्यञ्चमेवा-हरहर्यन्तं पश्यन्ति। न प्राञ्चम्। एषा हि तस्य दिक्प्रज्ञाता। अथाब्रवीत्पथ्या स्वस्तिः। मह्यमेकामाज्याहुतिं जुहुत। अहमेकां दिशं प्रज्ञास्यामीति। तस्या अजुहवुः। सोदीचीं दिशं प्राजानात्। वाग्वै पथ्या स्वस्तिः। तस्मादुदीच्यां दिशि प्रज्ञाततरा वागुद्यते। उदञ्च उ एव यन्ति वाचं शिक्षितुम्। यो वा तत आगच्छति। तस्य वा शुश्रूषन्त इति ह स्माह। एषा हि वाचो दिक् प्रज्ञाता। अथाब्रवीददितिः। मह्यमेकामन्नस्याहुतिं जुहुत। अहमेकां दिशं प्रज्ञास्यामीति। तस्या अजुहवुः। सोर्ध्वां दिशं प्राजानात्। इयं वा अदितिः। तस्मादस्यामूर्ध्वा ओषधयः। ऊर्ध्वा वनस्पतयः। ऊर्ध्वा मनुष्या उत्तिष्ठन्ति। ऊर्ध्वोऽग्निर्दीप्यते। यदस्यां किञ्चनोर्ध्वमेव तदायत्तम्। एषा हि तस्यै दिक् प्रज्ञाता ॥ ७-६ ॥

॥ ९ ॥

१२·३

माध्यमा हि सरस्वत्यां सत्रमासत। तद्धापि कवषो मध्ये निषसाद। तं हेम उपोदुः। दास्या वै त्वं पुत्रोऽसि। न वयं त्वया सह भक्षयिष्याम इति। स ह

क्रुद्धः प्राद्रवत्। सरस्वतीमेतेन सूक्तेन तुष्टाव। तं हेयमन्वियाय। तत उ हेमे निरागा इव मेनिरे। तं हान्वावृत्योचुः। ऋषे नमस्ते अस्तु। मा नो हिंसीः। त्वं वै नः श्रेष्ठोऽसि। यं त्वेयमन्वेतीति। तं ह ज्ञपयां चक्रुः। तस्य ह क्रोधं विनिन्युः। स एष कवषस्यैव महिमा। सूक्तस्य चानुवेदितः। अथ यत्सह पत्नीभिर्यन्ति। गन्धर्वा ह वा इन्द्रस्य सोममप्सु प्रत्यायिता गोपायन्ति। त उ ह स्त्रीकामाः। ते हासु मनांसि कुर्वते। तद्यथा प्रमत्तानां यज्ञमाहरेद्। एवं तदुपनामुक उ एवैनं यज्ञो भवति। य एवं वेद। ता वै विंशतिमन्वाह। ता विराजमभिसम्पद्यन्ते। वैराजीर्वा आपः। अन्नं विराट्। अन्नमापः। अन्नेन तदन्नाद्यं समर्द्धयति। त्रिः प्रथमया त्रिरुत्तमया चतुर्विंशतिः सम्पद्यन्ते। चतुर्विंशत्यक्षरा गायत्री। गायत्री प्रातःसवनं वहति। तदु ह प्रातः-सवनरूपा न्वाप इति। इति न्वा आपोनप्त्रियस्य ॥ १२-३ ॥

॥ १० ॥

१९·३

स वै माघस्यामावास्यायामुपवसत्युदङ्ङावर्त्स्यन्। उपेमे वसन्ति प्रायणीये-नातिरात्रेण यक्ष्यमाणाः। तदेनं प्रथममाप्नुवन्ति। तं चतुर्विंशेनारभन्ते। तदारम्भ-णीयस्यारम्भणीयत्वम्। स षण्मासानुदङ्ङेति। तमूर्ध्वैः षळहैरनुयन्ति। स षण्मासानुदङ्ङित्वा तिष्ठते दक्षिणावर्त्स्यन्। उपेमे वसन्ति वैषुवतीयेनाह्ना यक्ष्यमाणाः। तदेनं द्वितीयमाप्नुवन्ति। स षण्मासान्दक्षिणैति। तमावृत्तैः षळहैरनुयन्ति। स षण्मासान्दक्षिणेत्वा तिष्ठत उदङ्ङावर्त्स्यन्। उपेमे वसन्ति महाव्रतीयेह्ना यक्ष्यमाणास्तदेनं तृतीयमाप्नुवन्ति। तं यत्त्रिराप्नुवन्ति। त्रेधा विहितो वै संवत्सरः। संवत्सरस्यैवाप्त्यै। तदुतैषापि गीयते। अहोरात्राणि विदधदूर्णावा इव धीर्यः। षण्मासो दक्षिणा नित्यः षळुदङ्ङेति सूर्य इति। षड्ढ्येष उदङ् मासानेति। षड् दक्षिणा। तद्वै न तस्मिन् काले दीक्षेरन्। अनागतं सस्यं भवति। दहरकान्यहानि भवन्ति। संवेपमाना अवभृथादुदा-यन्ति। तस्मादत्र न दीक्षेरन्। चैत्रस्यामावास्याया एकाह उपरिष्टाद्दीक्षेरन्। आगतं शस्यं भवति। महान्त्यहानि भवन्ति। असंवेपमाना अवभृथादुदायन्ति। तस्मादेतत्स्थितम्॥ १९-३ ॥

॥ ११ ॥

२५·१

आपस्तपोऽतप्यन्त। तास्तपस्तप्त्वा गर्भमदधत। तत एव आदित्योऽजायत षष्ठे मासि। तस्मात्सत्रिणः षष्ठे मासि दिवाकीर्त्यमुपयन्ति। स षण्मासानुदङ्ङेति षळावृत्तान्। तस्मात्सत्रिणः षळेवोर्ध्वान्मासो यन्ति षळावृत्तान्। अन्तरेणो ह वा एतमशनाया च पुनर्मृत्युश्च। अपाशनायां च पुनर्मृत्युं च जयन्ति। ये वैषुवतमहरुपयन्ति। तस्यैतानि च्छन्दोरूपाणि सूर्यवद्भानुमज्ज्योतिष्मद्रुक्मवच्चित्रवद्वर्यतवदिति। समुद्रादूर्मिर्मधुमाँ उदारदित्याज्यम्। समुद्राद्धयेषोऽह्नय उदेति। इन्द्र एकं सूर्य एकं जजानेति सूर्यवत्। तदेतस्याह्नो रूपम्। ताः संशस्ता एकविंशतिरनुष्टुभः संपद्यन्ते। एकविंशो वा एषः। य एष तपति। तदेनं स्वेन रूपेण समर्धयति। त्रैष्टुभः प्रउगः। विषुवान्वा एषोऽह्नाम्। विषुवाँश्छन्दसां त्रिष्टुप्। तदेनं स्वेन छन्दसा समर्धयति ॥ २५·१ ॥

॥ १२ ॥

२६·१

द्वात्रिंशी प्रथमो मासः। द्वात्रिंश्युत्तमः। द्वात्रिंशदक्षराऽनुष्टुप्। वागनुष्टुप्। तद्वाचा प्रयन्ति। वाचमनूत्तिष्ठन्ते। अष्टाविंशिनावभितो विषुवन्तं मासौ। अष्टाविंशत्यक्षरोष्णिक्। औष्णिहो ग्रीवाः। अथैतच्छिरो यज्ञस्य यद्विषुवान्। ग्रीवा एव तत्कल्पयित्वा तासु शिरः प्रतिदधति। तदाहुः कतरेषामेषोऽह्नाम्। अवरेषां परेषामिति। नावरेषां न परेषामित्याहुः। उभयेषां वा एषोऽह्नाम्। उभयानि वैतस्यैतान्यहानि। तदाहुः कतिषळहस्संवत्सर इति। षष्टिः षळहाः। षळहशास्तदेतदव्यवलम्बिसंवत्सरायनम्। तद्य एवं संवत्सरस्याहानि युञ्जन्ति। त एतान्कामानृध्नुवन्ति ये संवत्सरे। अथ येऽतोऽन्यथा संवत्सरस्याहानि युञ्जन्ति। न ते तान्कामानृध्नुवन्ति ये संवत्सरे। अथ हैक ऊर्ध्वानेव मासानुपयन्ति। ऊर्ध्वान्यहानि। ऊर्ध्वं वा उभयं संवत्सरं रोहाम इति। मासा एवावर्तेरन्। अहानीत्येके। य एष पृष्ठ्यः षळहः पुनः परस्तात्पर्येति। तेन मासा आवृत्ता इति वदन्तः। तदाहुर्विदूररूपं वा एतयत्त्रिवृच्च त्रयस्त्रिंशश्च स्तोमौ। तद्यथा गिरिशिखराद्गर्तमभिप्रस्कन्देद्। एवं तत्स्तोमकृन्तत्रम्। तस्मादेवाहानि वर्तेरन्। नो मासानस्तोमकृन्तत्रताया इति ॥ २६·१ ॥

॥ १३ ॥

२६-५

अथ ह स्माह। दैवोदासिः प्रतर्दनो नैमिषीयाणां सत्रमुपगम्योपास्यद्विचिकित्सां पप्रच्छ। यद्यतिक्रान्तमुल्बणं सदस्यो बोधयेत। ऋत्विजां वाऽन्यतमो बुध्येत। कथं नोऽनुल्बणं स्यादिति। त उ ह तूष्णीमासुः। तेषामृलीकयुर्वाचस्पतो ब्रह्मास। स होवाच। नाहमेतद्वेद। हन्त पूर्वेषामाचार्यं स्थविरं जातूकर्ण्यं पृच्छानीति। तं ह पप्रच्छ। यद्यतिक्रान्तमुल्बणं कर्ता स्वयं वा बुध्येत। अन्यो वा बोधयेत। कथं तदुल्बणमनुल्बणं भवेत्। पुनर्वचनेन वा मन्त्रस्य होमेन वेति। पुनर्वाच्यो मन्त्र इति ह स्माह जातूकर्ण्यः। तमृलीकयुः पुनः पप्रच्छ। शस्त्रं वा अनुवचनं वा निगदं वा याज्यां वा यद्वान्यत्सर्वं तत्पुनर्ब्रूयादिति। यावन्मात्रमुल्बणं तावद् ब्रूयादृचं वार्द्धर्चं वा पादं वा पदं वा वर्णं वेति ह स्माह जातूकर्ण्यः। अथ ह स्माह कौषीतकिः। न मन्त्रं पुनर्ब्रूयात्। नाहुतिं जुहुयाद्। अनुल्बणमेतदिति ह स्माह कौषीतकिः। यद्धि होतारो यज्ञस्य किञ्चित्तदुल्बणमबुध्यमानाः कुर्वन्ति। सर्वं तदाग्निर्दैवो होता अनुल्बणं करोति। तदेतदृचाभ्युदितम् ॥२६-५॥

॥ १४ ॥

२६-६

यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्त्यासः। अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाँ ऋतुशो यजातीति। यच्चाह। संस्थिते यज्ञेऽयाड्यज्ञं जातवेदा इति। अयाक्षीदिमं यज्ञं जातवेदा इति तदाह। अन्तरः पूर्वो अस्मिन्निषद्येति यदाह। अग्निर्हं वै दैवो होता मानुषाद्धोतुः पूर्वो निषद्य यजत इति तदाह। आशिषमेवोत्तरेणार्द्धर्चेन वदति पूर्वया चर्चा ॥ २६-६ ॥

## ३। शतपथब्राह्मणम्

॥ १ ॥

१-१-४-११-१९

अ॒थ ह॒विष्कृ॑तमु॒द्वाद॑यति। ह॒विष्कृ॒देहि॒ ह॒विष्कृ॒देही॒ति वाग्वै ह॒विष्कृ

द्वाचमेवैतद्विसृजते वागु वै यज्ञस्तद्यज्ञमेवैतत्पुनरुप ह्वयते ॥११॥ तानि वाऽएतानि । चत्वारि वाच एहीति ब्राह्मणस्या गह्या द्रवेति वैश्यस्य च राजन्यबन्धोश्चा धावेति शूद्रस्य स यदेव ब्राह्मणस्य तदाहैतद्धि यज्ञियतममेतदु ह वै वाचः शान्ततमं यदेहीति तस्मादेहीत्येव ब्रूयात् ॥१२॥ तद्ध स्मैतत्पुरा । जायैव हविष्कृदुपोत्तिष्ठति तदिदमप्येतर्हि य एव कश्चोपोत्तिष्ठति स यत्रैष हविष्कृतमुद्वादयति तदेको दृषदुपले समा हन्ति तद्यदेतामत्र वाचं प्रत्युद्वादयति ॥१३॥ मनोर्ह वाऽ ऋषभ आस । तस्मिन्नसुरघ्नी सपत्नघ्नी वाक्प्रविष्टा स तस्य ह स्म श्वसथाद्रवथादसुररक्षसानि मृद्यमानानि यन्ति ते हासुराः समूदिरे पापं बत नोऽयमृषभः सचते कथं न्विमं दभ्नुयामेति किलाताकुली इति हासुरब्रह्मावासतुः ॥१४॥ तौ होचतुः । श्रद्धादेवो वै मनुरावं नु वेदावेति तौ हागत्योचतुर्मनो याजयाव त्वेति केनेत्यनेनर्षभेणेति तथेति तस्यालब्धस्य सा वागपचक्राम ॥१५॥ सा मनोरेव जायां मनावीं प्र विवेश । तस्यै ह स्म यत्र वदन्त्यै शृण्वन्ति ततो ह स्मैवासुररक्षसानि मृद्यमानानि यन्ति ते हासुराः समूदिरऽ इतो वै नः पापीयः सचते भूयो हि मानुषी वाग्वदतीति किलाताकुली हैवोचतुः श्रद्धादेवो वै मनुरावं न्वेव वेदावेति तौ हागत्योचतुर्मनो याजयाव त्वेति केनेत्यनयैव जाययेति तथेति तस्याऽआलब्धायै सा वागप चक्राम ॥१६॥ सा यज्ञमेव यज्ञपात्राणि प्र विवेश । ततो हैनां न शेकतुर्निर्हन्तुँ सैषासुरघ्नी वागुद्वदति स यस्य हैवं विदुष एतामत्र वाचं प्रत्युद्वादयन्ति पापीयाँसो हैवास्य सपत्ना भवन्ति ॥१७॥ स समाहन्ति । कुक्कुटोऽसि मधुजिह्व इति मधुजिह्वो वै स देवेभ्य आसोद्विषजिह्वोऽसुरेभ्यः स यो देवेभ्य आसीः स न एधीत्येवैतदाहैष

मूर्जमा वद त्वया वयँ सङ्घातँ सङ्घातं जेष्मेति नात्र तिरोहितमिवास्ति ॥१८॥ अथ शूर्पमा दत्ते। वर्षवृद्धमसीति वर्षवृद्धं ह्येतद्यदि नडानां यदि वेणूनां यदीषीकाणां वर्षमु ह्येवैता वर्द्धयन्ति ॥१९॥

॥ २ ॥

१.२.५.१—७

देवाश्च वाऽअसुराश्च। उभये प्राजापत्याः पस्पृधिरे ततो देवा अनुव्यमिवासुरथ हासुरा मेनिरेऽस्माकमेवेदं खलु भुवनमिति ॥१॥ ते होचुः। हन्तेमां पृथिवीं वि भजामहै तां विभज्योप जीवामेति तामौक्ष्णैश्चर्मभिः पश्चात्प्राञ्चो विभजमाना अभीयुः ॥२॥ तद्वै देवाः शुश्रुवुः। वि भजन्ते ह वाऽइमामसुराः पृथिवीं प्रेत तदेष्यामो यत्रेमामसुरा वि भजन्ते के ततः स्याम यदस्यै न भजेमहीति ते यज्ञमेव विष्णुं पुरस्कृत्येयुः ॥३॥ ते होचुः। अनु नोऽस्यां पृथिव्यामा भजतास्त्वेव नोऽप्यस्यां भाग इति ते हासुराऽअसूयन्तइवोचुर्यावदेवैष विष्णुरभिशेते तावद्वो दद्म इति ॥४॥ वामनो ह विष्णुरास। तद्देवा न जिहीडिरे महद्वै नोऽदुर्ये नो यज्ञसम्मितमदुरिति ॥५॥ ते प्राञ्चं विष्णुं निपाद्य। छन्दोभिरभितः पर्यगृह्णन्गायत्रेण त्वा छन्दसा परि गृह्णामीति दक्षिणतस्त्रैष्टुभेन त्वा छन्दसा परि गृह्णामीति पश्चाज्जागतेन त्वा छन्दसा परि गृह्णामीत्युत्तरतः ॥६॥ तं छन्दोभिरभितः परिगृह्य। अग्निं पुरस्तात्समाधाय तेनार्चन्तः श्राम्यन्तश्चेरुस्तेनेमाँ सर्वां पृथिवीँ समविन्दन्त तद्यदेनेनेमाँ सर्वाँ समविन्दन्त तस्माद्वेदिर्नाम तस्मादाहुर्यावती वेदिस्तावती पृथिवीत्येतया हीमाँ सर्वाँ समविन्दन्तैवँ ह वाऽइमाँ सर्वाँ सपत्नानाँ संवृङ्क्ते निर्भजत्यस्यै सपत्नान्य एवमेतद्वेद ॥७॥

॥ ३ ॥

१.४.१.१४—१९

तर्हि व्विदेघो माथव आस। सरस्वत्याᳫं स तत एव प्राङ् दहन्न-भीयायेमां पृथिवीं तं गोतमश्च राहूगणो विदेघश्च माथवः पश्चाद्दहन्तमन्वीयतुः स इमाः सर्वा नदीरति ददाह सदानीरेत्युत्तराद्गिरेर्निर्धावति ताᳫं हैव नाति ददाह ताᳫं ह स्म तां पुरा ब्राह्मणा न तरन्त्यनतिदग्धाग्निना वैश्वानरेणेति ॥१४॥ तत एतर्हि। प्राचीनं बहवो ब्राह्मणास्तद्धाक्षेत्रतरमिवास स्रावितरमिवास्वदित-मग्निना वैश्वानरेणेति ॥१५॥ तदु हैतर्हि। क्षेत्रतरमिव ब्राह्मणा उ हि नून-मेनद्यज्ञैरसिष्वदन्त्सापि जघन्ये नैदाघे समिवैव कोपयति तावच्छीतानतिदग्धा ह्यग्निना वैश्वानरेण ॥१६॥ स होवाच। विदेघो माथवः क्वाहं भवानीत्यत एव ते प्राचीनं भुवनमिति होवाच सैषाप्येतर्हि कोसलविदेहानां मर्यादा ते हि माथवाः ॥१७॥ अथ होवाच। गोतमो राहूगणः कथन्नु म आमन्त्र्यमाणो न प्रत्यश्रौषीरिति स होवाचाग्निर्मे वैश्वानरो मुखेऽभूत्स नेन्मे मुखान्निष्पद्यातै तस्मात्ते न प्रत्यश्रौषमिति ॥१८॥ तदु कथमभूदिति। यत्रैव त्वं घृतस्नवीमह इत्यभिव्याहार्षीस्तदेव मे घृतकीर्त्तावग्निर्वैश्वानरो मुखादुदज्वालीत्तं नाशकं धारयितुᳫं स मे मुखान्निरपादीति ॥१९॥

॥ ४ ॥

१.६.२.१—१७

त्वष्टुर्ह वै पुत्रः। त्रिशीर्षा षडक्ष आस तस्य त्रीण्येव मुखान्यासुस्तद्यदेवᳫं-रूप आस तस्माद्विश्वरूपो नाम ॥१॥ तस्य सोमपानमेवैकं मुखमास। सुरा-

पाणमेकमन्यस्मा अशनायैकं तमिन्द्रो द्विद्वेष तस्य तानि शीर्षाणि प्र चिच्छेद ॥२॥ स यत्सोमपानमास। ततः कपिञ्जलः समभवत्तस्मात्स बभ्रुकइव बभ्रुरिव हि सोमो राजा ॥३॥ अथ यत्सुरापाणमास। ततः कलविङ्कः समभवत्तस्मात्सोऽभिमाद्यत्कइव वदत्यभिमाद्यन्निव हि सुरां पीत्वा वदति ॥४॥ अथ यदन्यस्माऽअशनायास। ततस्तित्तिरिः समभवत्तस्मात्स विश्वरूपतमइव सन्त्येव घृतस्तोकाइव त्वन्मधुस्तोकाइव त्वत्पर्णेष्वाश्चुतिता एवꣳरूपꣳ हि स तेनाशनमावयत् ॥५॥ स त्वष्टा चुक्रोध। कुविन्मे पुत्रमवधीदिति सोऽपेन्द्रमेव सोममाजह्रे स यथायꣳ सोमः प्रसुत एवमपेन्द्र एवास ॥६॥ इन्द्रो ह वाऽईक्षाञ्चक्रे। इदं वै मा सोमादन्तर्यन्तीति स यथा बलीयानबलीयस एवमनुपहूत एव यो द्रोणकलशे शुक्र आस तं भक्षयाञ्चकार स हैनञ्जिहिꣳस सोऽस्य विष्वङ्ङेव प्राणेभ्यो दुद्राव मुखाद्धैवास्य न दुद्रावाथ सर्वेभ्योऽन्येभ्यः प्राणेभ्योऽद्रवत्तदद्ः सौत्रामणीतीष्टिस्तस्यां तद्व्याख्यायते यथैनं देवा अभिषज्यन् ॥७॥ स त्वष्टा चुक्रोध। कुविन्मेऽनुपहूतः सोममभक्षदिति स स्वयमेव यज्ञवेशसं चक्रे स यो द्रोणकलशे शुक्रः परिशिष्ट आस तं प्रवर्तयाञ्चकारेन्द्रशत्रुर्वर्धस्वेति सोऽग्निमेव प्राप्य संबभूवान्तरेव सम्बभूवेत्यु हैक आहुः सोऽग्नीषोमावेवाभिसम्बभूव सर्वा विद्याः सर्वं यशः सर्वमन्नाद्यꣳ सर्वाꣳ श्रियꣳ ॥८॥ स यद्वर्तमानः समभवत्। तस्माद्वृत्रोऽथ यदपात्समभवत्तस्मादहिस्तं दनुश्च दनायूश्च मातेव च पितेव च परि जगृहतुस्तस्माद्दानव इत्याहुः ॥९॥ अथ यदब्रवीदिन्द्रशत्रुर्वर्धस्वेति। तस्मादु हैनमिन्द्र एव जघानाथ यद्ध शश्वदवक्ष्यदिन्द्रस्य शत्रुर्वर्धस्वेति शश्वदु ह स एवेन्द्रमहनिष्यत् ॥१०॥ अथ यदब्रवीद्वर्धस्वेति। तस्मादु ह

स्मेषुमात्रमेव तिर्यङ् वर्धतऽइषुमात्रं प्राङ् सोऽवैवावरꣳ समुद्रं दधावैव
पूर्वꣳ स यावत्स आस स हैव तावदन्नाद आस ॥११॥ तस्मै ह स्म पूर्वाह्णे
देवाः। अशनमभि हरन्ति मध्यन्दिने मनुष्या अपराह्णे पितरः ॥१२॥ स वाऽ-
इन्द्रस्तथैव नुत्तश्चरन्। अग्नीषोमाऽउपमन्त्रयाञ्चक्रेऽग्नीषोमौ युवं वै मम स्थो
युवयोरहमस्मि न युवयोरेष किञ्चन कं मऽइमं दस्युं वर्धयथ उप मा वर्तेथा-
मिति ॥१३॥ तौ होचतुः। किमावयोस्ततः स्यादिति ताभ्यामेतमग्नीषोमीयमेकादश-
कपालं पुरोडाशं निरवपत्तस्मादग्नीषोमीय एकादशकपालः पुरोडाशो भवति ॥१४॥
तावेनमुपावर्वृततुः। तावनु सर्वे देवाः प्रेयुः सर्वा विद्याः सर्वं यशः सर्वमन्ना-
द्यꣳ सर्वा श्रीस्तेनेष्ट्वेन्द्र एतदभवद्यदिदमिन्द्र एव उ पौर्णमासस्य बन्धुः स यो
हैवं विद्वान्पौर्णमासेन यजतऽएताꣳहैव श्रियं गच्छत्येवं यशो भवत्येवमन्नादो
भवति ॥ १५ ॥ तदेव खलु हतो वृत्रः। स यथा दृतिर्निष्पीत एवꣳ संलीनः
शिश्ये यथा निर्धूतसक्तुभस्त्रैवꣳ संलीनः शिश्ये तमिन्द्रोऽभ्यादुद्राव हनि-
ष्यन् ॥ १६ ॥ स होवाच। मा नु मे प्रहार्षीस्त्वं वै तदेतर्ह्यसि यदहं व्येव मा कुरु
मामुया भूवमिति स वै मेऽन्नमेधीति तथेति तं द्वेधान्वभिनत्तस्य यत्सौम्यं न्यक्त-
मास तं चन्द्रमसं चकाराथ यदस्यासुर्यमास तेनेमाः प्रजा उदरेणाविध्यत्तस्मादाहु-
र्वृत्र एव तर्ह्यन्नाद आसीद् वृत्र एतर्हीतीदꣳहि यदसावापूर्यतेऽस्मादेवैतल्लोकादा-
प्यायतेऽथ यदिमाः प्रजा अशनमिच्छन्तेऽस्मा एवैतद्वृत्रायोदराय बलिꣳ हरन्ति
स यो हैवमेतं वृत्रमन्नादं वेदान्नादो हैव भवति ॥ १७ ॥

॥ ५ ॥

१.७.२.१—५

ऋणꣳ ह वै जायते योऽस्ति। स जायमान एव देवेभ्य ऋषिभ्यः पितृभ्यो

मनुष्येभ्यः ॥ १ ॥ स यदेव यजेत । तेन देवेभ्य ऋणं जायते तद्ध्येभ्य एतत्करोति यदेनान्यजते यदेभ्यो जुहोति ॥ २ ॥ अथ यदेवानुब्रुवीत । तेनर्षिभ्य ऋणं जायते तद्ध्येभ्य एतत्करोत्यृषीणां निधिगोप इति ह्यनूचानमाहुः ॥ ३ ॥ अथ यदेव प्रजामिच्छेत । तेन पितृभ्य ऋणं जायते तद्ध्येभ्य एतत्करोति यदेषां सन्ततान्यवच्छिन्ना प्रजा भवति ॥ ४ ॥ अथ यदेव वासयेत । तेन मनुष्येभ्य ऋणं जायते तद्ध्येभ्य एतत्करोति यदेनान्वासयते यदेभ्योऽशनं ददाति स य एतानि सर्वाणि करोति स कृतकर्मा तस्य सर्वमाप्तँ सर्वं जितं ॥ ५ ॥

॥ ६ ॥

१·८·१—६

मनवे ह वै प्रातः । अवनेग्यमुदकमाजहुर्यथेदं पाणिभ्यामवनेजनायाहरन्त्येवं तस्यावनेनिजानस्य मत्स्यः पाणीऽ आपेदे ॥ १ ॥ स हास्मै वाचमुवाद । बिभृहि मा पारयिष्यामि त्वेति कस्मान्मा पारयिष्यसीत्यौघ इमाः सर्वाः प्रजा निर्वोढा ततस्त्वा पारयितास्मीति कथं ते भृतिरिति ॥ २ ॥ स होवाच । यावद्वै क्षुल्लका भवामो बह्वी वै नस्तावन्नाष्ट्रा भवत्युत मत्स्य एव मत्स्यं गिलति कुम्भ्यां मात्रे बिभरासि स यदा तामतिवर्धाऽ अथ कर्षूं खात्वा तस्यां मा बिभरासि स यदा तामतिवर्धाऽ अथ मा समुद्रमभ्यवहरासि तर्हि वा अतिनाष्ट्रो भवितास्मीति ॥ ३ ॥ शश्वद्ध झष आस । स हि ज्येष्ठं वर्द्धतेऽथेतिथीं समां तदौघ आगन्ता तन्मा नावमुपकल्प्योपासासै स औघऽ उत्थिते नावमापद्यासै ततस्त्वा पारयितास्मीति ॥४॥ तमेवं भृत्वा समुद्रमभ्यवजहार । स यतिथीं तत्समां परिदिदेश ततिथीँ समां नावमुपकल्प्योपासां चक्रे स औघऽउत्थिते नावमापेदे तँ स

मत्स्य उपन्यापुप्लुवे तस्य शृङ्गे नावः पाशं प्रतिमुमोच तेनैतमुत्तरं गिरिमति दुद्राव ॥५॥ स होवाच । अपीपरं वै त्वा वृक्षे नावं प्रति बध्नीष्व तं तु त्वा मा गिरौ सन्तमुदकमन्तश्छैत्सीद्यावदुदकꣳ समवायात्तावत्तावदन्ववसर्पासीति स ह तावत्तावदेवान्ववससर्प तदप्येतदुत्तरस्य गिरेर्मनोरवसर्पणमित्यौघो ह ताः सर्वाः प्रजा निरुवाहाथेह मनुरेवैकः परिशिशिषे ॥६॥

॥ ७ ॥

२.१.२.१—१९

कृत्तिकास्वग्नीऽआदधीत । एता वाऽअग्निनक्षत्रं यत्कृत्तिकास्तद्धै सलोम योऽग्निनक्षत्रेऽग्नी आदधातै तस्मात्कृत्तिकास्वादधीत ॥१॥ एकं द्वे त्रीणि । चत्वारीति वाऽअन्यानि नक्षत्राण्यथैता एव भूयिष्ठा यत्कृत्तिकास्तद्भूमानमेवैतदुपैति तस्मात्कृत्तिकास्वादधीत ॥२॥ एता ह वै प्राच्यै दिशो न च्यवन्ते । सर्वाणि ह वाऽअन्यानि नक्षत्राणि प्राच्यै दिशश्च्यवन्ते तत्प्राच्यामेवास्यैतद्दिश्याहितौ भवतस्तस्मात्कृत्तिकास्वादधीत ॥३॥ अथ यस्मान्न कृत्तिकास्वादधीत । ऋक्षाणाꣳ ह वा एता अग्रे पत्न्य आसुः सप्तर्षीनु ह स्म वै पुरर्क्षा इत्याचक्षते ता मिथुनेन व्यार्ध्यन्तामी ह्युत्तराहि सप्तर्षय उद्यन्ति पुर एता अशमिव वै तद्यो मिथुनेन व्यृद्धः सनेन्मिथुनेन व्यृध्या इति तस्मान्न कृत्तिकास्वादधीत ॥४॥ तद्वेव दधीत । अग्निर्वाऽएतासां मिथुनमग्निनैता मिथुनेन समृद्धास्तस्माद्वेव दधीत ॥५॥ रोहिण्यामग्नीऽआदधीत । रोहिण्याꣳह वै प्रजापतिः प्रजाकामोऽग्नीऽआदधे स प्रजा असृजत ता अस्य प्रजाः सृष्टा एकरूपा उपस्तब्धा-

स्तस्थ रोहिण्य इवैव तद्वै रोहिण्यै रोहिणीत्वं बहुर्हैव प्रजया पशुभि-र्भवति य एवं विद्वान् रोहिण्यामाधत्ते ॥६॥ रोहिण्यामु ह वै पशवः। अग्नी आदधिरे मनुष्याणां कामꣳ रोहेमेति ते मनुष्याणां काममरोहन्यमु हैव तत्पशवो मनुष्येषु काममरोहꣳ स्तमुहैव पशुषु कामꣳ रोहति य एवं विद्वान्रोहिण्यामा-धत्ते ॥७॥ मृगशीर्षेऽग्नीऽआदधीत। एतद्वै प्रजापतेः शिरो यन्मृगशीर्षꣳ श्रीर्वै शिरः श्रीर्ह वै शिरस्तस्माद्योऽर्धस्य श्रेष्ठो भवत्यसावमुष्यार्धस्य शिर इत्याहुः श्रियꣳह गच्छति य एवं विद्वान्मृगशीर्ष आधत्ते ॥८॥ अथ यस्मान्न मृगशीर्षेऽ-आदधीत। प्रजापतेर्वाऽएतच्छरीरं यत्र वा एनं तदविध्यꣳ स्तदिषुणा त्रिकाण्डे-नेत्याहुः स एतच्छरीरमजहाद्वास्तु वै शरीरमयज्ञियं निर्वीर्यं तस्मान्न मृगशीर्ष आदधीत ॥९॥ तद्वेव दधीत। न वाऽएतस्य देवस्य वास्तु नायज्ञियं न शरीर-मस्ति यत्प्रजापतेस्तस्मादेव दधीत पुनर्वस्वोः पुनराधेयमादधीतेति ॥१०॥ फल्गुनीष्वग्नीऽआदधीत। एता वा इन्द्रनक्षत्रं यत्फल्गुन्योऽप्यस्य प्रतिनाम्न्यो-र्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नामार्जुन्यो वै नामैतास्ताऽएतत्परोऽक्षमाचक्षते फल्गुन्य इति को ह्येतस्यार्हति गुह्यं नाम ग्रहीतुमिन्द्रो वै यजमानस्तत्स्व एवैतन्नक्षत्रेऽग्नी आधत्तऽइन्द्रो यज्ञस्य देवतैतेनोहास्यैतत्सेन्द्रमग्न्याधेयं भवति पूर्वयोरादधीत पुरस्तात्क्रतुर्हैवास्मै भवत्युत्तरयोरादधीत श्वःश्रेयसꣳ हैवास्माऽउत्तरावद्भवति ॥११॥ हस्तेऽग्नी आदधीत। य इच्छेत्प्र मे दीयेतेति तद्धाऽअनुष्ठ्या यद्धस्तेन प्र दीयते प्र हैवास्मै दीयते ॥ १२ ॥ चित्रायामग्नी आदधीत। देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे तऽउभयऽएवामुं लोकꣳ समारुरुक्षां चक्रुर्दिवमेव ततोऽसुरा रौहिणमित्यग्निं

चिक्यिरेऽनेनामुं लोकꣳ समारोक्ष्याम इति ॥१३॥ इन्द्रो ह वाऽ ईक्षाञ्चक्रे। इमं चेद्वाऽ इमे चिन्वते तत एव नोऽभिभवन्तीति स ब्राह्मणो ब्रुवाण एकेष्टकां प्रदध्येयाय ॥१४॥ स होवाच। हन्ताहमिमामप्युपदधा इति तथेति तामुपाधत्त तेषामल्पकादेवाग्निरसञ्चित आस ॥१५॥ अथ होवाच। अन्वाऽ अहं तां दास्ये या ममेहेति तामभिपद्यावववर्ह तस्यामावृढायामग्निर्व्यवशशादग्नेर्व्यवशादमन्वसुरा व्यवशेदुः स ता एवेष्टका वज्रान्कृत्वा ग्रीवाः प्र चिच्छेद ॥१६॥ ते ह देवाः समेत्योचुः। चित्रं वाऽ अभूम यऽ इयतः सपत्नानवधिष्मेति तद्वै चित्रायै चित्रात्वं चित्रꣳ ह भवति हन्ति सपत्नान्हन्ति द्विषन्तं भ्रातृव्यं य एवं विद्वाँश्चित्रायामाधत्ते तस्मादेतत्क्षत्रिय एव नक्षत्रमुपेप्सेञ्जिघाꣳसतीव ह्येष सपत्नान्वीव जिगीषते ॥१७॥ नाना ह वा एतान्यग्रे क्षत्राण्यासुः। यथैवासौ सूर्य एवं तेषामेव उद्यन्नेव वीर्यं क्षत्रमादत्त तस्मादादित्यो नाम यदेषां वीर्यं क्षत्रमादत्त ॥१८॥ ते ह देवा ऊचुः। यानि वै तानि क्षत्राण्यभूवन्न वै तानि क्षत्राण्यभूवन्निति तद्वै नक्षत्राणां नक्षत्रत्वं तस्मादु सूर्यनक्षत्र एव स्यादेष ह्येषां वीर्यं क्षत्रमादत्त यद्यु नक्षत्रकामः स्यादेतद्वाऽ अनपराद्धं नक्षत्रं यत्सूर्यः स एतेनैव पुण्याहेन यदेतेषां नक्षत्राणां कामयेत तदुपेप्सेत्तस्मादु सूर्यनक्षत्र एव स्यात् ॥१९।

॥ ८ ॥
२.५.१.१-१७

प्रजापतिर्ह वाऽ इदमग्रऽ एक एवास। स ऐक्षत कथं नु प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत स प्रजा असृजत ता अस्य प्रजाः सृष्टाः पराबभूवुस्तानीमानि वयाꣳसि पुरुषो वै प्रजापतेर्नेदिष्ठं द्विपाद्वाऽ अयं पुरुषस्तस्माद्द्विपादो

वयाᳬंसि ॥१॥ स ऐक्षत प्रजापतिः । यथा न्वेव पुरैकोऽभूवमेवमु न्वेवाप्येत-
र्ह्येक एवास्मीति स द्वितीयाः ससृजे ता अस्य परेव बभूवुस्तदिदं क्षुद्रᳬं सरी-
सृपं यदन्यत्सर्पेभ्यस्तृतीयाः ससृज इत्याहुस्ता अस्य परेव बभूवुस्त इमे सर्पा
एता ह न्वेव द्वयीर्याज्ञवल्क्य उवाच त्रयीरु तु पुनर्ऋचा ॥२॥ सोऽर्चञ्छ्राम्यन्प्रजा-
पतिरीक्षाञ्चक्रे । कथं नु मे प्रजाः सृष्टाः परा भवन्तीति स हैतदेव ददर्शान-
शनतया वै मे प्रजाः पराभवन्तीति स आत्मन एवाग्रे स्तनयोः पय आप्याययाञ्-
चक्रे स प्रजा असृजत ता अस्य प्रजाः सृष्टाः स्तनावेवाभिपद्य तास्ततः सम्बभू-
वुस्ता इमा अपराभूताः ॥३॥ तस्मादेतदृषिणाभ्यनूक्तम् । प्रजा ह तिस्रो अत्या-
यमीयुरिति तद्याः पराभूतास्ता एवैतदभ्यनूक्तं न्यन्या अर्कमभितो विविश्रऽ इत्य-
ग्निर्वाऽ अर्कस्तद्या इमाः प्रजा अपराभूतास्ता अग्निमभितो निविष्टास्ता एवैत-
दभ्यनूक्तम् ॥४॥ महद्ध तस्थौ भुवनेष्वन्तरिति । प्रजापतिमेवैतदभ्यनूक्तं पव-
मानो हरित आ विवेशेति दिशो वै हरितस्ता अयं वायुः पवमान आविष्टस्ता
एवैषर्गभ्यनूक्ता ता इमाः प्रजास्तथैव प्रजायन्ते यथैव प्रजापतिः प्रजा असृज-
तैदᳬं हि यदैव स्त्रियै स्तनावाप्यायेतेऽ ऊधः पशूनामथैव यज्जायते तज्जायते तास्ततः-
स्तनावेवाभिपद्य सम्भवन्ति ॥५॥ तद्वै पय एवान्नम् । एतद्ध्यग्रे प्रजापतिर-
न्नमजनयत तद्वाऽ अन्नमेव प्रजा अन्नाद्धि सम्भवन्तीदᳬं हि यासां पयो भवति
स्तनावेवाभिपद्य तास्ततः सम्भवन्त्यथ यासां पयो न भवति जातमेव ता अथा-
दयन्ति तदु ता अन्नादेव सम्भवन्ति तस्मादन्नमेव प्रजाः ॥६॥ स यः प्रजाकामः ।
एतेन हविषा यजत आत्मानमेवैतद्यज्ञं विधत्ते प्रजापतिं भूतम् ॥७॥ स वा
आग्नेयोऽष्टाकपालः पुरोडाशो भवति । अग्निर्वै देवतानां मुखं प्रजनयिता स

प्रजापतिस्तस्मादाग्नेयो भवति ॥८॥ अथ सौम्यश्चरुर्भवति । रेतो वै सोमस्त-द्ग्नौ प्रजनयितरि सोमꣳ रेतः सिञ्चति तत्पुरस्तान्मिथुनं प्रजननम् ॥९॥ अथ सावित्रः । द्वादशकपालो वाष्टाकपालो वा पुरोडाशो भवति सविता वै देवानां प्रसविता प्रजापतिर्मध्यतः प्रजनयिता तस्मात्सावित्रो भवति ॥१०॥ अथ सारस्वतश्चरुर्भवति । पौष्णश्चरुर्योषा वै सरस्वती वृषा पूषा तत्पुनर्मिथुनं प्रज-ननमेतस्माद्वाऽ उभयतो मिथुनात्प्रजननात्प्रजापतिः प्रजाः ससृजऽ इतश्चोर्ध्वा इत-श्चावाचीस्तस्माद्वाऽ एतानि पञ्च हवीꣳषि भवन्ति ॥११॥ अथातः पयस्याया एवायतनम् । मारुतस्तु सप्तकपालो विशो वै मरुतो देवविशस्ता हेदमनिपेद्वा-इव चेरुस्ताः प्रजापतिं यजमानमुपेत्योचुर्वि वैते मथिष्यामहऽ इमाः प्रजा या एतेन हविषा स्रक्ष्यस इति ॥१२॥ स ऐक्षत प्रजापतिः । परा मे पूर्वाः प्रजा अभूवन्नि-मा उ चेदिमे विमथ्नते न ततः किञ्चन परिशेक्ष्यत इति तेभ्य एतं भागमकल्पय-देतं मारुतꣳ सप्तकपालं पुरोडाशꣳ स एष मारुतः सप्तकपालस्तद्यत्सप्तकपालो भवति सप्तसप्त हि मारुतो गणस्तस्मान्मारुतः सप्तकपालः पुरोडाशो भवति ॥१३॥ तं वै स्वतवोभ्य इति कुर्यात् । स्वयꣳ हि त एतं भागमकुर्वतोतो स्वतवोभ्यो याज्यानुवाक्ये न विन्दति स उ खलु मारुत एव स्यात्स वा एष प्रजाभ्य एवाहिꣳ-सायै क्रियते तस्मान्मारुतः ॥१४॥ अथातः पयस्यैव । पयसो वै प्रजाः सम्भ-वन्ति पयसः सम्भूतास्तद्यत एव सम्भूता यतः सम्भवन्ति तदेवाभ्य एतत्करोति तयाः पूर्वैर्हविर्भिः प्रजाः सृजते ता एतस्मात्पयस एतस्यै पयस्यायै सम्भवन्ति ॥१५॥ तस्यां मिथुनमस्ति । योषा वै पयस्या रेतो वाजिनं तस्मान्मिथुनाद्विश्वमसम्मित-मनु प्राजायत तद्यदेतस्मान्मिथुनाद्विश्वमसम्मितमनु प्राजायत तस्माद्वैश्वदेवी

भवति ॥१६॥ अथ द्यावापृथिव्य एककपालः पुरोडाशो भवति । एतैर्वै ह
विर्भिः प्रजापतिः प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां पर्यगृह्णात्ता इमा द्यावा-
पृथिवीभ्यां परिगृहीतास्तथोऽ एवैष एतद्य एतैर्हविर्भिः प्रजाः सृजते ता द्यावा-
पृथिवीभ्यां परिगृह्णाति तस्माद् द्यावापृथिव्य एककपालः पुरोडाशो भवति ॥१७॥

॥ ९ ॥

३·५·१·१-३६

तद्य एष पूर्वार्द्ध्यो वर्षिष्ठः स्थूणाराजो भवति । तस्मात्प्राङ् प्र क्रामति त्रीन्
विक्रमाँस्तच्छङ्कुं नि हन्ति सोऽन्तःपातः ॥१॥ तस्मान्मध्यमाच्छङ्कोः ।
दक्षिणा पञ्चदश विक्रमान्प्र क्रामति तच्छङ्कुं नि हन्ति सा दक्षिणा श्रोणिः ॥२॥
तस्मान्मध्यमाच्छङ्कोः । उदङ् पञ्चदश विक्रमान् प्र क्रामति तच्छङ्कुं नि हन्ति
सोत्तरा श्रोणिः ॥३॥ तस्मान्मध्यमाच्छङ्कोः । प्राङ् षट्त्रिंशतं विक्रमान्
प्र क्रामति तच्छङ्कुं नि हन्ति स पूर्वार्द्धः ॥४॥ तस्मान्मध्यमाच्छङ्कोः । दक्षिणा
द्वादश विक्रमान्प्र क्रामति तच्छङ्कुं नि हन्ति स दक्षिणोꣳऽसः ॥५॥ तस्मान्मध्य-
माच्छङ्कोः । उदङ् द्वादश विक्रमान्प्र क्रामति तच्छङ्कुं नि हन्ति स उत्तरोꣳ-
ऽस एषा मात्रा वेदेः ॥६॥ अथ यत्त्रिꣳशद्विक्रमा पश्चाद्भवति । त्रिꣳशदक्षरा
वै विराड् विराजा वै देवा अस्मिँल्लोके प्रत्यतिष्ठꣳस्तथोऽएवैष एतद्विराजैवा-
स्मिँल्लोके प्रति तिष्ठति ॥७॥ अथोऽ अपि त्रयस्त्रिꣳशत्स्युः । त्रयस्त्रिꣳशदक्षरा
वै विराड्विराजैवास्मिँल्लोके प्रति तिष्ठति ॥८॥ अथ यत्षट्त्रिꣳशद्विक्रमा प्राची
भवति । षट्त्रिꣳशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गं लोकꣳ समाश्नुवत

तथोऽ एवैष एतद् बृहत्यैव स्वर्गं लोकꣳ समश्नुते सोऽस्य दिव्याहवनीयो भवति ॥९॥ अथ यच्चतुर्विꣳशतिविक्रमा पुरस्ताद्भवति। चतुर्विꣳशत्यक्षरा वै गायत्री पूर्वार्द्धो वै यज्ञस्य गायत्री पूर्वार्द्ध एष यज्ञस्य तस्माच्चतुर्विꣳशतिविक्रमा पुरस्ताद्भवत्येषा मात्रा वेदेः ॥१०॥ अथ यत्पश्चाद्वरीयसी भवति। पश्चाद्वरीयसी पृथुश्रोणिरिति वै योषां प्रशꣳसन्ति यद्वेव पश्चाद्वरीयसी भवति पश्चादेवैतद्वरीयः प्रजननं करोति तस्मात्पश्चाद्वरीयसः प्रजननादिमाः प्रजाः प्रजायन्ते ॥११॥ नासिका ह वा एषा यज्ञस्य यदुत्तरवेदिः। अथ यदेनामुत्तरां वेदेरुपकिरति तस्मादुत्तरवेदिर्नाम ॥१२॥ द्वय्यो ह वा इदमग्रे प्रजा आसुः। आदित्याश्चैवाङ्गिरसश्च ततोऽङ्गिरसः पूर्वे यज्ञꣳ समभरꣳस्ते यज्ञꣳ सम्भृत्योचुरग्निमिमां नः श्वसुत्यामादित्येभ्यः प्रब्रूह्यनेन नो यज्ञेन याजयतेति ॥१३॥ ते हादित्या ऊचुः। उपजानीत यथास्मानेवाङ्गिरसो याजयान्न वयमङ्गिरस इति ॥१४॥ ते होचुः। न वाऽ अन्येन यज्ञादपक्रमणमस्त्यन्तरामेव सुत्यां ध्रियामहा इति ते यज्ञꣳ संजभ्रुस्ते यज्ञꣳ सम्भृत्योचुः श्वःसुत्यां वै त्वमस्मभ्यमग्ने प्रावोचोऽथ वयमद्यसुत्यामेव तुभ्यं प्रब्रूमोऽङ्गिरोभ्यश्च तेषां नस्त्वꣳ होतासीति ॥१५॥ तेऽन्यमेव प्रतिप्रजिघ्युः। अङ्गिरसोऽथ ते हाप्यङ्गिरसोऽग्नयेऽन्वागत्य चुक्रुधुरिव कथं नु नो दूतश्चरन्न प्रत्याहृथा इति ॥१६॥ स होवाच। अनिन्द्या वै मावृषत सोऽनिन्द्यैर्वृतो नाशकमपक्रमितुमिति तस्मादु हानिन्द्यस्य वृतो नापक्रामेत्त एतेन सद्यःक्रियाङ्गिरस आदित्यानयाजयन्त्स सद्यः क्रीः ॥१७॥ तेभ्यो वाचं दक्षिणामानयन्। तां न प्रत्यगृह्णन्हास्यामहे यदि प्रतिग्रहीष्याम इति तदु तद्यज्ञस्य कर्म न व्यमुच्यत यद्दाक्षिणमासीत् ॥१८॥ अथैभ्यः

सूर्यं दक्षिणामानयन्। तं प्रत्यगृह्णंस्तस्मादु ह स्माहुरङ्गिरसो वयं वा आर्त्विजीनाः स्मो वयं दक्षिणीया अपि वाऽ अस्माभिरेष प्रतिगृहीतो य एष तपतीति तस्मात्सद्यःक्रियोऽश्वः श्वेतो दक्षिणा ॥१९॥ तस्य रुक्मः पुरस्ताद्भवति। तदेतस्य रूपं क्रियते य एष तपति यद्यश्वं श्वेतं न विन्देदपि गौरेव श्वेतः स्यात्तस्य रुक्मः पुरस्ताद्भवति तदेतस्य रूपं क्रियते य एष तपति ॥२०॥ तेभ्यो ह वाक् चुक्रोध। केन मदेष श्रेयान्बन्धुना३ केना३ यदेतं प्रत्यग्रहीष्ट न मामिति सा हैभ्योऽपचक्राम सोभयानन्तरेण देवासुरान्त्संयत्तान्त्सिꣳही भूत्वाददाना चचार तामुपैव देवा आमन्त्रयन्तोपासुरा अग्निरेव देवानां दूत आस सहरक्षा इत्यसुररक्षसमसुराणाम् ॥२१॥ सा देवानुपावर्त्स्यन्त्युवाच। यद्व उपावर्तेय किं मे ततः स्यादिति पूर्वामेव त्वाग्नेराहुतिः प्राप्स्यतीत्यथ हैषा देवानुवाच यां मया काञ्चाशिषमाशासिष्यध्वे सा वः सर्वा समर्धिष्यत इति सैवं देवानुपाववर्त ॥२२॥ स यद्धार्यमाणेऽग्नौ। उत्तरवेदिं व्याघारयति यदेवैनामदो देवा अब्रुवन्पूर्वां त्वाग्नेराहुतिः प्राप्स्यतीति तदेवैनामेतत्पूर्वामग्नेराहुतिः प्राप्नोति वाग्घ्येषा निदानेनाथ यदुत्तरवेदिमुपकिरति यज्ञस्यैव सर्वत्वाय वाग्घि यज्ञो वागु ह्येषा ॥२३॥ तां वै युगशम्येन वि मिमीते। युगेन यत्र हरन्ति शम्यया यतो हरन्ति युगशम्येन वै योग्यं युञ्जन्ति सा यदेवादः सिꣳही भूत्वाशान्तेवाचरत्तदेवैनामेतद्यज्ञे युनक्ति ॥२४॥ तस्मान्निवृत्तदक्षिणां न प्रतिगृह्णीयात्। सिꣳही हैनं भूत्वा क्षिणोति नो हा माकुर्वीत सिꣳही हैवैनं भूत्वा क्षिणोति नो हान्यस्मै दद्याद्यद्य तदन्यत्रात्मनः कुर्वीत तस्माद्योऽस्यापि पापइव समानबन्धुः स्यात्तस्मा एनां दद्यात्स यद्ददाति तदेनꣳ सिꣳही भूत्वा न क्षिणोति यदु

समानबन्धवे ददाति तदेवान्यत्रात्मनः कुरुत ऽ एषो निवृत्तदक्षिणायै प्रतिष्ठा ॥२५॥ अथ शम्यां च स्फ्यञ्चादत्ते। तस्य एव पूर्वार्ध्यं उत्तरार्ध्यः शङ्कुर्भवति तस्मात्प्रत्यङ् प्र क्रामति त्रीन् विक्रमांस्तच्चात्वालं परि लिखति सा चात्वालस्य मात्रा नात्र मात्रास्ति यत्रैव स्वयं मनसा मन्येताग्रेणोत्करं तच्चात्वालं परिलिखेत् ॥२६॥ स वेद्यन्तात्। उदीचीᳶ शम्यां नि दधाति स परि लिखति तप्तायनी मेऽसीतीमामेवैतदाहास्याᳶ हि तप्त एति ॥२७॥ अथ पुरस्तात्। उदीचीᳶ शम्यां नि दधाति स परि लिखति वित्तायनी मेऽसीतीमामेवैतदाहास्याᳶ हि विविदान एति ॥२८॥ अथानुवेद्यन्तम्। प्राचीᳶ शम्यां नि दधाति स परि लिखत्यवतान्मा नाथितादितीमामेवैतदाह यत्र नाथे तन्मावतादिति ॥२९॥ अथोत्तरतः। प्राचीᳶ शम्यां नि दधाति स परिलिखत्यवतान्मा व्यथितादितीमामेवैतदाह यत्र व्यथे तन्मावतादिति ॥३०॥ अथ हरति। यत्र हरति तदग्नीदुप सीदति स वाऽ अग्नीनामेव नामानि गृह्णन्हरति यान्वाऽ अमून्देवाऽ अग्रे ऽग्नीन् होत्राय प्रावृणत ते प्राधन्वंस्त इमा एव पृथिवीरुपासर्पन्निमा मह्येव ह्वे अस्याः परे तेनैवैतन्निदानेन हरति ॥३१॥ स प्र हरति। विदेदग्निर्नभो नामाग्ने ऽअङ्गिर आयुना नाम्नेहीति स यत्प्राधन्वंस्तदायुर्दधाति तत्समीरयति योऽस्यां पृथिव्यामसीति योऽस्यां पृथिव्यामसीति हत्वा नि दधाति यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति यत्तेऽनाधृष्टᳶ रक्षोभिर्नाम यज्ञियं तेन त्वादध इत्येवैतदाहानु त्वा देववीतयऽइति चतुर्थᳶ हरति देवेभ्यस्त्वा जुष्टᳶ हरामीत्येवैतदाह तां वै चतुःस्रक्तेश्चात्वालाद्धरति चतस्रो वै दिशः सर्वाभ्य एवनामेतद्दिग्भ्यो हरति ॥३२॥ अथानु व्यूहति। सिᳶहासि सपत्नसाही देवेभ्यः कल्पस्वेति सा यदेवादः सिᳶही भूत्वाशान्तेवाचरत्तदेवैना-

मेतदाह सिꣳह्यसीति सपत्नसाहीति त्वया वयꣳ सपत्नान्पापीयसः क्रियास्मेत्येवैतदाह देवेभ्यः कल्पस्वेति योषा वा उत्तरवेदिस्तामेवैतद्देवेभ्यः कल्पयति ॥२३॥ तां वै युगमात्रीं वा सर्वतः करोति। यजमानस्य वा दशदश पदानि दशाक्षरा वै विराड्वाग्वै विराड्यज्ञो मध्ये नाभिकामिव करोति समानत्रासीनो व्याघारयाणीति ॥२४॥ तामद्भिरभ्युक्षति। सा यदेवादः सिꣳही भूत्वाशान्तेवाचरच्छान्तिरापस्तामद्भिः शमयति योषा वा उत्तरवेदिस्तामेवैतद्देवेभ्यो हिन्वति तस्माद्द्भिरभ्युक्षति ॥२५॥ सोऽभ्युक्षति। सिꣳह्यसि सपत्नसाही देवेभ्यः शुन्धस्वेत्यथ सिकताभिरनुविकिरत्यलङ्कारो न्वेव सिकता भ्राजन्त इव हि सिकता अग्नेर्वाऽ एतद्वैश्वानरस्य भस्म यत्सिकता अग्निं वा अस्यामाधास्यन्भवति तथो हैनामग्निर्न हिनस्ति तस्मात्सिकताभिरनुविकिरति सोऽनुविकिरति सिꣳह्यसि सपत्नसाही देवेभ्यः शुम्भस्वेत्यथैनां छादयति सा छन्नैताꣳ रात्रिं वसति ॥२६॥

॥ १० ॥

३·६·२·२-८

दिवि वै सोम आसीत्। अथेह देवास्ते देवा अकामयन्ता नः सोमो गच्छेत्तेनागतेन यजेमहीति तऽ एते मायेऽ असृजन्त सुपर्णीं च कद्रूं च वागेव सुपर्णीयं कद्रूस्ताभ्याꣳ समदञ्चक्रुः ॥२॥ ते हर्तीयमाने ऊचतुः। यतरा नौ दवीयः परापश्यादात्मानं नो सा जयादिति तथेति सा ह कद्रूरुवाच परेक्षस्वेति ॥३॥ सा ह सुपर्ण्युवाच। अस्य सलिलस्य पारेऽश्वः श्वेतः स्थाणौ सेवते तमहं पश्यामीति तमेव त्वं पश्यसीति तꣳ हीत्यथ ह कद्रूरुवाच तस्य वालो न्यषञ्जि

तममुं वातो धूनोति तमहं पश्यामीति ॥४॥ सा यत्सुपर्ण्युवाच । अस्य सलिलस्य पारऽइति वेदिर्वै सलिलं वेदिमेव सा तदुवाचाश्वः श्वेतः स्थाणौ सेवत इत्यग्निर्वाऽअश्वः श्वेतो यूपः स्थाणुरथ यत्कद्रूरुवाच तस्य वालो न्यषञ्जि तममुं वातो धूनोति तमहं पश्यामीति रशना हैव सा ॥५॥ सा ह सुपर्ण्युवाच । एहीदं पताव वेदितुं यतरा नौ जयतीति सा ह कद्रूरुवाच त्वमेव पत त्वं वै न आख्यास्यसि यतरा नौ जयतीति ॥६॥ सा ह सुपर्णी पपात । तद्ध तथैवास यथा कद्रूरुवाच तामागताभ्युवाद त्वमजैषीः३रहः३मिति त्वमिति होवाचैतद्ध्याख्यानꣳ सौपर्णीकाद्रवमिति ॥७॥ सा ह कद्रूरुवाच । आत्मानं वै त्वाजैषं दिव्यसौ सोमस्तं देवेभ्य आ हर तेन देवेभ्य आत्मानं निष्क्रीणीष्वेति तथेति सा छन्दाꣳसि ससृजे सा गायत्री दिवः सोममाहरत् ॥८॥

॥ ११ ॥

११.३.६.१-७

ब्रह्म वै मृत्यवे प्रजाः प्रायच्छत् । तस्मै ब्रह्मचारिणमेव न प्रायच्छत्सोऽब्रवीदस्तु मह्यमप्येतस्मिन्भाग इति यामेव रात्रिꣳ समिधं नाहराता इति तस्माद्याꣳ रात्रिं ब्रह्मचारी समिधं नाहरत्यायुष एव तामवदाय वसति तस्माद् ब्रह्मचारी समिधमा हरेन्नेदायुषोऽवदाय वसानीति ॥१॥ दीर्घसत्रं वा एष उपैति । यो ब्रह्मचर्यमुपैति स यामुपयन्त्समिधमादधाति सा प्रायणीया याꣳ स्नास्यन्त्सोदयनीयाथ या अन्तरेण सत्त्या एवास्य ता ब्राह्मणो ब्रह्मचर्यमुपयन् ॥२॥ चतुर्धा भूतानि प्र विशति । अग्निं पदा मृत्युं पदाचार्यं पदात्मन्येवास्य चतुर्थः पादः परि शिष्यते ॥३॥ स यदग्नये समिधमाहरति । य एवास्याग्नौ पादस्तमेव तेन

परि क्रीणाति तꣳ सꣳस्कृत्यात्मन्धत्ते स एनमाविशति ॥४॥ अथ यदात्मानं दरिद्रीकृत्येव । अह्रीर्भूत्वा भिक्षते य एवास्य मृत्यौ पादस्तमेव तेन परि क्रीणाति तꣳ सꣳस्कृत्यात्मन्धत्ते स एनमाविशति ॥५॥ अथ यदाचार्यवचसं करोति । यदाचार्याय कर्म करोति य एवास्याचार्ये पादस्तमेव तेन परि क्रीणाति तꣳ सꣳस्कृत्यात्मन्धत्ते स एनमाविशति ॥६॥ न ह वै स्नात्वा भिक्षेत । अप ह वै स्नात्वा भिक्षां जयत्यप ज्ञातीनामशनायामप पितॄणाꣳ स एवं विद्वान्यस्या एव भूयिष्ठꣳ श्लाघेत तां भिक्षेतेत्याहुस्तल्लोक्यमिति स यद्यन्यां भिक्षितव्यां न विन्देदपि स्वामेवाचार्यजायां भिक्षेताथो स्वां मातरं नैनꣳ सप्तम्यभिक्षितातीयात्तमेवं विद्वाꣳसमेवं चरन्तꣳ सर्वे वेदा आविशन्ति यथा ह वाऽ अग्निः समिद्धो रोचत एवꣳ ह वै स स्नात्वा रोचते य एवं विद्वान् ब्रह्मचर्यं चरति ॥७॥

॥ १२ ॥

११·५·४·१-१८

ब्रह्मचर्यमागामित्याह । ब्रह्मण एवैतदात्मानं निवेदयति ब्रह्मचार्यसानीत्याह ब्रह्मणऽ एवैतदात्मानं परि ददात्यथैनमाह को नामासीति प्रजापतिर्वै कः प्राजापत्यमेवैनं तत्कृत्वोपनयते ॥१॥ अथास्य हस्तं गृह्णाति । इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवासावित्येते वै श्रेष्ठे बलिष्ठे देवते एताभ्यामेवैतꣳ श्रेष्ठाभ्यां बलिष्ठाभ्यां देवताभ्यां परिददाति तथा हास्य ब्रह्मचारी न काञ्चनार्तिमार्च्छति न स य एवं वेद ॥२॥ अथैनं भूतेभ्यः परिददाति । प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददामीत्येते वै श्रेष्ठे वर्षिष्ठे देवतेऽ एताभ्यामेवैनꣳ श्रेष्ठाभ्यां वर्षिष्ठाभ्यां देवताभ्यां परिददाति तथा हास्य ब्रह्मचारी न काञ्चनार्तिमार्च्छति

न स य एवं वेद ॥३॥ अद्भ्यस्त्वौषधीभ्यः परिददामीति । तदेनमद्भ्यश्चौषधीभ्यश्च परिददाति द्यावापृथिवीभ्यां त्वा परिददामीति तदेनमाभ्यां द्यावापृथिवीभ्यां परिददाति ययोरिदꣳ सर्वमधि विश्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्या इति तदेनꣳ सर्वेभ्यो भूतेभ्यः परिददात्यरिष्ट्यै तथा हास्य ब्रह्मचारी न काञ्चनार्ति-मार्च्छति न स य एवं वेद ॥४॥ ब्रह्मचार्यसीत्याह । ब्रह्मणऽ एवैनं तत्परिददा-त्यपोऽशानेत्यमृतं वाऽ आपोऽमृतमशानेत्येवैनं तदाह कर्म कुर्विति वीर्यं वै कर्म वीर्यं कुर्वित्येवैनं तदाह समिधमाधेहीति समिन्त्स्वात्मानं तेजसा ब्रह्मवर्चसेनेत्ये-वैनं तदाह मा सुषुप्था इति मा मृथा इत्येवैनं तदाहापोऽशानेत्यमृतं वाऽ आ-पोऽमृतमशानेत्येवैनं तदाह तदेनमुभयतोऽमृतेन परिगृह्णाति तथा हास्य ब्रह्म-चारी न काञ्चनार्तिमार्च्छति न स य एवं वेद ॥५॥ अथास्मै सावित्रीमन्वाह । ताꣳ ह स्मैतां पुरा संवत्सरेऽन्वाहुः संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जात एवास्मिꣳस्तद्वाचं दध्म इति ॥६॥ अथ षट्सु मासेषु । षड्वाऽ ऋतवः संवत्सरस्य संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जातऽ एवास्मिꣳस्तद्वाचं दध्म इति ॥७॥ अथ चतुर्विꣳशत्यहे । चतुर्विꣳशतिर्वै संवत्सरस्यार्द्धमासाः संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जातऽ एवास्मिꣳस्तद्वाचं दध्म इति ॥८॥ अथ द्वादशाहे । द्वादश वै मासाः संवत्सरस्य संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जातऽ एवास्मिꣳस्तद्वाचं दध्म इति ॥९॥ अथ षडहे । षड्वाऽ ऋतवः संवत्सरस्य संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जातऽएवास्मिꣳस्तद्वाचं दध्म इति ॥१०॥ अथ त्र्यहे । त्रयो वाऽ ऋतवः संवत्सरस्य संवत्सरसम्मिता वै गर्भाः प्रजायन्ते जातऽ एवास्मिꣳस्तद्वाचं दध्म इति ॥११॥ तदपि श्लोकं गायन्ति । आचार्यो

गर्भो भवति हस्तमाधाय दक्षिणम् । तृतीयस्याᳪं स जायते सावित्र्या सह ब्राह्मण इति सद्यो ह वाव ब्राह्मणायानुब्रूयादाग्नेयो वै ब्राह्मणः सद्यो वाऽ अग्निर्जायते तस्मात्सद्य एव ब्राह्मणायानुब्रूयात् ॥१२॥ ताᳪं हैतामेके । सावित्रीमनुष्टुभमन्वाहुर्वाग्वाऽ अनुष्टुप् तदस्मिन्वाचं दध्म इति न तथा कुर्याद्यो हैनं तत्र ब्रूयादा न्वाऽ अयमस्य वाचमदित मूको भविष्यतीतीश्वरो ह तथैव स्यात्तस्मादेतां गायत्रीमेव सावित्रीमनुब्रूयात् ॥१३॥ अथ हैके दक्षिणतः । तिष्ठते वासीनाय वान्वाहुर्न तथा कुर्याद्यो हैनं तत्र ब्रूयाद्बुल्वं न्वा अयमिममजीजनत बुल्वो भविष्यतीतीश्वरो ह तथैव स्यात्तस्मात्पुरस्तादेव प्रतीचे समीक्षमाणायानुब्रूयात् ॥१४॥ तां वै पच्छोऽन्वाह । त्रयो वै प्राणाः प्राण उदानो व्यानस्तानेवास्मिᳪंस्तद्दधात्यथार्द्धर्चशो द्वौ वा ऽ इमौ प्राणौ प्राणोदानावेव प्राणोदानावेवास्मिᳪंस्तत्कृत्स्नं दधाति ॥१५॥ तदाहुः । न ब्राह्मणं ब्रह्मचर्यमुपनीय मिथुनं चरेद्गर्भो वा ऽएष भवति यो ब्रह्मचर्यमुपैति नेदिमं ब्राह्मणं विषिक्ताद्रेतसो जनयानीति ॥१५॥ तदु वाऽ आहुः । काममेव चरेद्द्वय्यो वाऽ इमाः प्रजा दैव्यश्चैव मानुष्यश्च ता वाऽ इमा मानुष्यः प्रजा प्रजननात्प्रजायन्ते छन्दाᳪंसि वै दैव्यः प्रजास्तानि मुखतो जनयते तत एतं जनयते तस्मादु काममेव चरेत् ॥१७॥ तदाहुः । न ब्रह्मचारी सन्मध्वश्नीयादोषधीनां वाऽ एष परमो रसो यन्मधु नेदन्नाद्यस्यान्तं गच्छानीत्यथ ह स्माह श्वेतकेतुरारुणेयो ब्रह्मचारी सन्मध्वश्नᳪंस्त्रय्यै वाऽ एतद्विद्यायै शिष्टं यन्मधु स तु रसो यस्येदृक् शिष्टमिति यथा ह वाऽ ऋचं वा यजुर्वा साम वाऽभिव्याहरेत्तादृक्तद्य एवं विद्वान् ब्रह्मचारी सन्मध्वश्नाति तस्मादु काममेवाश्नीयात् ॥१८॥

॥ १३ ॥

११.५.६.१-९

पञ्चैव महायज्ञाः । तान्येव महासत्राणि भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो
देवयज्ञो ब्रह्मयज्ञ इति ॥१॥ अहरहर्भूतेभ्यो बलिꣳ हरेत् । तथैतं भूतयज्ञꣳ
समाप्नोत्यहरहर्दद्यादोदपात्रात्तथैतं मनुष्ययज्ञꣳ समाप्नोत्यहरहः स्वधा कुर्या-
दोदपात्रात्तथैतं पितृयज्ञꣳ समाप्नोत्यहरहः स्वाहा कुर्यादा काष्ठात्तथैतं देवयज्ञꣳ
समाप्नोति ॥२॥ अथ ब्रह्मयज्ञः । स्वाध्यायो वै ब्रह्मयज्ञस्तस्य वा ऽएतस्य
ब्रह्मयज्ञस्य वागेव जुहूर्मन उपभृच्चक्षुर्ध्रुवा मेधा स्रुवः सत्यमवभृथः स्वर्गो लोक
उदयनं यावन्तꣳ ह वा ऽ इमां पृथिवीं वित्तेन पूर्णान्ददल्लोकं जयति त्रिस्तावन्तं
जयति भूयाꣳसञ्चाक्षय्यं य एवं विद्वानहरहः स्वाध्यायमधीते तस्मात्स्वा-
ध्यायोऽध्येतव्यः ॥३॥ पयआहुतयो ह वा ऽ एता देवानाम् । यदृचः स य एवं
विद्वानृचोऽहरहः स्वाध्यायमधीते पयआहुतिभिरेव तद्देवाꣳस्तर्पयति त ऽ एनं
तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः संपद्भिर्घृत-
कुल्या मधुकुल्याः पितॄन्स्वधा अभिवहन्ति ॥४॥ आज्याहुतयो ह वा ऽ एता देवानाम् ।
यद्यजूꣳषि स य एवं विद्वान्यजूꣳष्यहरहः स्वाध्यायमधीत ऽ आज्याहुतिभिरेव
तद्देवाꣳस्तर्पयति त ऽ एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्वात्मना
सर्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्स्वधा अभिवहन्ति ॥५॥
सोमाहुतयो ह वा ऽ एता देवानाम् । यत्सामानि स य एवं विद्वान्त्सामान्यहरहः
स्वाध्यायमधीते सोमाहुतिभिरेव तद्देवाꣳस्तर्पयति त ऽ एनं तृप्तास्तर्पयन्ति योग-
क्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः

पितॄन्त्स्वधा अभिवहन्ति ॥६॥ मेदआहुतयो ह वा एता देवानाम् । यदथर्वाङ्गिरसः स य एवं विद्वानथर्वाङ्गिरसोऽहरहः स्वाध्यायमधीते मेदआहुतिभिरेव तद्देवाꣳस्तर्पयति त ऽ एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधा अभिवहन्ति ॥७॥ मध्वाहुतयो ह वाऽ एता देवानाम् । यदनुशासनानि विद्या वाकोवाक्यमितिहासपुराणं गाथा नाराशꣳस्यः स यऽ एवं विद्वाननुशासनानि विद्या वाकोवाक्यमितिहासपुराणं गाथा नाराशꣳसीरित्यहरहः स्वाध्यायमधीते मध्वाहुतिभिरेव तद्देवाꣳस्तर्पयति त एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्वात्मना सर्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन्त्स्वधा अभिवहन्ति ॥८॥ तस्य वाऽ एतस्य ब्रह्मयज्ञस्य । चत्वारो वषट्कारा यद्वातो वाति यद्विद्योतते यत्स्तनयति यदवस्फूर्जति तस्मादेवंविद्वाते वाति विद्योतमाने स्तनयत्यवस्फूर्जत्यधीयीतैव वषट्काराणामच्छंवट्कारायाति ह वै पुनर्मृत्युं मुच्यते गच्छति ब्रह्मणः सात्मताꣳ स चेदपि प्रबलमिव न शक्नुयादप्येकं देवपदमधीयीतैव तथा भूतेभ्यो न हीयते ॥९॥

॥ १४ ॥

११·५·७·१-१०

अथातः स्वाध्यायप्रशꣳसा । प्रिये स्वाध्यायप्रवचने भवतो युक्तमना भवत्यपराधीनोऽहरहरर्थान्साधयते सुखꣳ स्वपिति परमचिकित्सक आत्मनो भवतीन्द्रियसंयमश्चैकारामता च प्रज्ञावृद्धिर्यशो लोकपक्तिः प्रज्ञा वर्धमाना चतुरो धर्मान्ब्राह्मणमभिनिष्पादयति ब्राह्मण्यं प्रतिरूपचर्यां यशो लोकपक्तिं

लोकः पच्यमानश्चतुर्भिर्धर्मैर्ब्राह्मणं भुनक्त्यर्चया च दानेन चाज्येयतया चावध्य-
तया च ॥१॥ ये ह वै के च श्रमाः । इमे द्यावापृथिवी अन्तरेण स्वाध्यायो
हैव तेषां परमता काष्ठा य एवं विद्वान्त्स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्ये-
तव्यः ॥२॥ यद्यद्ध वाऽ अयं छन्दसः । स्वाध्यायमधीते तेन तेन हैवास्य यज्ञ-
क्रतुनेष्टं भवति य एवं विद्वान्त्स्वाध्यायमधीते तस्मात्स्वाध्यायोऽध्येतव्यः ॥३॥
यदि ह वाऽ अप्यभ्यक्तः । अलङ्कृतः सुहितः सुखे शयने शयानः स्वाध्याय-
मधीतऽ आ हैव स न खाग्रेभ्यस्तप्यते य एवं विद्वान्त्स्वाध्यायमधीते तस्मात्स्वा-
ध्यायोऽध्येतव्यः ॥४॥ मधु ह वा ऋचः । घृतꣳ सामान्यमृतं यजूꣳषि
यद्ध वाऽ अयं वाकोवाक्यमधीते क्षीरौदनमाꣳसौदनौ हैव तौ ॥५॥ मधुना
ह वा ऽ एष देवाꣳस्तर्पयति । य एवं विद्वानृचोऽहरहः स्वाध्यायमधीते तऽ एनं
तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥६॥ घृतेन ह वाऽ एष देवाꣳस्तर्पयति ।
य एवं विद्वान्त्सामान्यहरहः स्वाध्यायमधीते तऽ एनं तृप्तास्तर्पयन्ति सर्वैः
कामैः सर्वैर्भोगैः ।७॥ अमृतेन ह वाऽ एष देवाꣳस्तर्पयति । य एवं विद्वान्यजूꣳ-
ष्यहरहः स्वाध्यायमधीते तऽ एनं तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वैर्भोगैः ॥८॥
क्षीरौदनमाꣳसौदनाभ्याꣳ ह वा ऽ एष देवाꣳस्तर्पयति । य एवं विद्वान्वाको-
वाक्यमितिहासपुराणमित्यहरहः स्वाध्यायमधीते तऽ एनं तृप्तास्तर्पयन्ति
सर्वैः कामैः सर्वैर्भोगैः ॥९॥ यन्ति वाऽ आपः । एत्यादित्य एति चन्द्रमा
यन्ति नक्षत्राणि यथा ह वा ऽ एता देवता नेयुर्न कुर्युरेवꣳ हैव तदहर्ब्राह्मणो
भवति यदहः स्वाध्यायं नाधीते तस्मात्स्वाध्यायो ऽध्येतव्यस्तस्मादप्यृचं वा
यजुर्वा साम वा गाथां वा कुम्व्यां वाभिव्याहरेद्व्रतस्याव्यवच्छेदाय ॥१०॥

# ४। तैत्तिरीयं ब्राह्मणम्

॥ १ ॥

१·४·१·१-५

उभये वा एते प्रजापतेरध्यसृज्यन्त। देवाश्चासुराश्च। तान्न व्यजानात्। इमेऽन्य इमेऽन्य इति। स देवानꣳशूनकरोत्। तानभ्यषुणोत्। तान्पवित्रेणापुनात्। तान्पुरस्तात्पवित्रस्य व्यगृह्णात्। ते ग्रहा अभवन्। तद्ग्रहाणां ग्रहत्वम् ॥१॥ देवता वा एता यजमानस्य गृहे गृह्यन्ते। यद्ग्रहाः। विदुरेनं देवाः। यस्यैवं विदुष एते ग्रहा गृह्यन्ते। एषा वै सोमस्याहुतिः। यदुपाꣳशुः। सोमेन देवाꣳस्तर्पयाणीति खलु वै सोमेन यजते। यदुपाꣳशुं जुहोति। सोमेनैव तद्देवाꣳस्तर्पयति। यद् ग्रहाञ्जुहोति ॥२॥ देवा एव तद्देवान्गच्छन्ति। यच्चमसाञ्जुहोति। तेनैवानुरूपेण यजमानः सुवर्गं लोकमेति। किं त्वेतदग्र आसीदित्याहुः। यत्पात्राणीति। इयं वा एतदग्र आसीत्। मृण्मयानि वा एतान्यासन्। तैर्देवा न व्यावृतमगच्छन्। त एतानि दारुमयाणि पात्राण्यपश्यन्। तान्यकुर्वत ॥३। तैर्वै ते व्यावृतमगच्छन्। यद्दारुमयाणि पात्राणि भवन्ति। व्यावृतमेव तैर्यजमानो गच्छति। यानि दारुमयाणि पात्राणि भवन्ति। अमुमेव तैर्लोकमभिजयति। यानि मृन्मयानि। इममेव तैर्लोकमभिजयति। ब्रह्म-

वादिनो वदन्ति। काश्चतस्रः स्थलीर्वायव्याः सोमग्रहणीरिति। देवा वै पृश्निमदुहन् ॥४॥ तस्या एते स्तना आसन्। इयं वै पृश्निः। तामादित्या आदित्यस्थाल्या चतुष्पदः पशूनदुहन्। तामिन्द्र उक्थ्यस्थाल्येन्द्रियमदुहत्। यदुक्थ्यस्थाली भवति। इन्द्रियमेव तया यजमान इमां दुहे। तां विश्वे देवा आग्रयणस्थाल्योर्जमदुहन्। यदाग्रयणस्थाली भवति। ऊर्जमेव तया यजमान इमां दुहे। तां मनुष्या ध्रुवस्थाल्यायुरदुहन्। यद् ध्रुवस्थाली भवति। आयुरेव तया यजमान इमां दुहे। स्थाल्या गृह्णाति। वायव्येन जुहोति। तस्मादन्येन पात्रेण पशून्दुहन्ति। अन्येन प्रतिगृह्णन्ति। अथो व्यावृत्तमेव तद्यजमानो गच्छति ॥५॥

॥ २ ॥

१.५.१.१-५

अग्नेः कृत्तिकाः। शुक्रं परस्ताज्ज्योतिरवस्तात्। प्रजापते रोहिणी। आपः परस्तादोषधयोऽवस्तात्। सोमस्येन्वका। विततानि परस्तात् वयन्तोऽवस्तात्। रुद्रस्य बाहू। मृगयवः परस्ताद्विक्षारोऽवस्तात्। अदित्यै पुनर्वसू। वातः परस्तादार्द्रमवस्तात् ॥१॥ बृहस्पतेस्तिष्यः। जुह्वतः पर-

स्तायजमाना अवस्तात्। सर्पाणामाश्लेषाः। अभ्यागच्छन्तः परस्तादभ्यानृत्यन्तोऽवस्तात्। पितॄणां मघाः। रुदन्तः परस्तादपभ्रंशोऽवस्तात्। अर्यम्णः पूर्वे फल्गुनी। जाया परस्तादृषभोऽवस्तात्। भगस्योत्तरे। वहतवः परस्ताद्वहमाना अवस्तात्॥२॥ देवस्य सवितुर्हस्तः। प्रसवः परस्तात्सनिरवस्तात्। इन्द्रस्य चित्रा। ऋतं परस्तात्सत्यमवस्तात्। वायोर्निष्ट्या। व्रततिः परस्तादसिद्धिरवस्तात्। इन्द्राग्नियोर्विशाखे। युगानि परस्तात्कृपमाणा अवस्तात्। मित्रस्यानूराधाः। अभ्यारोहत्परस्तादभ्यारूढमवस्तात्॥३॥ इन्द्रस्य रोहिणी। शृणत्परस्तात्प्रतिशृणदवस्तात्। निर्ऋत्यै मूलवर्हणी। प्रतिभञ्जन्तः परस्तात्प्रतिशृणन्तोऽवस्तात्। अपां पूर्वा अषाढाः। वर्चः परस्तात्समितिरवस्तात्। विश्वेषां देवानामुत्तराः। अभिजयत्परस्तादभिजितमवस्तात्। विष्णोः श्रोणा। पृच्छमानाः परस्तात्पन्था अवस्तात्॥४॥ वसूनाꣳश्रविष्ठाः। भूतं परस्ताद्भूतिरवस्तात्। इन्द्रस्य शतभिषक्। विश्वव्यचाः परस्ताद्विश्वक्षितिरवस्तात्। अजस्यैकपदः पूर्वे प्रोष्ठपदाः। वैश्वानरं परस्ताद्वैश्वावसवमवस्तात्। अहेर्बुध्नियस्योत्तरे। अभिषिञ्चन्तः परस्ताद-

भिषुण्वन्तोऽवस्तात्। पूष्णो रेवती। गावः परस्ताद्वत्सा अवस्तात्। अश्विनोरश्वयुजौ। ग्रामः परस्तात्सेनावस्तात्। यमस्यापभरणीः। अपकर्षन्तः परस्तादपवहन्तोऽवस्तात्। पूर्णा पश्चाद्यत्ते देवा अदधुः ॥५॥

॥ ३ ॥

१.५.२.१-२

यत्पुण्यं नक्षत्रम्। तद्बट् कुर्वीतोपव्युषम्। यदा वै सूर्य उदेति। अथ नक्षत्रं नैति। यावति तत्र सूर्यो गच्छेत्। यत्र जघन्यं पश्येत्। तावति कुर्वीत। यत्कारी स्यात्। पुण्याह एव कुरुते। एवꣳ ह वै यज्ञेषुं च शतद्युम्नञ्च मात्स्यो निरवसाययाञ्चकार ॥१॥ यो वै नक्षत्रियं प्रजापतिं वेद। उभयोरेनं लोकयोर्विदुः। हस्त एवास्य हस्तः। चित्रा शिरः। निष्ट्या हृदयम्। ऊरू विशाखे। प्रतिष्ठानूराधाः। एष वै नक्षत्रियः प्रजापतिः। य एवं वेद। उभयोरेनं लोकयोर्विदुः। अस्मिꣳश्चामुष्मिꣳश्च ॥२॥

॥ ४ ॥

१.५.१०.१-२

स समुद्र उत्तरतः प्राज्वलद्भूम्यन्तेन। एष वाव स समुद्रः। यच्चात्वालः। एष उ वेव स भूम्यन्तः। यद्वेद्यन्तः। तदेतच्चिशलं त्रिपूरुषम्। तस्मात्तं

त्रिवितस्तं खनन्ति। स सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत आसीत्। तं यदस्याध्यजनयन्। तस्मादादित्यः ॥१॥ अथ यत्सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत आसीत्। सास्य कौशिकता। तं त्रिवृताभिप्रास्तुवत। तं त्रिवृतादत्त। तं त्रिवृताहरन्। यावती त्रिवृतो मात्रा। तं पञ्चदशेनाभिप्रास्तुवत। तं पञ्चदशेनाददत। तं पञ्चदशेनाहरन्। यावती पञ्चदशस्य मात्रा ॥२॥

॥ ५ ॥

१·७·१·६-७

इन्द्रो वृत्रꣳ हत्वा। असुरान् पराभाव्य। नमुचिमासुरं नालभत। तꣳ शच्याग्ृह्णात्। तौ समलभेताम्। सोऽस्मादभिशुनतरोऽभवत्। सोऽब्रवीत्। सन्धाꣳ सन्दधावहै। अथ त्वा वः स्रक्ष्यामि। न मा शुष्केण नार्द्रेण हनः ॥६॥ न दिवा न नक्तमिति। स एतमपां फेनमसिञ्चत्। न वा एष शुष्को नार्द्रो व्युष्टासीत्। अनुदितः सूर्यः। न वा एतद्दिवा न नक्तम्। तस्यैतस्मिँल्लोके अपां फेनेन शिर उदवर्तयत्। तदेनमन्ववर्तत। मित्रध्रुगिति ॥७॥

॥ ६ ॥

३.२.१०.१-३

वज्रो वै स्फ्यः । यदन्वञ्चं धारयेत् । वज्रेऽध्वर्युः क्षण्वीत । पुरस्तात्तिर्यञ्चं धारयति । वज्रो वै स्फ्यः । वज्रेणैव यज्ञस्य दक्षिणतो रक्षा᳚ᳫसि अपहन्ति । अग्निभ्यां प्राञ्चश्च प्रतीचश्च । स्फ्येनोदीचश्चाधराचश्च । स्फ्येन वा एष वज्रेणास्यै पाप्मानं भ्रातृव्यमपहत्य । उत्करेऽधि प्रवृश्चति ॥१॥

यथोपधाय वृश्चन्त्येवम् । हस्ताववनेनिक्ते । आत्मानमेव पवयते । स्फ्यं प्रक्षालयति मेध्यत्वाय । अथो पाप्मन एव भ्रातृव्यस्य न्यङ्गं छिनत्ति । इध्माबर्हिरुपसादयति युक्त्यै । यज्ञस्य मिथुनत्वाय । अथो पुरोरुचमेवैतां दधाति । उत्तरस्य कर्मणोऽनुख्यात्यै । न पुरस्तात्प्रत्यगुपसादयेत् ॥२॥

यत् पुरस्तात्प्रत्यगुपसादयेत् । अन्यत्राहुतिपथादिध्मं प्रतिपादयेत् । प्रजा वै बर्हिः । अपराध्नुयाद्बर्हिषा प्रजानां प्रजननम् । पश्चात्प्रागुपसादयति । आहुतिपथेनेध्मं प्रतिपादयति । संप्रत्येव बर्हिषा प्रजानां प्रजननमुपैति । दक्षिणमिध्मम् । उत्तरं बर्हिः । आत्मा वा इध्मः । प्रजा बर्हिः । प्रजा

ह्यात्मन उत्तरतरा तीर्थे। ततो मेधमुपनीय। यथादेवतमेवैनत्प्रतिष्ठापयति। प्रतितिष्ठति प्रजया पशुभिर्यजमानः ॥३॥

॥ ७ ॥

३·१०·११·१-५

कश्चिद्ध वा अस्माल्लोकात्प्रेत्य। आत्मानं वेद। अयमहमस्मीति। कश्चित्स्वं लोकं न प्रति प्रजानाति। अग्निमुग्धो हैव धूमतान्तः। स्वं लोकं न प्रतिप्रजानाति। अथ यो हैवैतमग्निँ सावित्रं वेद। स एवास्माँल्लोकात्प्रेत्य। आत्मानं वेद। अयमहमस्मीति ॥१॥ स स्वं लोकं प्रतिप्रजानाति। एष उ चैवैनं तत्सावित्रः। स्वर्गं लोकमभिवहति। अहोरात्रैर्वा इदँ सयुग्भिः क्रियते। इतिरात्रायादीक्षिषत। इतिरात्राय व्रतमुपागुरिति। तानिहानेवंविदुषः। अमुष्मिँल्लोके शेवधिं धयन्ति। धीतँ हैव स शेवधिमनुपरैति। अथ यो हैवैतमग्निँ सावित्रं वेद ॥२॥ तस्येहैवाहोरात्राणि। अमुष्मिँल्लोके शेवधिं न धयन्ति। अधीत हैव स शेवधिमनुपरैति। भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास। तँ ह जीर्णिँ स्थविरँ शयानम्। इन्द्र उपव्रज्योवाच।

भरद्वाज। यत्ते चतुर्थमायुर्दद्याम्। किमेनेन कुर्या इति। ब्रह्मचर्यमेवैनेन चरेयमिति होवाच ॥३॥ तꣳ ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकार। तेषाꣳ हैकैकस्मान्मुष्टिमाददे। स होवाच। भरद्वाजेत्यामन्त्र्य। वेदा वा एते। अनन्ता वै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः। अथ त इतरदननूक्तमेव। एहीमं विद्धि। अयं वै सर्वविद्येति ॥४॥ तस्मै हैतमग्निꣳ सावित्रमुवाच। तꣳ स विदित्वा। अमृतो भूत्वा। स्वर्गं लोकमियाय। आदित्यस्य सायुज्यम्। अमृतो हैव भूत्वा। स्वर्गं लोकमेति। आदित्यस्य सायुज्यम्। य एवं वेद। एषो एव त्रयी विद्या ॥५॥

## ५। ताण्ड्यमहाब्राह्मणम्

॥ १ ॥

१.१.८

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि। वरुणस्त्वा नयतु देवि दक्षिणे वरुणायाश्वं तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे। वरुणस्त्वा नयतु देवि दक्षिणे रुद्राय तयाऽमृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे। वरुणस्त्वा नयतु देवि दक्षिणेऽग्नयेऽजं तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे। अग्नये हिरण्यम्। अग्नी-

सोमाभ्यामजां तयाऽमृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे। अन्नस्यान्नपतिः प्रादादनमीवस्य शुष्मिणो नमो विश्वजनस्य क्षामाय भुञ्जति मा मा हिꣳसीः। वरुणस्त्वा नयतु देवि दक्षिणे त्वाष्ट्रेऽविं तयाऽमृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे। ग्नास्त्वा कृन्तन्नपसोऽतन्वत वयित्र्योऽवयन्। वरुणस्त्वा नयतु देवि दक्षिणे बृहस्पतये वासस्तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे। वरुणस्त्वा नयतु देवि दक्षिणे उत्तानायाङ्गिरसायाप्राणस्तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे। वरुणस्त्वा नयतु देवि दक्षिणे पूष्ण उष्ट्रम्। वायवे मृगं तेनामृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे। वरुणस्त्वा नयतु देवि दक्षिणे प्रजापतये पुरुषं प्रजापतये हस्तिनं प्रजापतये वराहं प्रजापतये व्रीहियवाꣳस्तैरमृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे। वरुणस्त्वा नयतु देवि दक्षिणे क्षेत्रपतये तिलमाषाꣳस्तैरमृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे। वरुणस्त्वा नयतु देवि दक्षिणे सवित्रेऽश्वतरं वाऽश्वतरीं वा तयाऽमृतत्वमशीय वयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे। क इदं कस्मा अदात्कामः कामायादात्कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविशत्कामेन त्वा प्रतिगृह्णामि कामैतत्ते ॥८॥

॥ २ ॥

१·२·१

तिसृभ्यो हिङ्करोति स प्रथमया तिसृभ्यो हिङ्करोति स मध्यमया तिसृभ्यो हिङ्करोति स उत्तमयोद्यती त्रिवृतो विष्टुतिः। ज्येष्ठो ज्यैष्ठिनेयः स्तुवीत। अग्रादग्रꣳ रोहत्यभिक्रामन्ती विष्टुतिरभिक्रामन्त्या एवाभिक्रान्तेन हि यज्ञस्यर्ध्नोति तस्मादेतया स्तोतव्यमृद्ध्या एव। पापवसीयसो विधृतिर्विपाप्मना वर्तते य एतया स्तुते नावगतोऽपरुध्यते नापरुद्धोऽवगच्छति न श्रेयाꣳसं पापीयानभ्यारोहति न जनता जनतामभ्येति नान्योन्यस्य प्रजा आददते यथा क्षेत्रं कल्पन्तेऽवर्षुकस्तु पर्जन्यो भवतीमे हि लोकास्त्रिवृस्तान्हिंकारेण व्येति। एषा वै प्रतिष्ठिता त्रिवृतो विष्टुतिः प्रतितिष्ठति य एतया स्तुते ॥१॥

॥ ३ ॥

१.२.२

तिसृभ्यो हिङ्करोति स पराचीभिस्तिसृभ्यो हिङ्करोति स पराचीभिस्तिसृभ्यो हिङ्करोति स पराचीभिः परिवर्तिनी त्रिवृतो विष्टुतिः। प्रपरीवर्तमाप्नोति य एतया स्तुते सन्तता विष्टुतिः प्राणोऽपानो व्यानस्त ऋचस्तान् हिङ्कारेण सन्तनोति सर्वमायुरेति न पुराऽऽयुषः प्रमीयते य एतया स्तुते वर्षुकः पर्जन्यो भवतीमे हि लोकास्तृचस्तान् हिङ्कारेण सन्दधाति। श्लक्ष्णेव तु वा ईश्वरा पशून्निर्मृजः सैषा च परा चोत श्रेयान् भवत्युत यादृङेव तादृङ् नेत्तु पापीयान्। तामेतां भाल्लवय उपासते तस्मात्ते प्रतिगृह्णन्तः परीवर्तान्न च्यवन्ते ॥२॥

॥ ४ ॥

१.२.३

तिसृभ्यो हिङ्करोति स पराचीभिस्तिसृभ्यो हिङ्करोति या मध्यमा सा प्रथमा योत्तमा सा मध्यमा या प्रथमा सोत्तमा तिसृभ्यो हिङ्करोति योत्तमा सा प्रथमा या प्रथमा सा मध्यमा या मध्यमा सोत्तमा कुलायिनी त्रिवृतो विष्टुतिः। प्रजाकामो वा पशुकामो वा स्तुवीत प्रजा वै कुलायं पशवः कुलायं कुलायमेव भवति। एतामेवानुजावराय कुर्यादेतासामेवाग्रं परियतीनां प्रजानामग्रं पर्येति। एतामेव बहुभ्यो यजमानेभ्यः कुर्याद्यत्सर्वा अग्रिया भवन्ति सर्वा मध्ये सर्वा उत्तमाः सर्वानेवैनान्समावद्भाजः करोति नान्योऽन्यमपघ्नते सर्वे समावद्विन्द्रिया भवन्ति वर्षुकः पर्जन्यो भवतीमे हि लोकास्तृचस्तान्हिङ्कारेण व्यतिषजति। पापवसीयसं तु भवति। अधरोत्तरमपावगतोरुध्यतेऽवगच्छत्यपरुद्धः पापीयाञ्छ्रेयाꣳसमभ्यारोहति जनता जनतामभ्येत्यन्योन्यस्य प्रजा आददते न यथाक्षेत्रं कल्पन्ते ॥३॥

॥ ५ ॥

१.५.५

आसन्दीमारुह्योद्गायति देवसाक्ष्य एव तदुपरिषद्यं जयति। औदुम्बरी भवत्यूर्गुदुम्बर ऊर्जमेवावरुन्धे। प्रादेशमात्री भवत्यस्य लोकस्यानुद्धानाय।

छन्दोभिरारोहति स्वर्गमेव तल्लोकमारोहति। छन्दोभिरुपावरोहत्यस्मिँल्लोके प्रतितिष्ठति। सर्वेणात्मना समुद्धृत्योद्ग्रेयमेषु लोकेषु नेद्धयाहितोऽसानीति। एकस्याꣳ स्तोत्रियायामस्तुतायां पादावुपावहरति। सह निधनेन प्रतिष्ठामुपयन्त्येष्वेव लोकेषु प्रतितिष्ठन्ति। प्रेङ्खमारुह्य होता शꣳसति महस एव तद्रूपं क्रियते। यदा वै प्रजा मह आविशति प्रेङ्खाꣳस्तर्ह्यारोहन्ति। फलकमारुह्याध्वर्युः प्रतिगृणाति। कूर्चानितरेऽध्यासते ऊर्ध्वा एव तदुत्क्रामन्तो यन्ति। अभिगरापगरौ भवतो निन्दत्येनानन्यः प्रान्यः शꣳसति य एतान्निन्दति पाप्मानमेषाꣳ सोऽपहन्ति यः प्रशꣳसति यदेवैषाꣳ सुष्टुतꣳ सुशस्तं तत्सोऽभिगृणाति। शूद्रार्यौ चर्मणि व्यायच्छेते तयोरार्यं वर्णमुज्ज्ञापयन्ति। देवाश्च वा असुराश्चादित्ये व्यायच्छन्तस्तं देवा अभ्यजयꣳस्ततो देवा अभवन्परासुरा भवत्यात्मना परास्य भ्रातृव्यो भवति य एवं वेद। यदार्यं वर्णमुज्ज्ञापयन्त्यात्मानमेव तदुज्ज्ञापयन्ति। परिमण्डलं चर्म भवत्यादित्यस्यैव तद्रूपं क्रियते। सर्वासु स्रक्तिषु दुन्दुभयो वदन्ति। या वनस्पतिषु वाक् तामेव तज्जयन्ति। भूमिदुन्दुभिर्भवति या पृथिव्यां वाक्तामेव तज्जयन्ति। सर्वा वाचो वदन्ति येषु लोकेषु वाक् तामेव तज्जयन्ति। सत्त्वद्धाः कर्कारिणः परियन्तीन्द्रियस्यैव तद्रूपं क्रियतेऽथो महाव्रतमेव महयन्ति ॥५॥

॥ ६ ॥

१.५.९

एकाष्टकायां दीक्षेरन्। एषा वै संवत्सरस्य पत्नी यदेकाष्टकैतस्यां वा गताꣳ रात्रिꣳ वसति साक्षादेव तत्संवत्सरमारभ्य दीक्षन्ते। तस्य सा निर्या यदपोऽनभिनन्दन्तोऽभ्यवयन्ति। विच्छिन्नं वा एते संवत्सरस्याभिदीक्षन्ते य एकाष्टकायां दीक्षन्तेऽन्तनामानावृतू भवतः। आर्तं वा एते संवत्सरस्याभिदीक्षन्ते येऽन्तनामानावृतू अभिदीक्षन्ते। तस्मादेकाष्टकायां न दीक्ष्यम्। फाल्गुने दीक्षेरन्। मुखं वा एतत्संवत्सरस्य यत्फाल्गुनो मुखत एव तत्संवत्सरमारभ्य दीक्षन्ते। तस्य सा निर्या यत्सम्मेघे विषुवान्त्संपद्यते। चित्रापूर्णमासे दीक्षेरन्। चक्षुर्वा एतत्संवत्सरस्य यच्चित्रापूर्णमासो मुखतो वै चक्षुर्मुखत एव तत्संवत्सरमारभ्य दीक्षन्ते तस्य न निर्यास्ति। चतुरहे पुरस्तात्पौर्णमास्या दीक्षे-

रन्। तेषामेकाष्टकायां क्रयः संपद्यते तेनैकाष्टकां न संवट् कुर्वन्ति। तेषां पूर्वपक्षे सुत्या सम्पद्यते पूर्वपक्षे मासाः सन्तिष्ठमाना यन्ति पूर्वपक्ष उत्तिष्ठन्ति तानुत्तिष्ठतः पशव ओषधयोऽनूत्तिष्ठन्ति तान्कल्याणी वागभिवदत्यरात्सुरिमे सत्रिण इति ते राध्नुवन्ति ॥९॥

॥ ७ ॥

२.१.५

प्रजापतिरकामयत बहु स्यां प्रजायेयेति सोऽशोचत्तस्य शोचत आदित्यो मूर्ध्नोऽसृज्यत सोऽस्य मूर्द्धानमुदहन्स द्रोणकलशोऽभवत्तस्मिन्देवाः शुक्रमगृह्णत तां वै स आयुषार्तिमत्यजीवत्। आयुषार्तिमतिजीवति य एवं वेद। तं प्रोहेद्वानस्पत्योऽसि बार्हस्पत्योऽसि प्राजापत्योऽसि प्रजापतेर्मूर्द्धास्यत्यायुपात्रमसि इदमहं मां प्राञ्चं प्रोहामि तेजसे ब्रह्मवर्चसायेति। यदाह वानस्पत्य इति सत्येनैवनं तत्प्रोहति। यदाह बार्हस्पत्य इति बृहस्पतिर्वै देवानामुद्गाता तमेव तद्युनक्ति। यदाह प्राजापत्य इति प्राजापत्यो ह्येष देवतया यद्द्रोणकलशो यदाह प्रजापतेर्मूर्द्धेति प्रजापतेर्ह्येष मूर्ध्न उदहन्यत। यदाहात्यायुपात्रमित्यतिह्येतदन्यानि पात्राणि यद्द्रोणकलशो देवपात्रं द्रोणकलशः। देवपात्री भवति य एवं वेद। ब्राह्मणं पात्रे न मीमांसेत यं ब्राह्मणमिव मन्येत प्रदेवपात्रमाप्नोति न मनुष्यपात्राच्छिद्यते। वाग्वै देवेभ्योऽपक्रामत्साऽपः प्राविशत्तां देवाः पुनरयाचंस्ता अब्रुवन्यत्पुनर्दद्याम किं नस्ततः स्यादिति यत्कामयध्वे इत्यब्रुवंस्ता अब्रुवन्यदेवास्मासु मनुष्या अपूतं प्रवेशयांस्तेनासंमृष्टा असामेति। शुद्धा अस्मा आपः पूता भवन्ति य एवं वेद। सा पुनर्हतात्यक्रामत्सा वनस्पतीन्प्राविशत्तान्देवाः पुनरयाचंस्तान्न पुनरददुस्तानशपन् स्वेन वः किष्कुणा वज्रेण वृश्चानिति तस्माद्वनस्पतीन्स्वेन किष्कुणा वज्रेण वृश्चन्ति देवशप्ता हि तां वनस्पतयश्चतुर्धा वाचं विन्यदधुर्दुन्दुभौ वीणायामक्षे तूणवे तस्मादेषा वदिष्ठैषा वल्गुतमा वाग्या वनस्पतीनां देवानां ह्येषा वागासीत्। अधोऽधोऽक्षं द्रोणकलशं प्रोहन्ति तस्या वाचोऽवरुद्धया उपर्युपर्यक्षं पवित्रं प्रयच्छन्त्युभयत एव वाचं परिगृह्णन्ति। यस्य कामयेतासुर्यमस्य यज्ञं कुर्यां वाचं वृञ्जीयेति द्रोणकलशं प्रोहन्बाहुभ्यामक्षमुपस्पृशेदसुर्यमस्य यज्ञं करोति वाचं वृङ्क्ते

योऽस्य प्रियः स्यादनुपस्पृशन्नक्षं प्रोहेत्प्राणा वै द्रोणकलशः प्राणानेवास्य तत्क-ल्पयति। यन्न्वित्याहुर्वाचान्यानृत्विजो वृणते कस्मादुद्गातारोऽवृता आर्त्विज्यं कुर्वन्तीति। यद्द्रोणकलशमुपसीदन्ति तेनोद्गातारो वृताः। प्राजापत्या वा उद्गातारः प्राजापत्यो द्रोणकलशो द्रोणकलश एवैनानार्त्विज्याय वृणीते। प्राञ्च उपसीदन्ति प्राञ्चो यज्ञस्याग्रे करवामेति। अनभिजिता वा एषोद्गातॄणां दिग्य-त्प्राची यद्द्रोणकलशं प्राञ्चं प्रोहन्ति दिशोऽभिजित्यै। यन्न्वित्याहुरन्तराऽश्वः प्रासेवौ युज्यतेऽन्तरा शम्ये अनड्वान्क उद्गातॄणां योग इति यद्द्रोणकलशमुपसीदन्ति स एषां योगस्तस्माद्युक्तैरेवोपसद्यं न ह्ययुक्तो वहति ॥५॥

॥ ८ ॥

२.२.५

प्रजापतिरकामयत बहु स्यां प्रजायेयेति स शोचन्नमहीयमानोऽतिष्ठत्स एतदामहीयवमपश्यत्तेनेमाः प्रजा असृजत ताः सृष्टा अमहीयन्त यदमहीयन्त तस्मादामहीयवम्। ता अस्मात्सृष्टा अपाक्राम७स्तासां दिविपद्भ्यादद इति प्राणानादत्त ता एनं प्राणेष्वात्तेषु पुनरुपावर्तन्त ताभ्य उग्र७ शर्म महिश्रव इति पुनः प्राणान्प्रायच्छत्ता अस्मादुदेवायोध७स्तासा७ स्तौप इति मन्यूनवा-श्रृणोत्ततो व तस्मै ताः श्रैष्ठ्यायातिष्ठन्त। तिष्ठन्तेऽस्मै समानाः श्रैष्ठ्याय य एवं वेद। प्रजानाञ्च वा एषा सृष्टिः पापवसीयसश्च विधृतिर्यदामहीयवम्। विधृतिः पापवसीयसो भवति य एवं वेद। देवा वै यशस्कामाः सत्रमासताग्निरिन्द्रो वायुर्मखस्तेऽब्रुवन्यन्नो यश ऋच्छात्तन्नः सहासदिति तेषां मखं यश आर्च्छत् तदादायापाक्रामत्तदस्य प्रासहादित्सन्त तं पर्ययतन्त स धनुः प्रतिष्टभ्यातिष्ठत्तस्य धनुरार्तिरूर्ध्वा पतित्वा शिरोऽच्छिनत्स प्रवर्ग्योऽभवद्यज्ञो वै मखो यत्प्रवर्ग्यं प्रवृञ्जन्ति। यज्ञस्यैव तच्छिरः प्रतिदधति। तद्देवा यशो व्यभजन्त तस्याग्नी रौरवं प्रावृहत। तद्वै स पशुवीर्यं प्रावृहत पशवो वै रौरवम्। पशुमान्भवति य एवं वेद। अग्निर्वै रूरुस्तस्यैतद्रौरवम्। असुरा वै देवान्पर्ययतन्त तत एतावग्नी रूरो विश्वञ्जौ स्तोभावपश्यत्ताभ्यामेनान्प्रत्यौषत्ते प्रत्युष्यमाणा अरवन्त तस्माद्रौरवम्। अथैन्द्रो यौधाजयं प्रावृहत तद्वै स वज्रं प्रावृहत वज्रो वै यौधाजयम्। वज्रं भ्रातृव्याय प्रहरति य एवं वेद। इन्द्रो वै

युधाजित्तस्यैतद्यौधाजयम्। युधा मयां अजैष्मेति तस्माद्यौधाजयम्। अथ वायुरौशनं प्राबृहत। तद्वै स प्राणवीर्यं प्राबृहत प्राणा वा औशनम्। सर्वमायुरेति य एवं वेद। वायुर्वा उशाꣳस्तस्यैतदौशनम्। उशना वै काव्योऽसुराणां पुरोहित आसीत्तं देवाः कामदुघाभिरुपामन्त्रयन्त तस्मा एतान्यौशनानि प्रायच्छन् कामदुघा वा औशनानि ॥५॥

॥ ९ ॥

२·३·४

साध्या वै नाम देवा आसꣳस्ते सर्वेण यज्ञेन सह स्वर्गं लोकमायꣳस्ते देवाश्छन्दाꣳस्यब्रुवन्सोममाहरतेति ते जगतीं प्राहिण्वन्त्सा त्रीण्यक्षराणि हित्वैकाक्षरा भूत्वागच्छत्त्रिष्टुभं प्राहिण्वन्त्सैकमक्षरꣳ हित्वा त्र्यक्षरा भूत्वागच्छद्गायत्रीं प्राहिण्वꣳश्चतुरक्षराणि वै तर्हि छन्दाꣳस्यासन्त्सा तानि चाक्षराणि हरन्त्यागच्छदष्टाक्षरा भूत्वा त्रीणि च सवनानि हस्ताभ्यां द्वे सवने दन्तैर्दꣳष्ट्रा तृतीयसवनं तस्माद्द्वे अंशुमती सवने धीतं तृतीयसवनं दन्तैर्हि तद्दꣳष्ट्रा धयन्त्याहरत्तस्य ये ह्रियमाणस्याꣳशवः परापतꣳस्ते पूतीका अभवन् यानि पुष्पाण्यवाशीर्यन्त तान्यर्जुनानि यत्प्राप्रोथत्ते प्रपाथास्तस्मात्तृतीयसवन आशिरमवनयन्ति यमेव तं गावः सोममदन्ति तस्य तꣳ रसमवनयन्ति ससोमत्वाय। ते त्रिष्टुब्जगत्यौ गायत्रीमब्रूतामुप त्वा यावेति साब्रवीत्किं मे ततः स्यादिति यत्कामयस इत्यब्रूताꣳ साब्रवीन्मम सर्वं प्रातःसवनमहमुत्तरे सवने प्रणयानीति तस्माद्गायत्रं प्रातःसवनं गायत्र्युत्तरे सवने प्रणयति। तां त्रिष्टुप् त्रिभिरक्षरैरुपैत्सैकादशाक्षरा भूत्वा प्राजायत ताञ्जगत्येकेनाक्षरेणोपैत्सा द्वादशाक्षरा भूत्वा प्राजायत। तस्मादाहुर्गायत्री वाव सर्वाणि च्छन्दाꣳसि गायत्री ह्येतान्पोपान् पुष्यन्त्यैदिति। इन्द्रस्तृतीयसवनाद्बीभत्समान उदक्रामत्तद्देवाः स्वादिष्ठयेत्यस्वदयन्मदिष्ठयेति मद्वदकुर्वन्पवस्व सोमधारयेत्यपावयन्निन्द्राय पातवे सुत इति ततो वै स इन्द्र उपाव ꣳत यत्स्वादिष्ठया मदिष्ठयेति प्रस्तौति तृतीयसवनस्य सेन्द्रत्वाय। स्वादिष्ठा वै देवेषु पशव आसन्मदिष्ठा असुरेषु ते देवाः स्वादिष्ठया मदिष्ठयेति पशूनसुराणामवृञ्जत। पशून् भ्रातृव्यस्य वृङ्क्ते य एवं वेद। तासु सꣳहितम्। साध्या व नाम देवा आसꣳस्तेऽवच्छिद्य तृतीयसवनं माध्यन्दिनेन सवनेन सह

सुवर्गं लोकमायꣳस्तद्देवाः सꣳहितेन समदधुर्यत्समदधुस्तस्मात्सꣳहितम्। कालेयं पुरस्ताद्भवति सꣳहितमुपरिष्टादेताभ्याꣳ हि तृतीयसवनꣳ सन्तायते। सर्वाणि वै रूपाणि सꣳहितं यत्पदप्रस्तावन्तेन राथन्तरं यद्बृहतो रोहान् रोहति तेन बार्हतं यत्पदनिधनन्तेन राथन्तरꣳ सर्वेष्वेव रूपेषु प्रतितिष्ठति ॥४॥

॥ १० ॥

२·४·१

देवा वा उक्थान्यभिजित्य रात्रिं नाशक्नुवन्नभिजेतुं तेऽसुरान्रात्रिं तमः प्रविष्टान्नानुव्यपश्यꣳस्त एतमनुष्टुप्शिरसं प्रगाथमपश्यन्विराजं ज्योतिस्तान्विराजा ज्योतिषाऽनुष्टुभा वज्रेण रात्रेराघ्नन्। यदेषोऽनुष्टुप्शिरः प्रगाथो भवति। विराजैव ज्योतिषानुपश्यन्ननुष्टुभा वज्रेण रात्रेर्भ्रातृव्यं निर्हन्ति। तान्समन्तं पर्यायं प्राणुदन्त यत्पर्यायं प्राणुदन्त तत्पर्यायाणां पर्यायत्वम्। प्रथमानि पदानि पुनरादीनि भवन्ति प्रथमस्य पर्यायस्य। प्रथमैर्हि पदैः पुनरादाय प्रथमरात्रात्प्राणुदन्त। पान्तमावो अन्धस इति प्रतौति। अहर्वै पान्तमन्धो रात्रिरह्नैव तद्रात्रिमारभन्ते। तासु वैतहव्यम्। वीतहव्यः श्रायसो ज्योग्निरुद्ध एतत्सामापश्यत्सोऽवगच्छत्प्रत्यतिष्ठदवगच्छति प्रतितिष्ठत्येतेन तुष्टुवानः। तम इव वा एते प्रविशन्ति ये रात्रिमुपयन्ति यद्दोको निधनꣳ रात्रेर्मुखे भवति प्रज्ञात्यै। यदा वै पुरुषः स्वमोक आगच्छति सर्वं तर्हि प्रजानाति सर्वमस्मै दिवा भवति। ते मध्यमं पर्यायमश्रयन्त तेषामौर्ध्वसद्मनेन वाचमवृञ्जत। वाचं भ्रातृव्यस्य वृङ्क्ते य एवं वेद। त्रिणिधनं भवति। यथा वा अह्नो माध्यन्दिनं सवनं त्रिणिधनायतनमेवमेष रात्रेर्मध्यमः पर्यायस्त्रिणिधनायतनः सलोमत्वाय। मध्यमानि पदानि पुनरादीनि भवन्ति मध्यमस्य पर्यायस्य मध्यमैर्हि पदैः पुनरादायं मध्यमरात्रात्प्राणुदन्त। त उत्तमं पर्यायमश्रयन्त तेषां घृतश्च्युन्निधनेन पशूनवृञ्जत पशवो वै घृतश्च्युतः। पशून्भ्रातृव्यस्य वृङ्क्ते य एवं वेद। उत्तमानि पदानि पुनरादीनि भवन्त्युत्तमस्य पर्यायस्योत्तमैर्हि पदैः पुनरादायमुत्तमरात्रात्प्राणुदन्त। तान्सन्धिनाभिपलायन्त तानाश्विनेनासꣳह्वाय्यमगमयन्। असꣳह्वाय्यं भ्रातृव्यं गमयति य एवं वेद। एषा वा अग्निष्टोमस्य सम्मा यद्रात्रिः। द्वादश स्तोत्राण्यग्निष्टोमो द्वादश स्तोत्राणि रात्रिः। एषा वा उक्थस्य सम्मा यद्रात्रिः। त्रीण्युक्थानि त्रिदेवत्यः सन्धिः। यथा वा अह उक्थान्येवमेष रात्रेः सन्धिर्नानारूपाण्यह

उक्थानि नानारूपा एते तृचा भवन्ति। रथन्तरं प्रतिष्ठाकामाय सन्धिं कुर्यात्। इयं वै रथन्तरमस्यामेव प्रतितिष्ठति। बृहत्स्वर्गकामाय सन्धिं कुर्यात्। स्वर्गो लोको बृहत्स्वर्ग एव लोके प्रतितिष्ठति। वारवन्तीयं वामदेव्यं वा शुद्धं वतेषामेकं पशुकामाय सन्धिं कुर्यात्। पशवो वा एतानि सामानि पशुष्वेव प्रतितिष्ठति। आश्विनꣳ होताऽनुशꣳसति। प्रजापतिर्वा एतत्सहस्रमसृजत तद्देवेभ्यः प्रायच्छत्तस्मिन्न समराधयꣳस्ते सूर्यं काष्ठां कृत्वाजिमधावन्। तेषा-मश्विनौ प्रथमावधावतां तावन्ववदन्सह नोऽस्त्विति तावब्रूतां किन्नस्ततः स्यादिति यत्कामयेथे इत्यब्रुवꣳस्तावब्रूतामस्मद्देवत्यमिदमुक्थमुच्याता इति तस्मादाश्विनमुच्यते। सर्वाः खलु देवताः शस्यन्ते। क्षिप्रꣳ शस्यमाजिमिव ह्येते धावन्त्यासूर्यस्योदेतोः शꣳसेत्सूर्यꣳ हि काष्ठामकुर्वत ॥१॥

॥ ११ ॥

३·३·४

इन्द्रः प्रजापतिमुपाधावद्वृत्रꣳ हनानीति तस्मा एतच्छन्दोभ्य इन्द्रियं वीर्यं निर्माय प्रायच्छदेतेन शक्नुहीति तच्छकरीणाꣳ शकरीत्वꣳ सीमानमभिनत्त-त्सिमा मह्वयामकरोत् तन्महया महान्घोष आसीत्तन्महानाम्न्यः। त्रिशः पञ्चपदा दाधारत्रं न्यष्टपदा छन्दाꣳसि सप्तपदा पुरुषं द्विपदा। त्र्योपशाः सꣳस्तुता भवन्ति तस्माद् त्र्योपशाः पशवः। इडेऽभितोऽथकारं तस्माच्छृङ्गे तीक्ष्णीयसी स्तूपात्। उपक्षुद्रा गायति तस्मादुपक्षुद्राः पशवः। असꣳश्लिष्टा गायति तस्मादसꣳश्लिष्टाः पशवः। नानारूपा गायति तस्मान्नानारूपाः पशवः। आपो वै क्षीररसा आसꣳस्ते देवाः पापवसीयसाद्बिभयुर्यदप उपनिधाय स्तुवते पापवसीयसो विधृत्यै। विधृतिः पापवसीयसो भवति य एवं वेद। गायत्रम-यनं भवति ब्रह्मवर्चसकामस्य स्वर्णिधनम्मधुनामुष्मिँल्लोक उपतिष्ठते त्रैष्टुभमयनं भवत्योजस्कामस्याथकारनिधनमाज्येनामुष्मिँल्लोक उपतिष्ठते जागतमयनं भवति पशुकामस्येडानिधनं पयसामुष्मिँल्लोक उपतिष्ठते। अञ्जसार्यो माल्यः शकरीः प्रारीत्सीदिति होवाचालम्भं परिजानतꣳ रजनः कौणेयो यद्येताः प्रतिष्ठापꣳ शक्ष्य-तीत्येतद्वा एतासामञ्ज एतत्प्रतिष्ठिता य आभिः क्षिप्रं प्रस्तुत्य क्षिप्रमुद्गायति। शकरीभिः स्तुत्वा पुरीषेण स्तुवते। पशवो वै शक्वर्यो गोष्ठः पुरीषं गोष्ठमेव

तत्पशुभ्यः पर्यस्यन्ति तमेवैनान्प्रवर्तयन्त्यविस्रꣳसाय। इन्द्रो मदाय वावृध इत्यवर्द्धन्त ह्येतर्हि। तासु बार्हद्गिरम्। स्वादोरित्था विषूवत इति विषुवान्वै पञ्चममहस्तासु रायोवाजीयम्। इन्द्रो यतीन्सालावृकेभ्यः प्रायच्छत्तेषां त्रय उदशिष्यन्त पृथुरश्मिर्बृहद्गिरी रायोवाजस्तेऽब्रुवन् को न इमान्पुत्रान्भरिष्यतीत्यहमितीन्द्रोऽब्रवीत्तानधिनिधाय परिचार्यं चरन्वर्द्धयꣳस्तान्वर्द्धयित्वाब्रवीत् कुमारका वरान्वृणीध्वमिति क्षत्रं मह्यमित्यब्रवीत्पृथुरश्मिस्तस्मा एतेन पार्थुरश्मेन क्षत्रं प्रायच्छत्क्षत्रकाम एतेन स्तुवीत क्षत्रमेवास्य प्रकाशो भवति ब्रह्मवर्चसं मह्यमित्यब्रवीद्बृहद्गिरिस्तस्मा एतेन बार्हद्गिरेण ब्रह्मवर्चसं प्रायच्छत् ब्रह्मवर्चसकाम एतेन स्तुवीत। ब्रह्मवर्चसी भवति पशून्मह्यमित्यब्रवीद्रायो वाजस्तस्मा एतेन रायोवाजीयेन पशून् प्रायच्छत्पशुकाम एतेन स्तुवीत पशुमान् भवति। पार्थुरश्मꣳ राजन्याय ब्रह्मसाम कुर्याद्बार्हद्गिरं ब्राह्मणाय रायोवाजीयं वैश्याय स्वेनैवैनाꣳस्तद्रूपेण समर्द्धयति स्तोमः ॥४॥

॥ १२ ॥

३·५·१

त्वꣳ सोमासि धारयुरिति गायत्री भवत्यह्नो धृत्यै त्वमिति बृहतो रूपं बार्हतꣳ ह्येतदहः। त्वꣳ ह्यङ्ग दैव्येति त्वमिति बृहतो रूपं बार्हतꣳ ह्येतदहः। पवस्व देव वीतय इति बृहतो रूपं बार्हतꣳ ह्येतदहः। परिस्यꣳ हर्यतꣳ हरिमिति परिवत्यो भवन्त्यन्तो वै नवममहस्तस्यैताः पर्याप्त्यै। पवस्व सोम महे दक्षायेत्यक्षरपङ्क्तिः स्तोमानां प्रभूतिरथो एतद्वयै वैतर्हि छन्दोऽयातयाम यदक्षरपङ्क्तिस्तेन च्छन्दोमा अयातयामानः क्रियन्ते ब्रह्मवादिनो वदन्ति यत्षडहे स्तोमाश्छन्दाꣳस्याप्यन्ते किं छन्दसश्छन्दोमा इत्येतच्छन्दसो यदेता अक्षरपङ्क्तय इति ब्रूयात्। उपोषु जातमप्तुरमिति गायत्र्यः सत्यो जगत्यो रूपेण तस्माज्जगतीनां लोके क्रियन्ते। गायत्रं भवति यदेव गायत्रस्य ब्राह्मणम्। आश्वसूक्तं भवति। अग्निं वै पूर्वैरह्नोभिराजुहोत्यथैतदादित्यदेवत्यमहः शुक्र आहुत इत्यसौ वा आदित्यः शुक्रस्तमेवैतेनाजुहोति। शाम्मदं भवति। शाम्मदा एतेनाङ्गिरसोऽञ्जसा स्वर्गं लोकमपश्यन्स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गाल्लोकान्न च्यवते तुष्टुवानः। दावसुनिधनं भवति। आशिषमेवास्मा एतेनाशास्ते साम हि सत्याशीः। दावसुर्वा एतदा-

ङ्गिरसः पशुकामः सामापश्यत्तेन सहस्रं पशूनसृजत यदेतत्साम भवति पशूनां पुष्ट्यै। प्रतीचीनेडं काशीतं भवति। पराचीभिर्वा अन्याभिरिडाभी रेतो दध-देत्यथैतत्प्रतीचीनेडङ्काशीतं प्रजात्यै तस्मात्पराञ्चो गर्भाः सम्भवन्ति प्रत्यञ्चः प्रजायन्ते तस्मादु तेऽवाचीनबिलेभ्यो नावपद्यन्त एतेन ह्येव ते धृताः। हाविष्कृतं भवति प्रतिष्ठायै कृतानुवाद एव सः। सौपर्णं भवति यदेव सौपर्णस्य ब्राह्मणम्। वैश्वमनसं भवति। विश्वमनसं वा ऋषिमध्यायमुद्वजितꣳ रक्षोऽगृह्णात्। तमि-न्द्रोऽचाययदृषिं वै रक्षोऽग्रहीदिति तमभ्यवदद्रूपे कस्त्वेष इति स्थाणुरिति ब्रूहीति रक्षोऽब्रवीत्। स स्थाणुरित्यब्रवीत्तस्मै वा एतेन प्रहरेत्यस्मा इषीकां वज्रं प्रय-च्छन्नब्रवीत्तेनास्य सीमानमभिनत्सैषेन्द्रेणतेषीका पाप्मा वात्र स तमगृह्णात्तं वैश्व-मनसेनापहताप पाप्मानꣳ हते वैश्वमनसेन तुष्टुवानः। गौरिवीतं भवति यदेव गौरिवीतस्य ब्राह्मणम्। निहवो भवत्यन्नाद्यस्यावरुद्ध्यै। हीति वा अन्नं प्रदीयते इत्यग्निरन्नमत्ति। ऋषयो वा इन्द्रं प्रत्यक्षतो नापश्यन्स वसिष्ठोऽका-मयत कथमिन्द्रं प्रत्यक्षं पश्येयमिति स एतन्निहवमपश्यत्ततो वै स इन्द्रं प्रत्यक्ष-मपश्यत्स एनमब्रवीत् ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिता भरताः प्रजनयिष्य-न्तेऽथ माऽन्येभ्य ऋषिभ्यो मा प्रवोच इति तस्मा एतान्स्तोमभागानब्रवीत्ततो वै वसिष्ठपुरोहिता भरताः प्राजायन्त सैन्द्रं वा एतत्साम यदेतत्साम भवति सेन्द्रत्वाय ॥

॥ १३ ॥

४.२.१

देवा वै स्वर्गं लोकमायꣳस्तेषां देवा अहीयन्त व्रात्यां प्रवसन्तस्त आगच्छ-न्यतो देवाः स्वर्गं लोकमायꣳस्ते न तꣳ स्तोमं छन्दोऽविन्दन्येन तानाप्स्यꣳस्ते देवा मरुतोऽब्रुवन्नेतेभ्यस्तꣳ स्तोमं तच्छन्दः प्रयच्छत येनास्मानाप्नुवन्निति तेभ्य एतꣳ षोडशꣳ स्तोमं प्रायच्छन् परोक्षमनुष्टुभं ततो वै ते तानाप्नुवन्। हीना वा एते हीयन्ते ये व्रात्यां प्रवसन्ति न हि ब्रह्मचर्यं चरन्ति न कृषिं न वाणिज्याꣳ षोडशो वा एतत्स्तोमः समाप्तुमर्हति। मरुत्स्तोमो वा एष यानि क्षुद्राणि च्छन्दाꣳसि तानि मरुताम्। ककुभं प्राचीमुदूहत्यथ यदेषा द्विपदा ककुभो लोके क्रियते रूपेणैवैनाꣳस्तत्समर्धयति। अधाहीन्द्रगिर्वण इति विषमं छन्दो विषम इव वै व्रातः सर्वानेवैनान्समान् करोति। तासु द्यौतानम्। द्युतानो मारुतस्तेषां गृह-

पतिरासीत्त एतेन स्तोमेनायजन्त ते सर्व आर्ध्नुवन् यदेतत्साम भवत्यृद्ध्या एव। यन्निरुक्तं निधनमुपेयुर्गृहपतिरेवर्ध्नुयादपेतरानृध्नीताथ तदनिरुक्तमुपयन्ति सर्वानेवैतानृद्धो भूतौ प्रतिष्ठापयति। गरगिरो वा एते ये ब्रह्माद्यं जन्यमन्नमदन्त्यदुरुक्तवाक्यं दुरुक्तमाहुरदण्ड्यं दण्डेन घ्नन्तश्चरन्त्यदीक्षिता दीक्षितवाचं वदन्ति षोडशो वा एतेषा७ स्तोमः पाप्मानं निर्हन्तुमर्हति यदेते चत्वारः षोडशा भवन्ति तेन पाप्मनोऽधिनिर्मुच्यन्ते। देवो वो द्रविणोदा इत्यग्निष्टोमसाम कार्यं देवतास्वेवैनान्प्रतिष्ठापयति। अथो खल्वाहुरदर्शि गातुवित्तम इत्येव सतोबृहतीषु कार्यं विषम इव वै व्रातः सर्वानेवैनान् सतोबृहतः करोति। तदाहुः शिथिलमिव वा एतच्छन्दश्चराचरं यत्सतोबृहती देवो वो द्रविणोदा इत्येव कार्यम्। एषा वै प्रतिष्ठिता बृहती या पुनःपदा तद्यत्पदं पुनरारभते तस्मात्पुत्रो मातरमध्येति। उष्णीषञ्च प्रतोदश्च ज्याहोडश्च विपथश्च फलकास्तीर्णः कृष्णशं वासः कृष्णवलक्षे अजिने रजतो निष्कस्तद्गृहपतेः। वलूकान्तानि दामतूषाणीतरेषां द्वे द्वे दामनी उपानहौ द्विष७हितान्यजिनानि। एतद्वै व्रात्यधनं यस्मा एतद्ददति तस्मिन्नेव मृजाना यन्ति। त्रयस्त्रि७शता त्रयस्त्रि७शता गृहपतिमभिसमायन्ति त्रयस्त्रि७शद्धि देवा आर्ध्नुवन्नृद्ध्या एव ॥१॥

॥ १४ ॥

४.२.२

अथैष षट्षोडशी ये नृश७सा निन्दिताः सन्तो व्रात्यां प्रवसेयुस्त एतेन यजेरन्। अभिपूर्वेण वा एते पाप्मना गृहीता ये नृश७सा निन्दिताः सन्तो व्रात्यां प्रवसन्ति यत् षट्षोडशानि स्तोत्राणि भवन्ति तेन पाप्मनोऽधि निर्मुच्यन्ते। यदेकवि७शोऽग्निष्टोमो भवति प्रतिष्ठा वा एकवि७शो मध्यत एव यज्ञस्य प्रतितिष्ठन्ति। उक्थ्यो भवति पशवो वा उक्थानि पशवो नृश७समग्रं परिणयन्ति पशुभिरेवैनानग्रं परिणयति ॥२॥

॥ १५ ॥

४.२.३

अथैष द्विषोडशी ये कनिष्ठाः सन्तो व्रात्यां प्रवसेयुस्त एतेन यजेरन्। हीना वा एते हीयन्ते ये कनिष्ठाः सन्तो व्रात्यां प्रवसन्ति यत्त्रिवृतः पवमाना

भवान्त मुखं वै त्रिवृत्स्तोमानां मुखत एवैनान्यज्ञस्य परिणयति। यद्वै षोडशे स्तोत्रे भवतस्तेन पाप्मनोऽधिनिर्मुच्यन्ते। एकवि७शोऽग्निष्टोमो भवति प्रतिष्ठा वा एकवि७शोऽन्तत एव यज्ञस्य प्रतितिष्ठन्ति ॥३॥

॥ १६ ॥

४.२.४

अथैष शमनीचमेढ्राणा७ स्तोमो ये ज्येष्ठाः सन्तो व्रात्यां प्रवसेयुस्त एतेन यजेरन्। अन्नादन्न७ रोहन्त्यूर्ध्वाः स्तोमा यन्त्यनपभ्र७शाय। एतेन वै शमनीचमेढ्रा अयजन्त तेषां कुषीतकः सामश्रवसो गृहपतिरासीत्तान् लुशाकपिः खार्गलिरनुव्याहरदवाकीर्षत कनीया७सौ स्तोमावुपागुरिति तस्मात्कौषीतकानान्न कश्चनातीव जिहीते यज्ञावकीर्णा हि ॥४॥

॥ १७ ॥

४.२.१४

यदाग्निहोत्रं जुहोत्यथ दश गृहमेधिन आप्नोत्येकया रात्र्या यदा दश-संवत्सरानग्निहोत्रं जुहोत्यथ दर्शपूर्णमासयाजिनमाप्नोति यदा दश संवत्सरान्दर्श-पूर्णमासाभ्यां यजतेऽथाग्निष्टोमयाजिनमाप्नोति। अथ दशभिरग्निष्टोमैर्यजतेऽथ सहस्रयाजिनमाप्नोति यदा दशभिः सहस्रैर्यजतेऽथायुतयाजिनमाप्नोति यदा दशभिरयुतैर्यजतेऽथ प्रयुतयाजिनमाप्नोति यदा दशभिः प्रयुतैर्यजतेऽथ नियुत-याजिनमाप्नोति यदा दशभिर्नियुतैर्यजतेऽथार्बुदयाजिनमाप्नोति यदा दशभिर-र्बुदैर्यजतेऽथ न्यर्बुदयाजिनमाप्नोति यदा दशभिर्न्यर्बुदैर्यजतेऽथ निखर्वकयाजिन-माप्नोति यदा दशभिर्निखर्वकैर्यजतेऽथ बद्वयाजिनमाप्नोति यदा दशभिर्बद्वैर्यजते-ऽथाक्षितयाजिनमाप्नोति यदा दशभिरक्षितैर्यजतेऽथ गौर्भवति यदा गौर्भवत्य-ग्निर्भवति यदाग्निर्भवत्यथ संवत्सरस्य गृहपतिमाप्नोति। यदा संवत्सरस्य गृहपतिर्भवत्यथ वैश्वदेवस्य मात्रामाप्नोत्यतो वा इतरे परस्तरां परस्तरामेव सर्वः। एतानेव लोकानाप्नोत्येताँल्लोकाञ्जयति य एवं वेद ॥१४॥

# ६ । षड्विंशब्राह्मणम्

॥ १ ॥

१.७

घ्नन्तीव वा एतत्सोमꣳ राजानं घ्नेव मीयते यदेनमभिषुण्वन्ति । तस्यैतामनुस्तरणीं कुर्वन्ति यत्सौम्यं चरुम् । तस्मात्पुरुषाय पुरुषायानुस्तरणी क्रियते । साध्यानां वै देवानाꣳ सत्रमासीनानाꣳ शर्करा अक्षसु जज्ञिरे । त हेन्द्रमुपनिषेदुः कथं नु तेषाꣳ शर्करा अक्षसु जायेरन्याꣳस्त्वं विद्या इति । तेभ्य एतत्सौम्ये चरौ श्यावमाज्यं प्रायच्छत् । तदवेक्षन्त । ते प्रापश्यन् । प्रपश्यत्यनन्धो भवति य एवं विद्वान्सौम्यं चरुमवेक्षते । योऽलमन्नाद्याय सन्नथान्नाद्यात् दक्षिणार्द्धꣳ सदसो गत्वैतꣳ सौम्यातिशेषं प्राश्नीयात् । जनं वा एतस्मादन्नाद्यं क्रामति । योऽलमन्नाद्याय सन्नथान्नमात्ति । जनो अस्मात्पितरो जन्येनैवान्नेनान्नमत्ति । अन्नादो भवति ॥७॥

॥ २ ॥

२.१

प्रजापतिरकामयत बहु स्यां प्रजायेयेति । स एताꣳ रेतस्यामृचꣳ साम्ना प्रच्छन्नामगायत् । यदृचमसाम्नीमगास्यदस्थ्यमाꣳसमजनिष्यत । यत्सामानृचं माꣳसमनस्थिकमजनिष्यत । ऋचꣳ साम्ना प्रच्छन्नां गायति । तस्मात्पुरुषः प्रच्छन्नो माꣳसेन त्वचा लोम्ना जायते । त्रिरुद्गृह्णाति । त्रय इमे लोका एषां लोकानामवरुद्ध्यै । त्रिभ्यश्च रेतः सिच्यते । न हिंकुर्याद् । वज्रो वै हिङ्कारोऽबलमिव रेतः । यद्धिङ्कुर्याद्वज्रेण हिङ्कारेण रेतः सिक्तं विच्छिन्द्याद् । रेतस्या गायत्री छन्दसा । प्राजापत्या देवतया । सर्वमेतया ध्यायन्गायेत् । सर्वꣳ हीदꣳ रेतः । द्वितीयां गायति । तस्या द्वे अक्षरे सशयनी व्यतिषजति । मध्यमस्य च पदस्योत्तममुत्तमस्य च प्रथमम् । व्यतिषक्तौ प्राणापानौ प्रजा दधतः । गायत्री छन्दसा । आग्नेयी देवतया । पृथिवीमेतया ध्यायन्गायेत् । तृतीयां गायति । तां बलवद्विरोरसेव गायति । तस्या द्वे उत्तरार्द्धे अक्षरे द्योतयति । चक्षुरेव तद्युनक्ति । तस्माद्युक्तश्चक्षुः । त्रिष्टुप् छन्दसा । ऐन्द्री देवतया । अन्तरिक्षमेतया ध्यायन्गायेत् । चतुर्थीं गायति । तस्याश्चत्वारि चत्वार्यक्षराणि निक्रीडयन्निव गायत्याद्वा-

दशभ्योऽक्षरेभ्यः। द्वादशाक्षरपदा जगती। पशवो वै जगती। पशुष्वेव प्रतितिष्ठति। तस्याश्चत्वार्युत्तमार्द्धेऽक्षराणि द्योतयति। श्रोत्रमेव तद्युनक्ति। तस्माद्युक्तꣳ श्रोत्रम्। श्रोत्रे द्वे। प्रतिश्रवणे द्वे। तस्मात्पुरुषः सर्वा दिशः शृणोति। अपि पराङ् यन् प्रत्यङ् यच्छृणोति। जगती छन्दसा। सौरी देवतया। दिवमेतया ध्यायन्गायेत्। पञ्चमीं गायति। तान्निनर्दन्निव गायति। आह बहुतमात्पुरुषादन्नमत्ति। अन्नादो भवति य एवं वेद। निरुक्तांश्चानिरुक्तांश्च गायति। निरुक्तेन वै वाचो भुञ्जते। अनिरुक्तमस्या उपजीवन्ति। भुङ्क्ते वाचमुपैनां जीवति य एवं वेद। अनुष्टुप् छन्दसा। प्राजापत्या देवतया। सर्वमेतया ध्यायन्गायेत्। सर्वꣳ हीदं प्राजापत्यम्। षष्ठीं गायति। तस्या द्वे द्वे अक्षरे उदासं गायत्यापड्भ्योऽक्षरेभ्यः। षडृतवः। ऋतुष्वेव प्रतितिष्ठति। पङ्क्तिश्छन्दसा। सौमी देवतया। दिश एतया ध्यायन् गायेत्। इहेव च वा एष इहेव च मनसा गच्छति। यो गायत्रे प्रातःसवने त्रिष्टुभं गायति। जगतीं गायति। अनुष्टुभं गायति। पङ्क्तिं गायति। आस्ते गायत्रं द्वे गायति। प्राणमेव तदभ्येति। प्राणो हि गायत्रं पन्थानमेव तदभ्येति। पन्था हि गायत्रम्। रथन्तरवर्णामुत्तमां गायति। इयं वै रथन्तरमस्यामेव प्रतितिष्ठति ॥१॥

॥ ३ ॥

२.२

ता वा एता देवलोकाय युज्यन्ते यत्पराच्यः। प्रतीच्यो मनुष्यलोकाय। एष वाव जात एषोऽवलुप्तजरायुरेष आर्त्विजीनो यस्य धुरो गीयन्ते। यश्चैवं विद्वान्धुरो गायति। जातमेवैनमन्नाद्याय परिवृणक्ति। उभावन्नमत्त उद्गाता च यजमानश्च। या प्रथमा तामन्नाद्यं ध्यायन्गायेद्। रेतस एव तत्सिक्तायान्नाद्यं प्रतिदधाति। न हिं कुर्याद्। यद्धिंकुर्याद्वज्रेण हिङ्कारेण रेतः सिक्तं विच्छिन्द्याद्। रेतस्या छन्दो युज्यते। मनो धीयते। या द्वितीया तां गायत्रीभागां गायꣳस्तस्या द्वे अक्षरे सशयनी व्यतिषजति। मध्यमस्य च पदस्योत्तममुत्तमस्य च प्रथमम्। व्यतिषक्तौ प्राणापानौ प्रजा दधतः। गायत्री छन्दो युज्यते। प्राणापानौ धीयेते। या तृतीया त्रिष्टुब्भागां गायꣳस्तस्या द्वे उत्तमार्द्धेऽक्षरे द्योतयति। चक्षुरेव तद्युनक्ति। तस्माद्द्विरूपं चक्षुः कृष्णमन्यच्छुक्लमन्यत्। त्रिष्टुप् छन्दो युज्यते। चक्षुषी धीयेते। या चतुर्थी तां जगतीभागां गायꣳस्तस्याश्चत्वार्युत्तमार्द्धेऽक्षराणि

श्रोतयति । श्रोत्रमेव तद्युनक्ति । तस्माद्युक्त७ श्रोत्रम् । श्रोत्रे द्वे प्रतिश्रवणे द्वे । तस्मादपि पराङ् यन् प्रत्यङ् यन् शृणोति । जगती छन्दो युज्यते । श्रोत्रे धीयेते । या पञ्चमी तामनुष्टुब्भागां गाय७श्चतुर्धा व्यावृज्य गायेत् । चतुर्धा वा इदं पुरुषो वीर्याय विकृतो जायते । वीर्यायैवैनं तद्व्यावृज्य गायति । उच्चावचामिव गायेत् । उच्चावचेव हि वाक् । सङ्क्ष्णुत्येव गायेत् । सङ्क्ष्णुत्येव हि वाचं पुरुषो वदति । अनुष्टुप् छन्दो युज्यते । वाग् धीयते । या षष्ठी तां पङ्क्तिभागां गाय७स्तस्या द्वे द्वे अक्षरे उदासं गायत्या षड्भ्योऽक्षरेभ्यः । षडृतवः । ऋतुष्वेव प्रतितिष्ठति । पङ्क्तिश्छन्दो युज्यते । समानोदानौ धीयेते । सदिति प्रथमाया धुरो निधनम् । रेतसो ह्यधि सञ्जायते । समिति द्वितीयायाः । रेतसो ह्यधि सम्भवः । स्वरिति तृतीयायाः । प्रस्वर्गं लोकं जानाति । इडेति चतुर्थ्याः । पशवो वा इडा । पशुष्वेव प्रतितिष्ठति । वागिति पञ्चम्याः । सर्वा अस्मिन्पुण्या वाचो वदन्ति य एवं वेद । या प्रथमा तामायच्छन्निव गायेद् । आयत इव ह्ययमवाङ् प्राणः । या द्वितीया तां घोषिणीमिव गायेद् । घोषीव ह्ययमपानः । या तृतीया तामुद्यच्छन्निव गायेत् । उद्यत इव ह्ययं प्राणाः । या चतुर्थी तां निक्रीडन्निव गायेत् । निक्रीडित इव ह्ययं व्यानः । या पञ्चमी तां निरुक्तानिरुक्तामिव गायेत् । निरुक्तानिरुक्त इव ह्यय७ समानः । या षष्ठी तामुदासमिव गायेद् । उदस्त इव ह्ययमुदानः । यच्छृङ्गम् । रथन्तरवर्णामुत्तमां गायेत् । इयं वै रथन्तरम् । अस्यामेव प्रतितिष्ठति ॥२॥

॥ ४ ॥

२·३

देवा वा असुराश्चेषु लोकेष्वस्पर्द्धन्त । ते देवाः प्रजापतिमुपाधावन् । तेभ्य एतान्धुरः प्राणान्प्रायच्छत् । मनः प्रथमम् । अथ प्राणम् । अथ चक्षुः । अथ श्रोत्रम् । अथ वाचम् । ताभ्यः पञ्चभ्यो धूर्भ्यः पुरुषञ्च पशू७श्च निरमिमीत । तेन पुरुषेणासुरानधूर्वन् । यदधूर्वंस्तद्धुरां धूस्त्वम् । धूर्वति पाप्मानं भ्रातृव्यं य एवं वेद । यो वै धुरां धूस्त्वं वेद । धुरा धुरा भ्रातृव्याद्वसीयान् भवति । एतद्वै धुरां धूस्त्वं ये नानावीर्या नानारूपा नानाछन्दस्या नानादेवत्याः समान७ हिङ्कारमभिसम्पद्यन्ते । एतद्वै धुरां धूस्त्वम् । धूर्वति पाप्मानं भ्रातृव्यं य एवं वेद । यो वै धुर्षु महाव्रतं वेद । सर्वा अस्मिन्पुण्या वाचो वदन्ति । शिरो

गायत्र्युरस्त्रिष्टुम्मध्यं जगती पादावनुष्टुप्। सर्वा हास्मिन्पुण्या वाचो वदन्ति य एवं वेद। यो वा एवं धुरो विद्वानथासां व्रतं चरति। आगमिष्यतोऽस्य पूर्वेद्युः पुण्या कीर्त्तिरागच्छति। सुरभिरेव गन्धो गायत्र्या व्रतम्। दर्शनीयं त्रिष्टुभः। श्रवणीयं जगत्याः। यदेव वाचा पुण्यं वदति तदनुष्टुभः। तदु सर्वासां व्रतं तदु विद्वाꣳसमाहुरति नो वादीरिति। तदनादृत्यम्। यस्य वै धुरो विगीतास्तस्य। यस्य वा एता बहिष्पवमाने विगीयान्तराख्येषु सङ्गायन्ति। तस्य वै धुरो विगीतास्तस्य सङ्गीता यः कामयेतैकधा यजमानं यश ऋच्छेद्यथादिष्टं प्रजाः स्युरिति। होतुराज्ये गायेत्। एकधा यजमानं यश ऋच्छति यथादिष्टं प्रजा भवन्ति। यः कामयेत कल्पेरन्प्रजा यथादिष्टं यजमानः स्यादिति। यथाज्यं गायेत्। कल्पन्ते प्रजा यथादिष्टं यजमानो भवति यो वा एवं धुरो वेद। अनपजय्यमात्मने च यजमानाय च लोकं जयति। अति यजमानमात्मानं मृत्युं पराक् स्वर्गं लोकꣳ हरति ॥३॥

॥ ५ ॥

२.४

प्राञ्चमग्निमुन्नयन्ति। तस्मात्प्राङासीनो होतान्वाह। प्राङासीनो यजति। प्राङासीनः शꣳसति। असावादित्यः प्राङ्पाङ् सञ्चरति। तस्मादध्वर्युः प्राङ्पाङ् सञ्चरति। अथैष चन्द्रमा दक्षिणेनैति तस्माद् ब्रह्माणं दक्षिणत आसयन्ति। अथैतस्यामुदीच्यां दिशि भूयिष्ठं विद्योतते। तस्मादेतां दिशमुद्गाता प्रत्युद्गायति। अथैष आकाशो मध्यतो भूतानाꣳ सन्नः। तस्मान्मध्ये सदस्यमासयन्ति। उच्चावचा वा आपः। उतेव गाधा भवन्त्युतेव गम्भीराः। तस्माद्धोताशꣳसिन उतेव पञ्चर्चेन कुर्वन्त्युतेव भूयसा। आदित्यस्यैव गतꣳ रश्मयो यन्ति। यस्मादध्वर्योरिव गतं चमसाध्वर्यवोऽनुयन्ति ॥४॥

॥ ६ ॥

२.९

स यदि पशुतो व्याधीयेताध्वर्युर्म इदमकरिति विद्यात्। अथ यद्येनं पापिका कीर्त्तिरनूदियाद्धोता म इदमकरिति विद्यात्। अथ यद्यस्य योगक्षेमो व्यथेत ब्रह्मा म इदमकरिति विद्यात्। अथ यद्यात्मना वा प्रजया वा व्याधीयेतोद्गाता म इदमकरिति

विद्यात् । प्राणदेवत्यो वै ब्रह्मा वाग्देवत्या इतर ऋत्विजः । स यदि मन्येत ब्रह्मा म इदमकरिति । हरितꣳ हिरण्यं दर्भनाड्या प्रबध्य स्रुच्यवधाय चतुर्गृहीतमाज्यं गृहीत्वा जुहुयान्नमः प्राणाय वाचस्पतये स्वाहेति । यद्यु वा इतरे नमो वाचे प्राणपत्न्यै स्वाहेति । यदीतरो यदि वेतरे सर्वेष्वेवानुपर्यायं जुहुयान्नमः प्राणाय वाचस्पतये स्वाहा नमो वाचे प्राणपत्न्यै स्वाहेति । अथ तद्धिरण्यं ब्रह्मणे दद्याद् । अथ यदाह यज्ञो वाव यज्ञस्य प्रायश्चित्तिरिति । पुनर्यज्ञ एव सः । एते उ ह त्वेवाहुती यज्ञविभ्रष्टस्य प्रायश्चित्तिरिति ॥६॥

॥ ७ ॥

५·३

प्रजपातिर्देवेभ्य औदुम्बरीमुदश्रयदसुषिरमूलामग्रन्थि पृथुबुध्नामेकजाम् । यजमानमात्र्यौदुम्बरी भवति । अथ कुब्जा वामना यजमाना ह्रस्वाश्चोर्ध्ववाहवः प्रच्छेदनं कुर्युः । कतिच्छेदनौदुम्बरी भवति । नवच्छेदनाग्निष्टोमसाध्यकेषु । एकादश वैश्यस्तोमातिरात्रपौण्डरीकेषु । सप्तदश वाजपेयाप्तोर्याम्णोः । एकविꣳशतिरश्वमेधे । अष्टाचत्वारिꣳशतं पुरुषमेधे । अपरिमितं सर्वमेधे । य एवं विद्वानौदुम्बरीमुच्छ्रयति । सोऽपचितिमाप्नोति । प्रजापतिरकामयतापचितिमाप्नुवानीति । स औदुम्बरीमुदश्रयत् । सोऽपचितिमाप्नोद् । ऊर्ग्वा उदुम्बरोऽन्नꣳ साम । तस्मात्सामगेभ्योऽपचितिं करवाणीति । य एवंविद्वौदुम्बरीमुच्छ्रयति । अपचितिमेवाप्नोति ॥३॥

॥ ८ ॥

५·५

ब्रह्मवादिनो वदन्ति कस्माद्ब्राह्मणः सायमासीनः सन्ध्यामुपास्ते । कस्मात्प्रातस्तिष्ठन् । का च सन्ध्या । कश्च सन्ध्यायाः कालः । किञ्च सन्ध्यायाः सन्ध्यात्वम् । देवाश्च वा असुराश्चास्पर्धन्त । तेऽसुरा आदित्यमभिद्रवन् । स आदित्योऽविभेत् । तस्य हृदयं कूर्मरूपेणातिष्ठत् । स प्रजापतिमुपाधावत् । तस्य प्रजापतिरेतद्भेषजमपश्यत् । ऋतं च सत्यञ्च ब्रह्म चोङ्कारञ्च त्रिपदाञ्च गायत्रीं ब्रह्मणो मुखमपश्यत् । तस्माद्ब्राह्मणोऽहोरात्रस्य संयोगे सन्ध्यामुपास्ते । सज्योतिष्याज्योतिषो दर्शनात् । सोऽस्याः कालः सा सन्ध्या । तत्सन्ध्यायाः सन्ध्यात्वम् । यत्सायमासीनः सन्ध्या-

मुपास्ते तया वीरस्थानं जयति। अथ यदपः प्रयुङ्क्ते ता विप्रुषो वज्रीभवन्ति। ता विप्रुषो वज्रीभूत्वाऽसुरानपाघ्नन्ति। ततो देवा अभवन्परासुराः। भवत्यात्मना परास्य भ्रातृव्यो भवति य एवं वेद। यत्सायं प्रातश्च सन्ध्यामुपास्ते तया वीरस्थानं सन्ततमविच्छिन्नं भवति य एवं वेद ॥५॥

॥ ९ ॥

५.६

अथैवा चन्द्रमसः क्षयवृद्धिर्भवति। यदा वै चन्द्रमाः क्षीयते चाप्यायते च तदनुव्याख्यास्यामः। पूर्वपक्षे वै देवा दीक्षन्ते तेऽपरपक्षे सोमं भक्षयन्ति। तत्रेमानि त्रीणि पात्राण्युपधीयन्ते पृथिवी पात्रमन्तरिक्षं पात्रं द्यौः पात्रमिति। ते देवा दिव्येन पात्रेणादित्याः प्रथमं पञ्चकलं पञ्चमीं भक्षयन्ति। तेऽन्तरिक्षपात्रेण रुद्रा द्वितीयं पञ्चकलं दशमीं भक्षयन्ति ते पृथिव्या पात्रेण वसवस्तृतीयं पञ्चकलं पञ्चदशीं भक्षयन्ति। षोडशी कलावशिष्यते। षोडशकलो वै चन्द्रमाः। स ओषधीश्च वनस्पतीꣳश्च गाश्च पशूꣳश्चादित्यञ्च ब्रह्म च ब्राह्मणाꣳश्चानु प्रविशति तं देवा इन्द्रज्येष्ठाः सोमपाश्चासोमपाश्च यथा पितरं पितामहं प्रपितामहं वा वृद्धं प्रलयमुपगच्छमानं व्याधिगतं मरिष्यतीति वा ताꣳ रात्रिं वसन्ते। तदमावास्याया अमावास्यात्वम्। तस्मादमावास्यायां नाध्येतव्यं भवति। अथ सम्भरणश्च तमोषधीभ्यश्च वनस्पतिभ्यश्च गोभ्यश्च पशुभ्यश्चादित्याच्च ब्रह्मणश्च ब्राह्मणेभ्यश्च सन्नयन्ते। तत्सान्नाय्यस्य सान्नाय्यत्वम्। चन्द्रमा वै धाता। या पूर्वा पूर्णमासी सानुमतिः। योत्तरा सा राका। या पूर्वामावास्या सा सिनीवाली। योत्तरा सा कुहूः। योऽनुपश्यत्यन्यं न पश्यति तन्मिथुनमेवास्य भवति। पुष्ये चानुमतिर्ज्ञेया सिनीवाली तु द्वापरे। खर्वायां तु भवेद्राका कृतपूर्वं कुहूर्भवेत् ॥ न्यूने चानुमतिं विद्यान्न्यूनेऽस्मिन्दृश्यते तु सा। सा सिनीवाली। राकायां पूर्णचन्द्रस्तु कुह्वां वै स न दृश्यते ॥६॥

॥ १० ॥

५.७

स्वाहा वै कुतः सम्भूता कस्य दुहिता केन प्रकृता किंगोत्रा कत्यक्षरा कतिपदा कतिमात्रा कतिवर्णा कत्युच्छ्वासा किञ्चास्याः शरीरं कान्यङ्गानि कानि लोमानि कति शिराꣳसि कति वा चक्षूꣳषि किमस्या आस्यं किम्प्रावृता कौ बाहू कौ पादौ क्व स्थिता किमधिष्ठाना कथं च स्वाहां प्रतिगृह्णासि। ब्रूहि। स्वाहाया

रूपं च दैवतं च। स्वाहा वै सत्यसम्भूता ब्रह्मणो दुहिता ब्रह्मप्रकृता लातव्यस-गोत्रा त्रीण्यक्षराण्येकं पदं त्रयो वर्णाः शुक्लः पद्मः सुवर्ण इति चत्वारोऽस्यै वेदाः शरीरꣳ षडङ्गान्यङ्गान्योषधिवनस्पतयो लोमानि द्वे चास्याः शिरसी एकं शिरोऽमावास्या द्वितीयं पूर्णमासी चक्षुश्चन्द्रादित्यावाज्यभागौ हुतं दक्षिणा-प्रावृता बृहद्रथन्तरे पादावृग्यजुःसामगतिः। सा स्वाहा सा स्वधा स वषट्कारः। सैषा देवेषु वषट्कारभूता प्रयुज्यते। पितृयज्ञेषु स्वधाभूता शकटीमुखी पृथिवी-मन्तरिक्षेण विपर्येति। तस्या अग्निर्दैवतं ब्राह्मणो रूपं यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाꣳ स्वाहेति। तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥७॥

॥ ११ ॥

६·८

सोऽन्तरिक्षमन्वावर्तते। अथ यदास्य विवाता वाता वायन्तेऽभ्रेषु चाप-रूपाणि दृश्यन्ते खरकरभमन्थकङ्ककपोतोलूककाकगृध्रश्येनभासवायसगोमायुसꣳ-स्थानि। उपरि पाꣳसुमाꣳसपेश्यस्थिरुधिरवर्षाणि प्रवर्तन्ते। काकमिथुनानि दृश्यन्ते। रात्रौ मणिधनुः पश्येत्। शशका ग्रामं विशन्ति। वृक्षाः स्रवन्ति रुधिराणि। आकाशे राजकुलं वसतीति। एवमादीनि तान्येतानि सर्वाणि वायुदेवत्यान्यद्भुतानि। प्रायश्चित्तानि भवन्ति। वात आवातु भेषजमिति स्थालीपाकꣳ हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति वायवे स्वाहा महद्भूताधिपतये स्वाहा शीघ्रपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहेति। व्याहृति-भिर्हुत्वाऽथ साम गायेत् ॥८॥

॥ १२ ॥

६·१२

स सर्वां दिशमन्वावर्तते। यदास्यामानुषाणामतिधृतिमतिदुःखं वा पर्वताः स्फुटन्ति। निपतन्त्याकाशात्। भूमिः कम्पते। महाद्रुमा उन्मूलन्ति। अश्मानः प्लवन्ति। तटाकानि प्रज्वलन्ति। चतुष्पादं पञ्चपादं भवतीत्येवमादीनि तान्येतानि सर्वाणि सूर्यदेवत्यान्यद्भुतानि। प्रायश्चित्तानि भवन्ति। उदु त्यं जातवेदसमिति स्थालीपाकꣳ हुत्वा पञ्चभिराज्याहुतिभिरभिजुहोति सूर्याय स्वाहा सर्वग्रहाधिपतये स्वाहा किरणपाणये स्वाहेश्वराय स्वाहा सर्वपापशमनाय स्वाहेति। व्याहृति-भिर्हुत्वाथ साम गायेत् ॥१२॥

# ७। जैमिनीयं तलवकारब्राह्मणम्

॥ १ ॥

१.७

असौ वा आदित्योऽस्तं यन्षोढा विम्रोचति। व्यम्रुचदिति ह स्म वा एतं पूर्वे पुराणिन आचक्षते। अथैतर्हि न्यम्रुचदिति। स वा एषोऽस्तं यन्ब्राह्मणमेव श्रद्धया प्रविशति पयसा पशूंस्तेजसाग्निमूर्जौषधी रसेनापः स्वधया वनस्पतीन्। स यद्ब्राह्मणोऽग्निहोत्रपात्राणि निर्णेनेक्ति यत्परिचेष्टति ययैवैनं श्रद्धया प्रविष्टो भवति तामेवास्मिंस्तत्सम्भरति। अथ यत्पयो दुहन्ति येन पयसा पशून्प्रविष्टो भवति तदेवास्मिंस्तत्सम्भरति। अथ यदङ्गारान्निरूहति येन तेजसाग्निं प्रविष्टो भवति तदेवास्मिंस्तत्सम्भरति। अथ यत्तृणेनावद्योतयति ययोर्जौषधीः प्रविष्टो भवति तामेवास्मिंस्तत्सम्भरति। अथ यत्समिधमभ्यादधाति यया स्वधया वनस्पतान्प्रविष्टो भवति तामेवास्मिंस्तत्सम्भरति ॥७॥

॥ २ ॥

१.१५

तदाहुर्यज्जीवन्पुरुषः करोत्येव साधु करोति पापं का तयोर्दुष्कृतसुकृतयो-र्व्यावृत्तिरिति। यद्ध वै जीवन्पुरुषः साधु करोति प्राणांस्तदभिसम्पद्यते। अथ यद्दुष्कृतं शरीरं तद्। स यदस्माल्लोकादेवंवित्प्रैति तस्य प्राणेन सह सुकृत-मुत्क्रामति शरीरेण सह दुष्कृतं हीयते। तदाहुर्दुर्विदितं वै तद्यदा मर्त्यवान् दुष्कृतेन सह वसात्। यो वा एतेन जीवन्नेव व्यावर्तते तत्सुविदितमिति। तद्वा एतदग्निहोत्रमेवाभिसम्पद्यते ॥१५॥

॥ ३ ॥

१.१७

द्वे ह वाव योनी। देवयोनिर्हैवान्या मनुष्ययोनिरन्या। द्वा उ हैव लोकौ। देवलोको हैवान्यो मनुष्यलोकोऽन्यः। सा या मनुष्ययोनिर्मनुष्यलोक एव सः। तत् स्त्रियै प्रजननम्। अतोऽधि प्रजाः प्रजायन्ते। तस्मादु कल्याणीं जाया-मिच्छेत कल्याणो म आत्मा सम्भवादिति। तस्मादु जायां जुगुप्सेन् नेन्मम

योनौ मम लोकेऽन्यः सम्भवादिति। तस्य वै सम्भविष्यतः प्राणा अग्रे प्रविशन्त्यथ रेतः सिच्यते। स इमान्प्राणानाकाशानभिनिर्वर्तते। तस्मादु समानस्यैव रेतसस्सतो यादृश एव भवति तादृशो जायते। अथैषा देवयोनिर्देवलोको यदाहवनीयः। एषा ह वै देवयोनिर्देवलोकः। तस्माद्यो गार्हपत्ये जुहुयादकृतं करोतीत्येवैनं मन्येरन्। स यज्जुहोति यत्साधु करोत्येतस्यामेवैतद्देवयोनावात्मानं सिञ्चति। सोऽस्यात्माऽमुष्मिन्नादित्ये सम्भवति। स हैवंविद्वान्द्व्यात्मा द्वियोनिः। एकात्मा हैवैकयोनिरेतदविद्वान्। स यस्माल्लोकादेवंवित् प्रैति ॥१७॥

॥ ४ ॥

१.१८

तस्य प्राणः प्रथम उत्क्रामति। स हेत्वा देवेभ्य आचष्ट इयदस्य साधु कृतमियत्पापमिति। अथ हायं धूमेन सहोर्ध्व उत्क्रामति। तस्य हैतस्यर्तवो द्वारपाः। तेभ्यो हैतेन प्रब्रुवीत। विचक्षणादृतवो रेत आभृतमर्धमास्यं प्रसुतात्पित्र्यावतः। तं मा पुंसि कर्तर्येरयध्वं पुंसः कर्तुर्मातर्यासिषिक्त। स उपजायोपजायमानो द्वादशेन त्रयोदशोपमासः। समं तद्विदे प्रतितद्विदेऽहं तं मा ऋतवोऽमृत आनयध्वमिति। तं हर्तव आनयन्ते। यथा विद्वान् विद्वांसं यथा जानञ्जानन्तमेवं हैवैनमृतव आनयन्ते। तं हात्यर्जयन्ते। स हतमागच्छति तपन्तम्। तं हागतं पृच्छति कस्त्वमसीति। स यो ह नाम्ना वा गोत्रेण वा प्रब्रूते तं हाह यस्तेऽयं मय्यात्माभूदेष ते स इति। तस्मिन्हात्मन्प्रतिपन्न ऋतवः सम्प्रहाय्य पदृहीतमपकर्षन्ति। तस्य हाहोरात्रे लोकमाप्नुतः। तस्मा उ हैतेन प्रब्रुवीत कोऽहमस्मि सुवस्त्वं स त्वां स्वर्ग्यं स्वरगामिति। को ह वै प्रजापतिः। अथ हैवंविदेव सुवर्गः। स हि सुवर्गं गच्छति। तं हाह यस्त्वमसि सोऽहमस्मि योऽहमस्मि स त्वमस्येहीति। स एतमेव सुकृतरसमप्येति। तस्य पुत्रा दायमुपयन्ति पितरः साधुकृत्याम्। स हैवंविद्व्यात्मा द्विदायः। एकात्मा हैवैकदायः। एतद्विद्वानग्निहोत्रं जुहोति ॥१८॥

॥ ५ ॥

१.४२

भृगुर्ह वारुणिरनूचान आस। स हात्येव पितरं मेनेऽति देवानत्यन्यान्ब्राह्मणाननूचानान्। स ह वरुण ईक्षाञ्चक्रे न वै मे पुत्रः किञ्चन प्रजानाति।

हन्तैनं प्रज्ञापयानीति। तस्य ह प्राणानभिजग्राह। स ह तताम। स ह तान्तः परं लोकं जगाम। स हामुष्मिन् लोक आजगाम। पुरुष एव पुरुषं संवृश्च्याथैनं जघास। स होवाचाभूद्वतेदं किं स्विदिदमिति। तं होचुः पितरं वरुणं पृच्छासि स त इदं प्रवक्तेति। द्वितीयं हाजगाम। पुरुष एव पुरुषमाक्रन्दयन्तं जघास। स होवाचाभूद्वतेदं किं स्विदिदमिति। तं होचुः पितरं वरुणं पृच्छासि स त इदं प्रवक्तेति। तृतीयं हाजगाम। पुरुष एव तूष्णीमव्याहरन्तं जघास। स होवाचाभूद्वतेदं किं स्विदिदमिति। तं होचुः पितरं वरुणं पृच्छासि स त इदं प्रवक्तेति। चतुर्थं हाजगाम। द्वे स्त्रियौ महद्वित्तं जुगुपतुः। स होवाचाभूद्वतेदं किं स्विदिदमिति। तं होचुः पितरं वरुणं पृच्छासि स त इदं प्रवक्तेति। पञ्चमं हाजगाम। लोहितकुल्यां च घृतकुल्यां च प्रवाहुकू स्यन्दमाने। सा या लोहितकुल्यास तां कृष्णो नग्नः पुरुषो मुसली जुगोप। अथ या घृतकुल्या तस्यै हिरण्मयाः पुरुषा हिरण्मयैश्चमसैः सर्वान्कामानुदचिरे। स होवाचाभूद्वतेदं किं स्विदिदमिति। तं होचुः पितरं वरुणं पृच्छासि स त इदं प्रवक्तेति। षष्ठं हाजगाम। पञ्चनदीः पुष्करिणीः पुण्डरीकिणीर्मधूदकाः स्यन्दमानाः। तासु नृत्तगीतं वीणाघोषोऽप्सरसां गणाः सुरभिगन्धो महान्घोषो बभूव। स होवाचाभूद्वतेदं किं स्विदिदमिति। तं होचुः पितरं वरुणं पृच्छासि स त इदं प्रवक्तेति ॥४२॥

॥ ६ ॥

१.४३

स ह तत एवाववृते। स ह वरुणमेवाजगाम। तं होवाचागास्ताता३ इति। आगां ततेति। अदर्शस्ताता३ इति। अदर्शं ततेति। किं ततेति। पुरुष एव पुरुषं संवृश्च्याथैनमघसदिति। ओमिति होवाच। ये वा अस्मिन् लोकेऽग्निहोत्रमजुह्वतोऽनेवंविदो वनस्पतीन्संवृश्च्याभ्यादधति तान्वा अमुष्मिंल्लोके वनस्पतयः पुरुषरूपं कृत्वा प्रत्यदन्ति। तस्य का निष्कृतिरिति। यदेवैतत्समिधमभ्यादधाति सा तस्य निष्कृतिस्तया तदतिमुच्यते इति। किं द्वितीयमिति। पुरुष एव पुरुषमाक्रन्दयन्तमघसदिति। ओमिति होवाच। ये वा अस्मिंल्लोकेऽग्निहोत्रमजुह्वतोऽनेवंविदः पशूनाक्रन्दयतः पचन्ते तान्वा अमुष्मिंल्लोके पशवः पुरुषरूपं कृत्वा प्रत्यदन्ति। तस्य का निष्कृतिरिति। यदेवैतद्वाचा पूर्वामाहुतिं जुहोति सा तस्य निष्कृतिस्तया तदतिमुच्यते इति। किं

तृतीयमिति। पुरुष एव पुरुषं तूष्णीमव्याहरन्तमत्सदिति। ओमिति होवाच। ये वा अस्मिन्लोकेऽग्निहोत्रमजुह्वतोऽनेवंविदो व्रीहियवांस्तूष्णीमव्याहरतः पचन्ते। तान्वा अमुष्मिन्लोके व्रीहियवाः पुरुषरूपं कृत्वा प्रत्यदन्ति। तस्य का निष्कृतिरिति। यदेवैतन्मनसोत्तरामाहुतिं जुहोति सा तस्य निष्कृतिस्तया तदतिमुच्यते इति। किं चतुर्थमिति। द्वे स्त्रियौ महद्वित्तमजुगुपतामिति। ओमिति होवाच। श्रद्धा च वैते अश्रद्धा चाभूताम्। ये वा अस्मिन्लोकेऽग्निहोत्रमजुह्वतोऽनेवंविदोऽश्रद्दधाना यजन्ते तदश्रद्धां गच्छति यच्छ्रद्दधानास्तच्छ्रद्धाम्। तस्य का निष्कृतिरिति। यदेवैतदङ्गुल्या प्राश्नाति सा तस्य निष्कृतिस्तया तदतिमुच्यते ॥४३॥

॥ ७ ॥

१·४४

किं पञ्चममिति। लोहितकुल्यां च घृतकुल्यां च प्रवाहुक् स्यन्दमाने। सा या लोहितकुल्याभूत् तां कृष्णो नग्नः पुरुषो मुसली जुगोप। अथ या घृतकुल्या तस्यै हिरण्मयाः पुरुषा हिरण्मयैश्चमसैः सर्वान्कामानुदचन्त इति। ओमिति होवाच। ये वा अस्मिन्लोकेऽग्निहोत्रमजुह्वतो नैवंविदो ब्राह्मणस्य लोहितमुत्पीडयन्ति सा सा लोहितकुल्या। अथ य एनां कृष्णो नग्नः पुरुषो मुसल्यजूगुपत्क्रोधः स तस्यो तदेवान्नम् इति। तस्य का निष्कृतिरिति। यदेवैतत्स्रुचा प्राश्नाति सा तस्य निष्कृतिस्तया तदतिमुच्यत इति। अथ या एताः स्रुचो निर्णिज्योदीचीरप उत्सिञ्चति सा सा घृतकुल्या। तस्यै हिरण्मयाः पुरुषा हिरण्मयैश्चमसैः सर्वान् कामानुदचन्त इति। किं षष्ठमिति। पञ्च नदीः पुष्करिणीः पुण्डरीकिणीर्मधूदकाः स्यन्दमानाः। तासु नृत्तगीतं वीणाघोषोऽप्सरसां गणाः सुरभिर्गन्धो महान् घोषोऽभूदिति। ओमिति होवाच। मम वैते लोका अभूवन्निति। ते केनाभिजय्या इति। एतेनैव पञ्चगृहीतेन पञ्चोन्नीतेनेति। स होवाच न वै किलानग्निहोत्राल्लोकजित्या अवकाशोऽस्ति। अद्यैव मेऽग्न्याधेयस्योपवथ इति। तस्य तथा चक्रुः। स य एवं विद्वानग्निहोत्रं जुहोति नैनममुष्मिन्लोके वनस्पतयः पुरुषरूपं कृत्वा प्रत्यदन्ति न पशवो न व्रीहियवा नास्येष्टापूर्तं श्रद्धां चाश्रद्धां च गच्छतोऽपहते लोहितकुल्यामवरुन्धे घृतकुल्याम् ॥४४॥

॥ ८ ॥

१.८७

आदित्यो वा एतदग्राग्र आसीत् यत्रैतच्चात्वालमदोऽग्निः। स इदं सर्वं प्रातपत्। तस्य देवाः प्रदाहादबिभयुः। तेऽब्रुवन्सर्वं वा अयमिदं प्रधक्ष्यति वीमौ परिहरामेति। तमतस्तिसृभिराददत तिसृभिरन्तरिक्षात्तिसृभिर्दिवमगमयन्। स ततः पराङेवापतत्। त एतदावदुत्तममक्षरमपश्यन्। तेनैनमर्वाञ्चम-कुर्वन्। तत एतदर्वाङ् तपति। एतेनो एवाक्षरेणाग्निमस्मिँल्लोकेऽदधुः। स यं कामयेत यजमानः स्वर्गलोकः स्यादिति चात्वालमेवैनमवख्याप्योद्गायेत्। तमतस्तिसृभिरेवाददते तिसृभिरन्तरिक्षात्तिसृभिर्दिवं गमयन्ति। ईश्वरो ह तु प्रमायुको भवितोः। पराचीभिस्तुवन्ति। स यदेव सर्वाभिः स्तुयुरथोत्तमामग्रे ब्रूयादथावरामथावराम्। ताः सर्वा अर्वाचीः। तदु वा आहुः सत्रैतत्प्रत्यवरूढं स्वर्गकाम्या वै यजत इति। यदेवाद आवदुत्तममक्षरं भवति तेनास्माल्लोकान्ना-वच्छिद्यते ॥८७॥

॥ ९ ॥

१.९७

देवासुरा अस्पर्द्धन्त। ते देवा वज्रं क्षुरपविमसृजन्त पुरुष एव। तमसुरानभ्य-वृञ्जन्। सोऽसुरानपोह्य देवानभ्यावर्तत। तस्माद्देवा अबिभयुः। तमभिपद्य त्रेधा समशृणन्। स त्रेधा संशीर्ण उदेवातिष्ठत्। तमारभ्य पर्यैक्षन्त। तस्मिन्देवताश्छन्दांसि पुरुषे प्रतिष्ठा अपश्यन्। तेऽब्रुवन्देवता वै छन्दांसीमा अस्मिन्पुरुषे प्रविष्टाः। अस्मिन्वा अयं लोके पुण्यं जीवित्वेष्टापूर्तेन तपसा सुकृतेनास्मानन्वागमिष्यतीति। ते वै तथा करवामेत्यब्रुवन्यथा नो नान्वागच्छा-दिति। तस्य वै पाप्मानमन्वादधामेति। तस्मा एतं पाप्मानमन्वादधुः ॥९७॥

॥ १० ॥

१.९८

स्वप्नं तन्द्रीं मन्युमशनायामक्षकाम्यां स्त्रीकाम्यामिति। एते ह वै पाप्मानः पुरुषमस्मिँल्लोके सचन्ते य एतदग्रे तीर्त्वाऽस्मिँल्लोके साधु चिकीर्षात्तस्व-मस्मिँल्लोके धीप्सतात् इत्यग्निमस्मिँल्लोकेऽदधुर्वायुमन्तरिक्ष आदित्यं दिवि। उग्रदेवो ह स्माह राजनिर्नाहं मनुष्यायारातीयामियानस्मै त्रीन् देवानां

श्रेष्ठानरातीयतोऽशृणोम्। अरातीतमरातीतं होव तस्मै यस्मा एता देवता अरातीयन्तीति। अथो हास्मादेव ता नारातीयन्ति य एवं वेद। अथो ह तमेव धीप्सन्ति य एवं विद्वांसं धीप्सतीति। ते देवा अब्रुवन्या एवेमा देवताश्छन्दांसि च पुरुषे प्रविष्टा एताभिरेवासुरान्धूर्वामेति ॥९८॥

॥ ११ ॥

१·१२४

द्वे उ ह वाव सामनी स्तोभवच्चैवास्तोभवच्च। तयोर्यत्स्तोभवत्तत्क्षत्रमथ यदस्तोभवत्तद्ब्रह्म। उभयं ब्रह्म च क्षत्रं चावरुन्धे य एवं वेद। अथ यौजाजयं त्रिणिधनं सवनानां क्लृप्त्यै। पावमानेन वै देवेभ्योऽन्नाद्यं प्रदीयते। तन्मध्ये-निधनं भवत्यन्नाद्यस्य विशेषाय। यद्धि देवेभ्यः सर्वमन्नाद्यं प्रदीयेत न तदिहा-न्नाद्यं परिशिष्येत यन्मनुष्याश्च पशवश्चोपजीवेयुः। तद्यन्मध्ये निधनं भवत्य-न्नाद्यस्यैव विशेषाय। देवानां वा असुरा यज्ञवेशसमचिकीर्षन्। तद्देवाः प्रत्यबुध्यन्त। त एतत्सामापश्यन्। ते प्रातःसवनमेव प्रथमेन निधनेन पर्यगृह्णन्माध्यन्दिनं द्वितीयेन तृतीयसवनं तृतीयेन। तानेव वज्रानुदयच्छन्। तानेव वज्रानुद्यतानसुरा नोपाधृष्णुवन्। ततो वै देवा अभवन्परासुराः। परास्य द्विषन् भ्रातृव्यो भवति। य एवं वेद। अथ ह क्लृप्त एव पवमानो यस्मिन्नधि त्रिणिधनं भवति सवनानामेव क्लृप्त्यै ॥१२४॥

॥ १२ ॥

१·१२५

देवासुराः संयत्ता ज्योङ् न व्यजयन्त। बृहस्पतिर्देवानां पुरोहित आसीदुशना काव्योऽसुराणाम्। तद्यद्देवावस्ताद्ब्रह्माक्रियत तत्परस्तादक्रियत। तत्समानं ब्रह्म न व्यजयत। तेषां ह त्रिशीर्षा गन्धर्वो विजयस्यावेत्। स ह्यास। तस्य हाप्स्वन्तर्नौनगरं परिप्लवमास। तदिन्द्रोऽन्वबुध्यत त्रिशीर्षा वै नो विजयस्य वेदेति। तस्य जायामाच्छैत् एतस्यैव विजयस्य कामाय। तामब्रवीत् पृच्छतात्पतिं य इमे देवासुराः संयत्ता ज्योगभूवन् कतर एषां जेष्यन्तीति। तद्दै व संवदमानावाजगाम। स ह तदेव नौमण्ड उपशिश्लेष। जलायुका वा तृणकं वा भूत्वा। सेयं पतिं पप्रच्छ य इमे देवासुराः संयत्ता ज्योगभूवन् कतर एषां जेष्यन्तीति ॥१२५॥

॥ १३ ॥

१·१२६

मोच्चैरिति होवाच कर्णिनी वै भूमिरिति। तदिदमप्येतदाहुर्मोच्चैः कर्णिनी वै भूमिरिति। नेति होवाच। ब्रूह्येवेति। स होवाच। ब्राह्मणाविमौ समं विदतुर्बृहस्पतिरयं देवेषूशना काव्योऽसुरेषु। तौ यत्कुरुतस्तत्सममेव यच्छति। या इतर आहुतीर्जुहोति ता इतरः। ताः समेत्य यथायथमेव पुनर्विपरायन्ति। तयोर्यतरो यतरानुपसमेष्यति ते जेष्यन्तीति। तद्धेवेन्द्रोऽनुबुध्य शुको भूत्वोत्पपात। तं हान्वीक्ष्य पतन्तमुवाच योषामसौ हरितवर्णकः पतति ते जेष्यन्तीति। स होशनसं काव्यमाजगामासुरेषु। तं होवाचर्षे कमिमं जनं वर्धयस्यस्माकं वै त्वमसि वयं वा तवास्मानभ्युपावर्तस्वेति। कथेति होवाच केन मोपमन्त्रयस इति। या इमा विरोचनस्य प्राह्रादेः कामदुघास्ताभिरिति। ताभिर्ह प्र त्विल्वेव प्रदुद्रुवतुः। तौ हासुरा अन्ववजज्ञिरे। तौ हान्वाजग्मुः। स होवाचर्षेऽनु वै नाविमेऽसुरा अग्मन्निति स वै तथा कुर्विति होवाच यथा नावेते नान्वागच्छानिति। तौ हैतत्प्रतिपेदाते ॥१२६॥

॥ १४ ॥

१·१२७

स्वायुधः पवते देव इन्दुरशस्तिहा वृजना रक्षमाणः। पिता देवानां जनिता सुदक्षो विष्टम्भो दिवो धरुणः पृथिव्याः॥ इति। आ दिवो विष्टम्भमुच्छिश्रियतुः। तं हैवासुरा नातीयुः। तौ हाभिः कामदुघाभिर्देवानाजग्मतुः। तौ हागतौ महयां चक्रे। ऋषिर्विप्रः पुरएता जनानामृभुर्धीर उशना काव्येन। स चिद्विवेद निहितं यदासामपीच्यं गुह्यं नाम गोनामिति॥

॥ १५ ॥

१·२२०

आ तू न इन्द्र क्षुमन्तमिति वैणवम्। वेणुर्वै वैश्वामित्रोऽकामयताग्र्यो मुख्यो ब्रह्मवर्चसी स्यामिति। स एतत्सामापश्यत्। तेनास्तुत। ततो वै सोऽग्र्यो मुख्यो ब्रह्मवर्चस्यभवत्। अग्र्यो मुख्यो ब्रह्मवर्चसी भवति य एवं वेद। यद्वेणुर्वैश्वामित्रोऽपश्यत्तस्माद्वैणवमित्याख्यायते। तद्वेवाचक्षतापालमिति। अपाला

ह वा आत्रेयी तिलका वारुच्छ्रसाप्यास। सा कामयताप पापं वर्णं हनीयेति। सैतत्सामापश्यत्। तेनास्तुत। सा तीर्थमभ्यवयती सोमांशुमविन्दत्। तं समखादत्। तस्यै ग्रावाण इव दन्ता ऊदुः। स इन्द्र आद्रवत् ग्रावाणो वै वदन्तीति। साभिव्याहरत्। कन्यावारवायती सोममपि स्रुता विदत्। अस्तं भरन्त्यब्रवीदिन्द्राय सुनवै त्वा शक्राय सुनवै त्वेति। अस्यै वा इदं ग्रावाण इव दन्ता वदन्तीति विदित्वेन्द्रः पराङ् आवर्तत। तमब्रवीत्। असौ य एषि वीरको गृहं गृहं वि चाकशत्। इमं जम्भसुतं पिब धानावन्तं करम्भिणम-पूपवन्तमुक्थिनमिति। अनाद्रियमाणमेवैतमब्रवीत्। आ च न त्वा चिकित्सा-मोऽधि चन त्वा नेमसि। इति। पुरा मा सर्वयर्चापाला स्तौतीत्यपपर्या-वर्तत। शनैरिव शनकैरिवेन्द्रायेन्दो परिस्रवेत्येवास्यै मुखात्सोमं निरधयत्। सोमपीथ इव ह वा अस्य स भवति य एवं विद्वान् स्त्रियै मुखमुपजिघ्रति ॥२२०॥

॥ १६ ॥

१·२२१

तामब्रवीत् अपाले किंकामासीति। साब्रवीत् इमानि त्रीणि विष्टपा तानीन्द्र विरोहय। शिरस्ततस्योर्वरामादिदं म उपोदरे। सर्वा ता रोमशा कृधीति। खलतिर्हास्यै पितास। तं ह्याखलतिं चकार। उर्वरा हास्य न जज्ञे। सो ह जज्ञे। उपस्थे हास्यै रोमाणि नासुः। तान्यु ह जज्ञिरे। तां खे रथस्यावृहत्। सा गोधा भवत्। तां खेऽनसोऽप्यवृहत्। सा कृकला-स्यभवत्। तां खे युगस्यात्यवृहत्। सा संश्लिष्टिकाभवत्। तदेषात्यनूच्यते खे रथस्य खेऽनसः खे युगस्य शतक्रतो। अपालामिन्द्र त्रिष्पूत्व्यकृणोः सूर्यत्व-चमिति। तस्यै ह यत्कल्याणतमं तद्रूपमास। तदेतत्कामसनि साम। एतं वै सा काममकामयत। सोऽस्यै कामः समार्ध्यत। यत्काम एवैतेन साम्ना स्तुते समस्मै स काम ऋध्यते। यद्वपालात्रेय्यपश्यत्तस्मादापाल-मित्याख्यायते ॥२२१॥

॥ १७ ॥

१·३००

तदाहुः कति सामानीति। चत्वारीति ब्रूयात्। चत्वार्यु ह वै सामानि स्वारं निधनवत् ऐळं क्रूकसमम्। चतस्रो दिशश्चतुष्पादाः पशवः। चत्वारि

छन्दांसि यज्ञवाहा गायत्रीत्रिष्टुब्जगत्यनुष्टुप्। तान्यु ह वै त्रीण्येव स्वारं निधनवदैळम्। यदृक्समं स्वारमेव तत्। त्रिषवणो यज्ञस्त्रयः प्राणापानव्यानास्त्रय इमे लोकाः। ते उ ह द्वे एव स्वारं चैव निधनवच्च। या हीळा निधनमेव तत्। द्वाविमौ लोकावाविस्तमाविव द्वौ प्राणापानौ द्विपात्पुरुषः। तदु ह वा एकमेव। यद्धि निधनं येळा यदृक्समं स्वारमेव तदिति। तदेतदेकमेव साम स्वारमेव। य एवायं पवते तत्। याश्च ह वा अमूरुपरि पतन्ति याश्चाधः सर्पन्ति ता एतमेव स्वारं प्राणमुपजीवन्ति। स य एतदेवं वेद सर्वमायुरेति। स यो हैवंविद्वाञ्जामि कल्पयत्यजाम्येवास्य तत्कृतं भवति। तत्पर्युपर्यंजाम्येव चिकल्पियेत्' अमिथुनं तत् अप्रजननं यज्जामि। यथा पुमांसौ वा सह शयातां स्त्रियौ वा। किं पुमांसौ सह शयानौ प्रजायेतां किं स्त्रियौ तौ चेन्मिथुनीकर्तारं न लभेयाताम्। अथो यदेवाजामि तन्मिथुनं तत्प्रजननम्। आत्मा वै स्वरः प्रजा निधनं पशव इळा जायर्क्समम्। समानो वा आत्मा च जाया च। त एतमात्मनोभयतः प्रजाः परिगृहीता अपरावापाय। नास्य वित्तं परोप्यते य एवं वेद ॥२००॥

## ८ । गोपथब्राह्मणम्

॥ १ ॥

१.१.२३

वसोर्धारा नामेन्द्रनगरं तदसुराः पर्यवारयन्त। ते देवा भीता आसन् क इमानसुरानप हनिष्यतीति। त ओङ्कारं ब्रह्मणः पुत्रं ज्येष्ठं ददृशुः। ते तमब्रुवन्भवता मुखेनेमानसुराञ्जयेमेति। स होवाच किं मे प्रतिवाही भविष्यतीति। वरं वृणीष्वेति। वृणा इति। स वरमवृणीत। न मामनीरयित्वा ब्राह्मणा ब्रह्म वदेयुर्यदि वदेयुरब्रह्म तत्स्यादिति। तथेति। ते देवा देवयजनस्योत्तरार्द्धेऽसुरैः संयत्ता आसंस्तानोङ्कारेणाग्नीध्रीयाद्देवा असुरान्परा भावयन्त। तद्यत्पराभावयन्त तस्मादोङ्कारः पूर्व उच्यत इति। यो ह वा एतमोङ्कारं न वेदावशः स्यादिति। अथ य एवं वेद ब्रह्मवशः स्यादिति। तस्मादोङ्कार ऋच्यृग्भवति। यजुषि यजुः। साम्नि साम।

सूत्रे सूत्रम्। ब्राह्मणे ब्राह्मणम्। श्लोके श्लोकः। प्रणवे प्रणव इति ब्राह्मणम् ॥२३॥

॥ २ ॥

१·१·३१

एतद्ध स्मैतद्विद्वांसमेकादशाक्षं मौद्गल्यं ग्लावो मैत्रेयोऽभ्याजगाम। स तस्मिन्ब्रह्मवर्चसं वसतीति विज्ञायोवाच। किं स्विन्मर्यादा अयं तां मौद्गल्योऽध्येति यदस्मिन् ब्रह्मचर्यं वसतीति। तद्धि मौद्गल्यस्यान्तेवासी शुश्राव। स आचार्यायाव्रज्याचष्टे दुरधीयानं वा अयं भवन्तमवोचद्योऽयमद्यातिथिर्भवति। किं सौम्य विद्वानिति। त्रीन् वेदान्ब्रूते भो ३ इति। तस्य सौम्य यो विस्पष्टो विजिगीषोऽन्तेवासी तमाह्वयेति। तमाजुहाव। तमभ्युवाचासाविति भो ३ इति। किं सौम्य त आचार्योऽध्येतीति। त्रीन् वेदान्ब्रूते भो ३ इति। यत्तु खलु सौम्यास्माभिः सर्वे वेदा मुखतो गृहीताः कथन्त एवमाचार्यो भाषते कथं नु शिष्टाः शिष्टेभ्य एवं भाषेरन्यं ह्येनमहं प्रश्नं पृच्छामि न तं विवक्ष्यति न ह्येतमध्येतीति। स ह मौद्गल्यः स्वमन्तेवासिनमुवाच। परेहि सौम्य ग्लावं मैत्रेयमुपसीदाधीहि भोः सावित्रीं गायत्रीं चतुर्विंशतियोनिं द्वादशमिथुनां यस्या भृग्वङ्गिरसश्चक्षुर्यस्यां सर्वमिदं श्रितं तां भवान्प्रब्रवीत्विति। स चेत्सौम्य दुरधीयानो भविष्यत्याचार्यो वाचं ब्रह्मचारी ब्रह्मचारिणे सावित्रीं प्राहेति वक्ष्यति। तन्त्वं ब्रूया दुरधीयानं तं वै भवान्मौद्गल्यमवोचत्स त्वा यं प्रश्नमप्राक्षीन्न तं व्यवोचः पुरा संवत्सरादार्त्तिमाकृप्यसीति ॥३१॥

॥ ३ ॥

१·१·३२

स तत्राजगाम यत्रेतरो बभूव। तं ह पप्रच्छ। स ह न प्रतिपेदे। तं होवाच। दुरधीयानं तं वै भवान्मौद्गल्यमवोचत्स त्वां यं प्रश्नमप्राक्षीन्न तं व्यवोचः पुरा संवत्सरादार्त्तिमाकृप्यसीति। स ह मैत्रेयः स्वानन्तेवासिन उवाच यथार्थं भवन्तो यथागृहं यथामनो विप्रसृज्यन्ताम्। दुरधीयानं वा अहं मौद्गल्यमवोचं स मा यं प्रश्नमप्राक्षीन्न तं व्यवोचं तमुपेत्य शान्तिं करिष्यामीति। स ह मैत्रेयः प्रातः समित्पाणिर्मौद्गल्यमुपससादासौ वा अहं भो मैत्रेयः। किमर्थमिति।

दुरधीयानं वा अहं भवन्तमवोचं त्वं मा यं प्रश्नमप्राक्षीर्न तं व्यवोचं त्वामुपेष्यामि शान्तिं करिष्यामीति। स होवाचात्र वा उपेतं च सर्वं च कृतं पापकेन त्वा यानेन चरन्तमाहू रथोऽयं मम कल्याणस्तं ते ददामि तेन याहीति। स होवाचैतद्देवात्रात्विषं चानृशंस्यं च यथा भवानाहोपायामित्येवं भवन्तमिति। तं होपेयाय तं होपेत्य पप्रच्छ किं स्विदाहुर्भोः सवितुर्वरेण्यं भर्गो देवस्य कवयः किमाहुर्धियो विचक्ष्व यदि ताः प्रविश्य प्रचोदयात्सविता याभिरेतीति। तमुपसंगृह्य पप्रच्छाधीहि भोः कः सविता का सावित्रीति ॥३२॥

॥ ४ ॥

१.२.२

जायमानो ह वै ब्राह्मणः सप्तेन्द्रियाण्यभिजायन्ते। ब्रह्मवर्चसञ्च यशश्च स्वप्नश्च क्रोधश्च श्लाघं च रूपञ्च पुण्यमेव गन्धं सप्तमम्। तानि ह वा अस्यैतानि ब्रह्मचर्यमुपेतस्यापक्रामन्ति। मृगानस्य ब्रह्मवर्चसं गच्छति। आचार्यं यशः। अजगरं स्वप्नः। वराहं क्रोधः। अपः श्लाघम्। कुमारीं रूपम्। ओषधिवनस्पतीन्पुण्यो गन्धः। स यन्मृगाजिनानि वस्ते तेन तद्ब्रह्मवर्चसमवरुन्धे। यदस्य मृगेषु भवति। स ह स्नाती ब्रह्मवर्चसी भवति। स यदहरहराचार्याय कर्म करोति तेन तद्यशोऽवरुन्धे यदस्याचार्ये भवति। स ह स्नातो यशस्वी भवति। स यत्सुषुप्सुर्निद्रां निनयति तेन तं स्वप्नमवरुन्धे योऽस्याजगरे भवति। तं ह तं स्नातं स्वपन्तमाहुः स्वपितु मैनं बुबोधयिषेति। स क्रुद्धो वाचा न कञ्चन हिनस्ति पुरुषात्पुरुषात्पापीयानिव मन्यमानस्तेन तं क्रोधमवरुन्धे योऽस्य वराहे भवति। तस्य ह स्नातस्य क्रोधाः श्लाघीयस्त्वं विशन्ते। अथाद्भिः श्लाघमानो न स्नायात्तेन तं श्लाघमवरुन्धे योऽस्याप्सु भवति। स ह स्नातः श्लाघीयोऽन्येभ्यः श्लाघते। अथैतद्ब्रह्मचारिणो रूपं यत्कुमार्यास्तां नग्नां नोदीक्षेदेति वेति मुखं विपरिधापयेत्तेन तद्रूपमवरुन्धे यदस्य कुमार्यां भवति। तं ह स्नातं कुमारीमिव निरीक्षन्ते। अथैष ब्रह्मचारिणः पुण्यो गन्धो य ओषधिवनस्पतीनां तासां पुण्यं गन्धं प्रच्छिद्य नोपजिघ्रेत्तेन तं पुण्यं गन्धमवरुन्धे योऽस्यौषधिवनस्पतिषु भवति। स ह स्नातः पुण्यगन्धिर्भवति ॥२॥

॥ ५ ॥

१·२·६

ब्रह्म ह वै प्रजा मृत्यवे सम्प्रायच्छत् । ब्रह्मचारिणमेव न सम्प्रददौ । स होवाचास्याममस्मिन्निति । किमिति । यां रात्रीं समिधमनाहृत्य वसेत्तामायुषोऽवरुन्धीयेति । तस्माद्ब्रह्मचार्यहरहः समिध आहृत्य सायं प्रातरग्निं परिचरेत् । नोपर्युपसादयेदथ प्रतिष्ठापयेद् । यद्युपर्युपसादयेज्जीमूतवर्षी तदहः पर्जन्यो भवति । ते देवा अब्रुवन्ब्राह्मणो वा अयं ब्रह्मचर्यं चरिष्यति । ब्रूतास्मै भिक्षा इति । गृहपतिर्ब्रूते बहुचारी गृहपत्न्या इति । किमस्या वृञ्जीताददत्या इति । इष्टापूर्तसुकृतद्रविणमवरुन्ध्यादिति । तस्माद्ब्रह्मचारिणेऽहरहर्भिक्षां दद्यान्मा मेऽयमिष्टापूर्तसुकृतद्रविणमवरुन्ध्यादिति । सप्तमीं नातिनयेत् । सप्तमीमतिनयन्न ब्रह्मचारी भवति । समिद्भैक्षे सप्तरात्रमाचरितवान् ब्रह्मचारी पुनरुपनेयो भवति ॥६॥

॥ ६ ॥

१·२·७

नोपरिशायी स्यान्न गायनो न नर्तनो न सरणो न निष्ठीवेद् । यदुपरिशायी भवत्यभीक्ष्णं निवासा जायन्ते । यद्गायनो भवत्यभीक्ष्णश आक्रन्दान्धावन्ते । यन्नर्तनो भवत्यभीक्ष्णशः प्रेतान्निर्हरन्ते । यत्सरणो भवत्यभीक्ष्णशः प्रजाः संविशन्ते । यन्निष्ठीवति मध्य एव तदात्मनो निष्ठीवति । स चेन्निष्ठीवेद्दिवो नु मां यदत्रापि मधोरहं यदत्रापि रसस्य म इत्यात्मानमनुमन्त्रयते । दिवो नु मां यदत्रापि निरष्ठीविषममृतम् । अग्निश्च तत्सविता च पुनर्मे जठरे धत्ताम् । यदत्रापि मधोरहं निरष्ठोविषममृतम् । अग्निश्च तत्सविता च पुनर्मे जठरे धत्ताम् । यदत्रापि रसस्य मे परापतादास्यतः । तदिहोपह्वयामहे तन्म आप्यायतां पुनरिति । न श्मशानमातिष्ठेत् । स चेदभितिष्ठेदुदकं हस्ते कृत्वा यदीदमृतुकाम्येत्यभिमन्त्र्य जपन्त्सम्प्रोक्ष्य परिक्रामेत । समयायोपरिव्रजेत् । यदीदमृतुकाम्याघं रिप्रमुदेयिम । अन्धः श्लोण इव हीयतां मा नोऽन्वागादघं यत इति । अथ हैतद्देवानां परिपूतं यद्ब्रह्मचारी । तदप्येतदृचोक्तम् । देवानामेतत्परिपूतमभ्यारूढं चरति रोचमानम् । तस्मिन्त्सर्वे पशवस्तत्र यज्ञास्तस्मिन्नन्नं सह देवताभिरिति ब्राह्मणम् ॥७॥

॥ ७ ॥

१.२.१५

अदितिर्वै प्रजाकामौदनमपचत्तत उच्छिष्टं प्राश्नात्। सा गर्भमधत्त। तत आदित्या अजायन्त। य एष ओदनः पच्यत आरम्भणमेवैतत्क्रियते। आक्रमणमेव। प्रादेशमात्रीः समिधो भवन्ति। एतावान्ह्यात्मा प्रजापतिना सम्मितः। अग्नेर्वै या यज्ञिया तनूरश्वत्थे तया समगच्छत एषा स्वधृत्या। तनूर्यद्घृतं यद्घृतेन समिधोऽनक्ति। ताभ्यामेवैनं तत्तनूभ्यां समर्द्धयति। यन्निर्भागस्यादधात्यव- क्लृत्या वै वीर्यं क्रियते। यन्निर्भागस्यादधात्यवक्लृत्या एव। संवत्सरो वै प्रजननमग्निः प्रजननमेतत्प्रजननं यत्संवत्सरः। ऋचाग्नौ समिधमादधाति। प्रजननादेवैनं तत्प्रजनयिता प्रजनयत्येवेति। अत्तुर्वै पुरुषो न हि तद्वेद यदत्तु- मभिजायते। यन्नक्षत्रं तदाप्नोति। य एष ओदनः पच्यते। योनिरेवैषा क्रियते। यत्समिध आधीयन्ते रेतस्तद्धीयते। संवत्सरे वै रेतो हितं प्रजायते। यः संवत्सरे पर्येतेऽग्निमाधत्ते प्रजापतिरेवैनमाधत्ते। द्वादशसु रात्रीषु पुरा संवत्सरस्याधेयात्। ता हि संवत्सरप्रतिमाः। अथो तिसृष्वथो द्वयोः पूर्वेद्युराधेयात्। ते वा अग्नीनामाधानेनादित्या वा इत उत्तरेषाममुष्मिँल्लोक आयंस्ते पथिरक्षन्त इयन्। उत यक्ष्यमाणं प्रतिनुदन्ते। उच्छेषणभाजा वा आदित्या यदुच्छिष्टम्। यदुच्छिष्टेन समिधो अनक्ति तेभ्य एव प्रोवाच। तेभ्य एव प्रोच्य स्वर्गं लोकं यन्ति ॥१५॥

॥ ८ ॥

१.२.१९

देवाश्च ह वा असुराश्चास्पर्धन्त। ते देवा इन्द्रमब्रुवन्निमं नस्तावद्यज्ञं गोपाय यावदसुरैः संयतामहा इति। स वै नस्तेन रूपेण गोपाय येन नो रूपेण भूयिष्ठं छादयसि येन शक्ष्यसि गोप्तुमिति। स ऋग्वेदो भूत्वा पुरस्तात् परीत्योपातिष्ठत्। तं देवा अब्रुवन्नन्यत्तद्रूपं कुरुष्व नैतेन नो रूपेण भूयिष्ठं छादयसि नैतेन शक्ष्यसि गोप्तुमिति। स यजुर्वेदो भूत्वा पश्चात्परीत्योपातिष्ठत्। तं देवा अब्रुवन्नन्यत्तद्रूपं कुरुष्व नैतेन नो रूपेण भूयिष्ठं छादयसि नैतेन शक्ष्यसि गोप्तुमिति। स साम- वेदो भूत्वोत्तरतः परीत्योपातिष्ठत्। तं देवा अब्रुवन्नन्यदेव तत्तद्रूपं कुरुष्व

नैतेन नो रूपेण भूयिष्ठं छादयसि नैतेन शक्ष्यसि गोप्तुमिति। स इन्द्र उष्णीषी ब्रह्मवेदो भूत्वा दक्षिणतः परीत्योपातिष्ठत्। तद्ब्रह्माभवत्। तद्ब्रह्मणो ब्रह्मत्वम्। तद्वा एतदथर्वणो रूपं यदुष्णीषी ब्रह्मा। तं दक्षिणतो विश्वे देवा उपासीरन्। तं यद्दक्षिणतो विश्वे देवा उपासीरंस्तत्सदस्योऽभवत्। तत्सदस्यस्य सदस्यत्वम्। बलेर्ह वा एतद्बलमुपजायते यत्सदस्य आस। सतो वै व्रजस्य बहुलतरं व्रजं चिन्वन्ति। घोरा वा एषा दिग्दक्षिणा। शान्ता इतराः। तद्यानि स्तुतानि ब्रह्मानुमन्त्रयते मनसैव तानि सदस्यो जनदित्येतां व्याहृतिं जपं चेत्यात्मानं जनयति जनयित्वात्मानमपि त्वे दधानि। तं देवा अब्रुवन्वरं वृणीष्वेति। वृणा३ इति। स वरमवृणीतास्यामेव मां होत्रायामिन्द्रभूतं पुनन्तः स्तुवन्तः शंसन्तस्तिष्ठेयुरिति। तं तस्यामेव होत्रायामिन्द्रभूतं पुनन्तः स्तुवन्तः शंसन्तोऽतिष्ठन्। तं यत्तस्यामेव होत्रायामिन्द्रभूतं पुनन्तः स्तुवन्तः शंसन्तस्तिष्ठंस्तद्ब्राह्मणाच्छंस्यभवत्तद्ब्राह्मणाच्छंसिनो ब्राह्मणाच्छंसित्वम्। सैषैन्द्री होत्रा यद्ब्राह्मणाच्छंसीया। द्वितीयं वरं वृणीष्वेति। वृणा३ इति। स वरमवृणीतास्यामेव मां होत्रायां वायुभूतं पुनन्तः स्तुवन्तः शंसन्तस्तिष्ठेयुरिति। तं तस्यामेव होत्रायां वायुभूतं पुनन्त स्तुवन्तः शंसन्तोऽतिष्ठंस्तं यत्तस्यामेव होत्रायां वायुभूतं पुनन्तः स्तुवन्तः शंसन्तस्तिष्ठंस्तत्पोताऽभवत्तत्पोतुः पोतृत्वम्। सैषा वायव्या होत्रा यत्पोत्रीया। तृतीयं वरं वृणीष्वेति। वृणा३ इति। स वरमवृणीतास्यामेव मां होत्रायामग्निभूतमिन्धानाः पुनन्तः स्तुवन्तः शंसन्तस्तिष्ठेयुरिति। तं तस्यामेव होत्रायामग्निभूतमिन्धानाः पुनन्तः स्तुवन्तः शंसन्तोऽतिष्ठंस्तं यत्तस्यामेव होत्रायामग्निभूतमिन्धानाः पुनन्तः स्तुवन्तः शंसन्तस्तिष्ठंस्तदाग्नीध्रोऽभवत्तदाग्नीध्रस्याग्नीध्रत्वम्। सैषाग्नेयी होत्रा यदाग्नीध्रीयेति ब्राह्मणम्॥१९॥

॥ ९ ॥

१·३·८

अथ यः पुरस्तादष्टावाज्यभागान्विद्यान्मध्यतः पञ्च हविर्भागान् षट् प्राजापत्यान् उपरिष्टादष्टावाज्यभागान् विद्यादथ यो गायत्रीं हरिणीं ज्योतिष्पक्षां सर्वैर्यज्ञैर्यजमानं स्वर्गं लोकमभिवहन्तीं विद्यादथ यः पङ्क्तिं पञ्चपदां सप्तदशाक्षरां सर्वैर्यज्ञैर्यजमानं स्वर्गं लोकमभिवहन्तीं विद्यादस्मै ह निष्कं प्रयच्छन्नुवाचानू

-त्रानो ह वै स्वैदायन आस स सुवर्णं सुवर्णविदे ददामीति तदुपयम्य निश्चक्राम। तत्रावव्राज यत्रेतरो बभूव। तं ह प्रपच्छ। किमेव गोतमस्य पुत्र इति। एष ब्रह्मा ब्रह्म-पुत्र इति होवाच। यदेनं कश्चिदुपवदेतोत मीमांसेत ह वा मूर्द्धा वा अस्य विपतेत् प्राणा वैनं जह्युरिति। ते मिथ एव चिक्रन्देयुर्विप्रा आवव्राज यत्रेतरे बभूवुस्ते प्रातः समित्पाणय उपोदेयुरुपायामो भवन्तमिति। किमर्थमिति। यानेव नो भवांस्तान्ह्य प्रश्नानपृच्छत्तानेव नो भवान्व्याचक्षीतेति। तथेति। तेभ्य एतान्प्रश्नान् व्याचष्टे ॥ ८ ॥

॥ १० ॥

१.३.९

यत्पुरस्ताद्वेदेः प्रथमं बर्हिस्तृणाति। तस्मादिमाः प्रजाः शिरस्तः प्रथमं लोमशा जायन्ते। यदपरमिव प्रस्तरमनुस्तृणाति। तस्मादासामपरमिव श्मश्रूपकक्षाण्यन्यानि लोमानि जायन्ते। यत्प्राग्बर्हिषः प्रस्तरमनुप्रहरति। तस्मादिमाः प्रजाः शिरस्तः प्रथमं पलिता भवन्ति। यदन्ततः सर्वमेवानुप्रहरन्ति। तस्मादन्ततः सर्वा एव पलिता भवन्ति। यत्प्रयाजा अपुरोऽनुवाक्यावन्तो भवन्ति। तस्मादिमाः प्रजा अदन्तिका जायन्ते। यद्धवींषि पुरोऽनुवाक्यावन्ति भवन्ति। तस्मादासामपरमिव दन्ता जायन्ते। यदनुयाजा अपुरोऽनुवाक्यावन्तो भवन्ति। तस्मादासां सप्तवर्षाष्ट-वर्षाणां दन्ताः प्रभिद्यन्ते। यत्पत्नीसंयाजाः पुरोऽनुवाक्यावन्तो भवन्ति। तस्मादासां पुनरेव दन्ता जायन्ते। यत्समिष्टयजुरपुरोऽनुवाक्यावद्भवति। तस्मादन्ततः सर्वं एव दन्ताः प्रभिद्यन्ते। यद्गायत्र्यानूच्य त्रिष्टुभा यजति। तस्मादधरे दन्ताः पूर्वे जायन्ते। पर उत्तरे। यदृचानूच्य यजुषा यजति। तस्मादधरे दन्ता अणीयांसो ह्रसीयांसः प्रथीयांसो वर्षीयांस उत्तरे। यदाघारौ दीर्घतरौ प्राञ्चावाघारयति। तस्मादिमौ दंष्ट्रौ दीर्घतरौ। यत्संयाज्ये सच्छन्दसी। तस्मात्समे इव जम्भे। यच्चतुर्थे प्रयाजे समान-यति तस्मादिमे श्रोत्रे अन्ततः समे इव दीर्णे। यज्जपं जपित्वाभिहिंकृणोतीति। तस्मात्पुमांसः श्मश्रुमन्तोऽश्मश्रुमत्यः स्त्रियः। यत्सामिधेनीस्सन्तन्वन्नन्वाह। तस्मादासां सन्ततमिव शरीरं भवति। यत्सामिधेन्यः काष्ठहविषो भवन्ति। तस्मादासामस्थीनि दृढतराणीव भवन्ति। यत्प्रयाजा आज्यहविषो भवन्ति। तस्मा-दासां प्रथमे वयसि रेतः सिक्तं न सम्भवति। यन्मध्ये हविषां दध्ना च पुरोडाशेन च प्रचरन्ति। तस्मादासां मध्यमे वयसि रेतः सिक्तं सम्भवति। यदनुयाजा आज्य-

हविषो भवन्ति । तस्मादासामुत्तमे वयसि रेतः सिक्तं न सम्भवति । यदुत्तमेऽनुयाजे सकृदपानिति । तस्मादिदं शिश्नमुच्चश एति नीची पद्यते । यन्नापानेत् सकृच्छ्नं स्यात् । यन्मुहुरपानेद् सकृत्पन्नं स्यात् तस्मात्सकृदपानिति । नेत् सकृच्छ्नं स्यात्सकृत्पन्नं वेति ॥ ९ ॥

॥ ११ ॥

१·३·१०

अथ ये पुरस्तादष्टावाज्यभागाः पञ्च प्रयाजा द्वावाघारौ द्वावाज्यभागावाग्नेय आज्यभागानां प्रथमः। सौम्यो द्वितीयो हविर्भागानाम् । हविर्ह्येव सौम्यमाग्नेयः पुरोडाशोऽग्नीषोमीय उपांशुयाजोऽग्नीषोमीयः पुरोडाशोऽग्निः स्विष्टकृदित्येते मध्यतः पञ्च हविर्भागाः । अथ ये षट् प्राजापत्याः । इडा च प्रशित्रञ्च यच्चाग्नीध्रायावद्यति ब्रह्मभागो यजमानभागोऽन्वाहार्य एव षष्ठः । अथ उपरिष्टादष्टावाज्यभागाः । त्रयोऽनुयाजाश्चत्वारः पत्नीसंयाजाः समिष्टयजुरष्टमम् । अथ या गायत्री हरिणी ज्योतिष्पक्षा सर्वैर्यज्ञैर्यजमानं स्वर्गं लोकमभिवहति वेदिरेव सा । तस्या ये पुरस्तादष्टावाज्यभागाः स दक्षिणः पक्षः । अथ ये उपरिष्टादष्टावाज्यभागाः स उत्तरः पक्षः । हवींष्यात्मा । गार्हपत्यो जघनम् । आहवनीयः शिरः । सौवर्णराजतौ पक्षौ । तद्यदादित्यं पुरस्तात्पर्यन्तं न पश्यन्ति तस्मादज्योतिष्क उत्तरो भवति । अथ या पङ्क्तिः पञ्चपदा सप्तदशाक्षरा सर्वैर्यज्ञैर्यजमानं स्वर्गं लोकमभिवहति याज्यैव सा । तस्या ओं श्रावयेति चतुरक्षरम् । अस्तु श्रौषडिति चतुरक्षरम् । यजेति द्व्यक्षरम् । ये यजामहे इति पञ्चाक्षरम् । द्व्यक्षरो वषट्कारः । सैषा पङ्क्तिः पञ्चपदा सप्तदशाक्षरा सर्वैर्यज्ञैर्यजमानं स्वर्गं लोकमभिवहति । तद्यत्रास्यैश्वर्यं स्यात्तत्रैवैनमभिवहेयुरेवंविदमेव तत्र ब्रह्माणं वृणीयान्नानेवंविदमिति ब्राह्मणम् ॥ १० ॥

॥ १२ ॥

१·४·१०

अथ यत्प्रायणीयमतिरात्रमुपयन्ति । अहोरात्रावेव तद्देवौ देवते यजन्ते । अहोरात्रौ देवौ देवते भवतः । अहोरात्रयोर्देवयोः सायुज्यं सलोकतां यन्ति य एतदुपयन्ति । अथ यच्चतुर्विंशमहरुपयन्ति । अर्धमासानेव तद्देवान्देवता यजन्ते ।

अर्द्धमासा देवा देवता भवन्ति। अर्द्धमासानां देवानां सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यदभिप्लवमुपयन्ति ब्रह्मैव तद्देवं देवतां यजन्ते। ब्रह्म देवो देवता भवति। ब्रह्मणो देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यत्पृष्ठ्यमुपयन्ति क्षत्रमेव तद्देवं देवतां यजन्ते क्षत्रं देवो देवता भवति। क्षत्रस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यदभिजितमुपयन्ति। अग्निमेव तद्देवं देवतां यजन्ते। अग्निर्देवो भवत्यग्नेर्देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यत्स्वरसाम्न उपयन्ति। अप एव तद्देवीर्देवता यजन्ते। आपो देव्यो देवता भवन्त्यपां देवीनां सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यद्विषुवन्तमुपयन्ति सूर्यमेव तद्देवं देवतां यजन्ते। सूर्यो देवो देवता भवति। सूर्यस्य देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। उक्ता आवृत्ताः स्वरसामानः। अथ यद्विश्वजितमुपयन्ति इन्द्रमेव तद्देवं देवतां यजन्ते। इन्द्रो देवो देवता भवतीन्द्रस्य देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। उक्तौ पृष्ठ्याभिप्लवौ। अथ यद्गवायुषी उपयन्ति। मित्रावरुणावेव तद्देवौ देवते यजतः। मित्रावरुणौ देवौ देवते भवतः। मित्रावरुणयोर्देवयोः सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यद्दशरात्रमुपयन्ति। विश्वानेव तद्देवान् देवता यजन्ते। विश्वे देवा देवता भवन्ति। विश्वेषां देवानां सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यद्द्वादशरात्रिकं पृष्ठ्यं षडहमुपयन्ति। दिश एव तद्देवीर्देवता यजन्ते। दिशो देव्यो देवता भवन्ति। दिशां देवीनां सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यच्छन्दोमं त्र्यहमुपयन्ति। इमानेव तल्लोकान्देवान्देवता यजन्ते। इमे लोका देवा देवता भवन्ति। एषां लोकानां सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यद्दशममहरुपयन्ति। संवत्सरमेव तद्देवं देवतां यजन्ते। संवत्सरो देवो देवता भवति। संवत्सरस्य देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। अथ यन्महाव्रतमुपयन्ति। प्रजापतिमेव तद्देवं देवतां यजन्ते। प्रजापतिर्देवो देवता भवति। प्रजापतेर्देवस्य सायुज्य सलोकतां यन्ति य एतदुपयन्ति। अथ यदुदयनीयमतिरात्रमुपयन्ति। स्वर्गमेव तद्देवं देवतां यजन्ते। स्वर्गो लोको देवो देवता भवति। स्वर्गस्य लोकस्य देवस्य सायुज्यं सलोकतां यन्ति य एतदुपयन्ति। तद्वा एतत्संवत्सरस्य जन्म। स य एवमेतत्संवत्सरस्य जन्म वेद। आप्त्वैतत्संवत्सरं स्वर्गे लोके प्रतितिष्ठति। प्रतितिष्ठति प्रजया पशुभिर्य एवं वेद। संवत्सरेण स आत्मसलोको भूत्वा देवाँ अप्येतीति ब्राह्मणम्॥ १० ॥

॥ १३ ॥

१·५·२३

सायंप्रातर्होमौ स्थालीपाको नवश्च यः ।
बलिश्च पितृयज्ञश्चाष्टकाः सप्तमः पशुः ॥ इत्येते पाकयज्ञाः ।
अग्न्याधेयमग्निहोत्रं पौर्णमास्यमावास्ये ।
नवेष्टिश्चातुर्मास्यानि पशुबन्धोऽत्र सप्तमः ॥ इत्येते हविर्यज्ञाः ।
अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशिमांस्ततः ।
वाजपेयोऽतिरात्रश्चाप्तोर्यामोऽत्र सप्तमः । इत्येते सुत्याः ।
के स्विद्देवाः प्रवोवाजाः के स्विद्देवा अभिद्यवः ।
के स्विद्देवा हविष्मन्तः किं स्विज्जिगाति सुम्नयुः ॥
ऋतव एव प्रवोवाजा मासा देवा अभिद्यवः ।
अर्द्धमासा हविष्मन्तस्तज्जिगाति सुम्नयुः ॥
कतिस्विद्रात्रयः कत्यहानि कति स्तोत्राणि कति शस्त्राण्यस्य ।
कतिस्वित्सवनाः संवत्सरस्य स्तोत्रियाः पदाक्षराणि कल्पस्य ॥
द्वावतिरात्रौ षट्छतमग्निष्टोमा द्वे विंशतिशते उक्थ्यानाम् ।
द्वादश षोडशिनः षष्टिः षडहा वैषुवतं च ।
अहान्यस्य विंशतिशतानि त्रीण्यहश्चैकं तावदस्य ।
संवत्सरस्य सवनाः सहस्रमशीतिस्त्रीणि च संस्तुतस्य ।
षट्षष्टिश्च द्वे च शते भवतस्तस्य शस्त्राणामयुतं चैकमस्य ।
स्तोत्रियाश्च नवतिसहस्रं द्वे नियुते नवतिश्चाति षट् च ॥
अष्टौ शतान्ययुतानि त्रिंशच्चतुर्नवतिश्च पदान्यस्य ।
संवत्सरस्य कविभिर्मितस्यैतावती मध्यमा देवमात्रा ॥
अयुतमेकं प्रयुतानि त्रिंशद् द्वे नियुते तथा ह्यनुशिष्टाः ।
अष्टौ शतानि नव चाक्षराण्येतावानात्मा परमः प्रजापतेः ॥
आद्यं वषट्कारप्रदानान्तमेतमग्निष्टोमं पर्वशः साधु क्लृप्तम् ।
सोमेषज्यं छन्द ईप्सन्यदग्नौ चतुःशतं बहुधा हूयते यत् ।
प्रातःसवनः स्तुत एकविंशा गायत्रस्तोममित एक एव ।
माध्यन्दिनः सप्तदशेन क्लृप्तस्त्रयस्त्रिंशेन सवनं तृतीयम् ॥ २३ ॥

॥ १४ ॥

२·१·१७

देवा वा ओषधीषु पक्वास्वाजिमयुः। स इन्द्रो वेदाग्निर्वा वेमाः प्रथम उज्जेष्यतीति। सोऽब्रवीद्यतरो नौ पूर्व उज्जयेत्तन्नौ सहेति। ता अग्निरुदजयत्तदिन्द्रो नोदजयत्। स एष ऐन्द्राग्नः सन्नाग्नेन्द्रः। एका वै तर्हि यवस्य श्रुष्टिरासीदेका व्रीहेरेका माषस्यैका तिलस्य। तद्विश्वेदेवा अब्रुवन्वयं वा एतत्प्रथयिष्यामो भागो नोऽस्त्विति। तद्भूम एव वैश्वदेवः। अथो प्रथयत्येतेनैव। पयसि स्याद्वैश्वदेवत्वाय। वैश्वदेवं हि पयः। अथेमे अब्रूतां न वा ऋत आवाभ्यामेवैतद्य्य प्रथयत। मयि प्रतिष्ठितमसौ वृष्ट्या पचति नैतदितोऽभ्युज्जेष्यतीति भागो नावस्त्विति। ताभ्यां वा एष भागः क्रियत उज्जित्या एव। अथो प्रतिष्ठित्या एव। ये द्यावापृथिवी यः सोमो या ओषधीः सोम ओषधीनामधिराजो याश्च ग्राम्या याश्चारण्यास्तासामेष उद्धारो यच्छ्यामाकः। यच्छ्यामाकः सौम्यस्तमेव भागिनं कृणुते। यत् कृत्वाऽऽग्रयणं नवस्याश्नीयात्। देवानां भागं प्रतिक्लृप्तमद्यात्संवत्सराद्वा एतत् दधि प्रजायते यदाग्रयणं संवत्सरं ब्रह्मा। तस्माद्ब्रह्मा पुरस्ताद्धोमसंस्थितहोमेष्वावपेत। एकहायनो दक्षिणा। स हि संवत्सरस्य प्रतिमा। रेत एव ह्येषो प्रजातः प्रजात्यै॥ १७॥

॥ १५ ॥

२·२·१३

ऋषयो वा इन्द्रं प्रत्यक्षतो नापश्यन्। तं वसिष्ठ एव प्रत्यक्षमपश्यत्। सोऽबिभेदितरेभ्य ऋषिभ्यो मा प्रवोचदिति। सोऽब्रवीद्ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिताः प्रजाः प्रजनयिष्यन्तेऽथेतरेभ्य ऋषिभ्यो मा प्रवोच इति। तस्मा एतान्स्तोमभागानुवाच। ततो वसिष्ठपुरोहिताः प्रजाः प्राजायन्त। स्तोमो वा एतेषां भागः। तत्स्तोमभागानां स्तोमभागत्वम्। यज्ञं प्राह। प्रेतिरसि धर्मणे त्वेति धर्मो मनुष्या मनुष्येभ्य एव यज्ञं प्राह। अनितिरसि सन्धिरसि प्रतिधिरसीति। त्रयो वै लोका लोकेष्वेव यज्ञं प्रतिष्ठापयति। विष्टम्भोऽसीति वृष्टिमेवावरुन्धे। प्रावोऽस्यहांसीति मिथुनमेव करोति। उशिगसि प्रकेतोऽसि सुदितिरसीति। अष्टौ वसव एकादश रुद्रा द्वादशादित्या वाग्द्वात्रिंशी स्वरस्त्रयस्त्रिंशास्त्रयस्त्रिंशद्देवा देवेभ्य एव यज्ञं प्राह। ओजोऽसि पितृभ्यस्त्वेति

बलमेव तत् पितॄननुसन्तनोति। तन्तुरसि प्रजाभ्यस्त्वेति प्रजा एव पशूननुसन्तनोति। रेवदस्योषधीभ्यस्त्वेति। ओषधीष्वेव यज्ञं प्रतिष्ठापयति। पृतनाषाडसि पशुभ्यस्त्वेति प्रजा एव पशूननुसन्तनोति। अभिजिदसीति वज्रो वै षोड़शी व्यावृत्तोऽसौ वज्रस्तस्मादेषोऽन्यैर्व्यावृत्तः। नाभुरसीति प्रजापतिर्वै सप्तदशः प्रजापतिमेवावरुन्धे ॥ १३ ॥

## ९। ऐतरेयारण्यकम्

॥ १ ॥

२·२·१

एष इमं लोकमभ्यार्चत्पुरुषरूपेण य एष तपति। प्राणो वाव तदभ्यार्चत्प्राणो ह्येष य एष तपति। तं शतं वर्षाण्यभ्यार्चत्तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति। तं यच्छतं वर्षाण्यभ्यार्चत्तस्माच्छतर्चिनस्तस्माच्छतर्चिन इत्याचक्षते एतमेव सन्तम्। स इदं सर्वं मध्यतो दधे यदिदं किञ्च। स यदिदं मध्यतो दधे यदिदं किञ्च तस्मान्माध्यमास्तस्मान्माध्यमा इत्याचक्षते एतमेव सन्तम्। प्राणो वै गृत्सोऽपानो मदः। स यत्प्राणो गृत्सोऽपानो मदस्तस्माद्गृत्समदस्तस्माद्गृत्समद इत्याचक्षत एतमेव सन्तम्। तस्येदं विश्वं मित्रमासीद्यदिदं किञ्च। तद्यदस्येदं विश्वं मित्रमासीद्यदिदं किञ्च। तस्माद्विश्वामित्रस्तस्माद्विश्वामित्र इत्याचक्षत एतमेव सन्तम्। तं देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति। तं यद्देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति। तस्माद्वामदेवस्तस्माद्वामदेव इत्याचक्षत एतमेव सन्तम्। सर्वं इदं पाप्मनोऽत्रायत यदिदं किञ्च। स यदिदं सर्वं पाप्मनोऽत्रायत यदिदं किञ्च तस्मादत्रयस्तस्मादत्रय इत्याचक्षत एतमेव सन्तम् ॥ १ ॥

॥ २ ॥

२·२·२

एष उ एव बिभ्रद्वाजः। प्रजा वै वाजस्ता एष बिभर्ति। यद्बिभर्ति तस्माद्भरद्वाजस्तस्माद्भरद्वाज इत्याचक्षत एतमेव सन्तम्। तं देवा अब्रुवन्नयं वै नः सर्वेषां

वसिष्ठ इति। तस्माद्वसिष्ठ इत्याचक्षत एतमेव सन्तम्। स इदं सर्वमभि प्रागायद्यदिदं किञ्च। स यदिदं सर्वमभिप्रागायद्यदिदं किञ्च तस्मात्प्रगाथा-स्तस्मात्प्रगाथा इत्याचक्षत एतमेव सन्तम्। स इदं सर्वमभ्यपवयत यदिदं किञ्च। स यदिदं सर्वमभ्यपवयत यदिदं किञ्च तस्मात्पावमान्यस्तस्मात्पा-वमान्य इत्याचक्षत एतमेव सन्तम्। सोऽब्रवीदहमिदं सर्वमसानि यच्च क्षुद्रं यच्च महदिति। ते क्षुद्रसूक्ताश्चाभवन्महासूक्ताश्च। तस्मात्क्षुद्रसूक्ता महासूक्ता इत्याच-क्षत एतमेव सन्तम्। सूक्तं बतावोचतेति तत्सूक्तमभवत्तस्मात्सूक्तम्। तस्मा-त्सूक्तमित्याचक्षत एतमेव सन्तम्। एष वा ऋगेष ह्येभ्यः सर्वेभ्य एतेभ्योभूतेभ्योऽर्चत। स यदेभ्यो भूतेभ्योऽर्चत तस्मादृक्तस्मादृगित्या-चक्षत एतमेव सन्तम्। एष वा अर्द्धर्चः। एष ह्येभ्यः सर्वेभ्योऽर्द्धे-भ्योऽर्चत। स यदेभ्यः सर्वेभ्योऽर्द्धेभ्योऽर्चत तस्मादर्द्धर्चस्तस्मादर्द्धर्च इत्याचक्षत एतमेव सन्तम्। एष वै पदमेष हीमानि सर्वाणि भूतानि पाति। स यदिमानि सर्वाणि भूतानि पाति तस्मात्पदमित्याचक्षत एतमेव सन्तम्। एष वा अक्षरमेष ह्येभ्यः सर्वेभ्यः भूतेभ्यः क्षरति। न चैन-मतिक्षरन्ति। स यदेतेभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति तस्मादक्षरं तस्मादक्षरमित्याचक्षत एतमेव सन्तम्। ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव। प्राण ऋच इत्येव विद्यात्॥ २॥

॥ ३॥

२.३.२

✓ तस्य य आत्मानमाविस्तरां वेदाश्नुते हाविर्भूय ओषधिवनस्पतयो यच्च किञ्च प्राणभृत्स आत्मानमाविस्तरां वेदौषधिवनस्पतिषु हि रसो दृश्यते चित्तं प्राणभृत्सु। प्राणभृत्सु त्वेवाविस्तरामात्मा तेषु हि रसोऽपि दृश्यते। न चित्त-मितरेषु। पुरुषेत्वेवाविस्तरामात्मा। स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सतीत्येवं सम्पन्नो-ऽथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकौ त एतावन्तो भवन्ति यथाप्रज्ञं हि सम्भवाः॥ २॥

॥ ४ ॥

२·३·६

तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्यै-कादशानुष्टुभां शतानि भवन्ति पञ्चविंशतिश्चानुष्टुभ आत्तं वै भूयसा कनीयस्तदुक्त-मृषिणा वाचमष्टापदीमहमित्यष्टौ हि चतुरक्षराणि भवन्ति नवस्रक्तिमिति बृहती सम्पद्यमाना नवस्रक्ति ऋत पृशमिति । सत्यं वै वागृचा स्पृष्टेन्द्रात्परि तन्वं ममेति तद्यदेवैतद्बृहतीसहस्रमनुष्टुप्सम्पन्नं भवति तस्मात्तदेन्द्रात्प्राणाद्बृहत्यै वाच-मनुष्टुभं तन्वं सन्निर्मिमीते । स वा एष वाचः परमो विकारो यदेतन्महदुक्थं तदेत-त्पञ्चविधं मितममितं स्वरः सत्यानृते इति । ऋग्गाथा कुम्व्या तन्मितम् यजुर्निगदो वृथा वाक् तदमितम् । सामाथो यः कश्च गेष्णः स स्वरः । ओमिति सत्यम् । नेत्यनृतं तदेतत्पुष्पं फलं वाचो यत्सत्यं स हेश्वरो यशस्वी कल्याणकीर्त्तिर्भवितोः । पुष्पं हि फलं वाचः सत्यं वदन्त्यथैतन्मूलं वाचो यदनृतम् । तद्यथा वृक्ष आविर्मूलः शुष्यति स उद्वर्तत एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति । स शुष्यति । स उद्वर्तते तस्मादनृतं न वदेद्दयेत त्वेनेन । पराग्वा एतद्रिक्तमक्षरं यदेतदो३मिति । तद्यत्कि-ञ्चोमित्याहात्रैवास्मै तद्रिच्यते । स यत्सर्वमोङ्कुर्याद्रिच्यादात्मानं स कामेभ्यो नालं स्याद् । अथैतत्पूर्णमभ्यात्म यन्नेति । स यत्सर्वं नेति ब्रूयात्पापिकास्य कीर्त्तिर्जायेत । सैनं तत्रैव हन्यात्तस्मात्काल एव दद्यात्कालेन दद्यात्तत्सत्यानृते मिथुनीकरोति । तयोर्मिथुनात्प्रजायते भूयान्भवति यो वै तां वाचं वेद । यस्या एष विकारः स सम्प्रति-विद् । अकारो वै सर्वा वाक्सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति । तस्यै यदुपांशु स प्राणोऽथ यदुच्चैस्तच्छरीरं तस्मात्तत्तिर इव । तिर इव ह्यशरीरमश-रीरो हि प्राणोऽथ यदुच्चैस्तच्छरीरं तस्मात्तदाविराविर्हि शरीरम् ॥ ६ ॥

॥ ५ ॥

३·१·१

अथातः संहिताया उपनिषत्पृथिवी पूर्वरूपं द्यौरुत्तररूपम् । वायुः संहितेति माण्डू-केय आकाशः संहितेत्यस्य माक्षव्यो वेदयाञ्चक्रे । स हाविपरिहृतो मेने न मेऽस्य पुत्रेण समगादिति । समाने वै तत्परिहृतो मेन इत्यागस्त्यः । समानं ह्येतद्भवति वायु-श्चाकाशश्चेतीत्यधिदैवतम् । अथाध्यात्मं वाक् पूर्वरूपं मन उत्तररूपं प्राणः संहितेति शूरवीरो माण्डूकेयोऽथ हास्य पुत्र आह ज्येष्ठो मनः पूर्वरूपं वागुत्तररूपं मनसा वा

अग्रे संकल्पयत्यथ वाचा व्याहरति तस्मान्मन एव पूर्वरूपं वागुत्तररूपं प्राणस्त्वेव संहितेति समानमेनयोरत्र पितुश्च पुत्रस्य च स एषोऽश्वरथः प्रष्टिवाहनो मनोवाक्प्राणसंहतः। स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति इति नु माण्डूकेयानाम् ॥ १ ॥

॥ ६ ॥

३·१·२

अथ शाकल्यस्य पृथिवी पूर्वरूपं द्यौरुत्तररूपं वृष्टिः सन्धिः पर्जन्यः सन्धाता तदुतापि यत्रैतद्बलवदनूद्बलन् सन्दधदहोरात्रे वर्षति द्यावापृथिव्यौ समधातामित्युताप्याहुरिति न्वधिदैवतम्। अथाध्यात्मं पुरुषो ह वा अयं सर्व आन्दं द्वे विदले भवत इत्याहुः। तस्येदमेव पृथिव्या रूपमिदं दिवः। तत्रायमन्तरेणाकाशो यथाऽसौ द्यावापृथिव्यावन्तरेणाकाशः। तस्मिन्हास्मिन्नाकाशे प्राण आयत्तो यथाऽमुष्मिन्नाकाशे वायुरायत्तः। यथाऽमूनि त्रीणि ज्योतींष्येवमिमानि पुरुषे त्रीणि ज्योतींषि। यथासौ दिव्यादित्य एवमिदं शिरसि चक्षुः। यथाऽसावन्तरिक्षे विद्युदेवमिदमात्मनि हृदयम्। यथाऽयमग्निः पृथिव्यामेवमिदमुपस्थे रेतः। एवमु ह स्म सर्वलोकमात्मानमनुविधायाहेदमेव पृथिव्या रूपमिदं दिवः। स य एवमेतां संहितां वेद। सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥ २ ॥

॥ ७ ॥

३·१·५

अथ खल्वाहुर्निर्भुजवक्त्राः पूर्वमक्षरं पूर्वरूपमुत्तरमुत्तररूपं योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण सा संहितेति। स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन। सर्वमायुरेति। अथ वयं ब्रूमो निर्भुजवक्त्रा इति ह स्माह ह्रस्वो माण्डूकेयः। पूर्वमेवाक्षरं पूर्वरूपमुत्तरमुत्तररूपं योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण येन सन्धिं विवर्तयति। येन स्वरास्वरं विजानाति। येन मात्रामात्रं विजानाति। सा संहितेति। स य एवमेतां संहितां वेद। सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन। सर्वमायुरेति। अथ हास्य पुत्र आह मध्यमः प्रातिबोधीपुत्रोऽक्षरे खल्विमे अविकर्षन्ननेकीकुर्वन्यथावर्णमाह तद्यासौ मात्रा पूर्वरूपोत्तररूपे अन्तरेण सन्धिविज्ञपनी साम तद्भवति। सामैवाहं संहितां

मन्य इति । तदप्येतदृषिणोक्तं बृहस्पते न परः साम्नो विदुरिति । स य एवमेतां संहितां वेद । सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन । सर्वमायुरेति ॥ ५ ॥

## १० । तैत्तिरीयमारण्यकम्

॥ १ ॥

१.२

स्मृतिः प्रत्यक्षमैतिह्यम् । अनुमानश्चतुष्टयम् । एतैरादित्यमण्डलम् । सर्वैरेव विधास्यते । सूर्यो मरीचिमादत्ते । सर्वस्माद्भुवनादधि । तस्याः पाकविशेषेण । स्मृतं कालविशेषणम् । नदीव प्रभवात्काचित् । अक्षय्यात्स्यन्दते यथा ॥ १ ॥ तां नद्योऽभिसमायन्ति । सोरुः सती न निवर्तते । एवं नानासमुत्थानाः । कालाः संवत्सरं श्रिताः । अणुशश्च महशश्चैव । सर्वे समवयन्ति तम् । स तैः सर्वैः समाविष्टः । ऊरुः सन्न निवर्तते । अधिसंवत्सरं विद्यात् । तदेव लक्षणे ॥ २ ॥ अणुभिश्च महद्भिश्च । समारूढः प्रदृश्यते । संवत्सरः प्रत्यक्षेण । नाधिसत्त्वः प्रदृश्यते । पटरो विक्लिधः पिङ्गः । एतद्वरुणलक्षणम् । यत्रैतदुपदृश्यते । सहस्रं तत्र नीयते । एकं हि शिरो नाना मुखे । कृत्स्नं तदृतुलक्षणम् ॥ ३ ॥ उभयतः सप्तेन्द्रियाणि । जल्पितं त्वेव दिह्यते । शुक्लकृष्णे संवत्सरस्य । दक्षिणवामयोः पार्श्वयोः । तस्यैषा भवति । शुक्रं ते अन्यद्यजतं ते अन्यत् । विषुरूपे अहनी द्यौरिवासि । विश्वा हि माया अवसि स्वधावः । भद्रा ते पूषन्निह रातिरस्त्विति । नात्र भुवनम् । न पूषा । न पशवः । नादित्यः । संवत्सर एव प्रत्यक्षेण प्रियतमं विद्यात् । एतद्वै संवत्सरस्य प्रियतमं रूपम् । योऽस्य महानर्थ उत्पत्स्यमानो भवति । इदं पुण्यं कुरुष्वेति । तमाहरणं दद्यात् ॥ ४ ॥

॥ २ ॥

१.७

आरोगो भ्राजः पटरः पतङ्गः । स्वर्णरो ज्योतिषीमान्विभासः । ते अस्मै सर्वे दिवमातपन्ति । ऊर्जं दुहाना अनपस्फुरन्त इति । कश्यपोऽष्टमः । स

महामेरुं न जहाति। तस्यैषा भवति। यत्ते शिल्पं कश्यप रोचनावत्। इन्द्रियावत्पुष्कलं चित्रभानु। यस्मिन्सूर्या अर्पिताः सप्त साकम् ॥१॥ तस्मिन्राजानमधि विश्रयेयमिति। ते अस्मै सर्वे कश्यपाज्ज्योतिर्लभन्ते। तान्सोमः कश्यपादधि निर्धमति। भ्रस्ताकर्मकृदिवैवम्। प्राणो जीवानीन्द्रियजीवानि। सप्त शीर्षण्याः प्राणाः। सूर्या इत्याचार्याः। अपश्यमहमेतान्सप्त सूर्यानिति पञ्चकर्णो वात्स्यायनः। सप्तकर्णश्च प्लाक्षिः ॥२॥ आनुश्रविक एव नौ कश्यप इत्युभौ वेदयिते। न हि शेकुमिव महामेरुं गन्तुम्। अपश्यमहमेतत्सूर्यमण्डलं परिवर्तमानमिति गार्ग्यः प्राणत्रातः। गच्छन्तं महामेरुम्। एकञ्चाजहतम्। भ्राजपटरपतङ्गा निहने तिष्ठन्नातपन्ति। तस्मादिहतप्त्रितपाः ॥३॥ अमुत्रेतरे। तस्मादिहातप्त्रितपाः। तेषामेषा भवति। सप्त सूर्या दिवमनु प्रविष्टाः। तानन्वेति पथिभिर्दक्षिणावान्। ते अस्मै सर्वे घृतमातपन्ति। ऊर्जं दुहाना अनपस्फुरन्त इति। सप्तर्त्विजः सूर्या इत्याचार्याः। तेषामेषा भवति। सप्त दिशो नाना सूर्याः ॥४॥ सप्त होतार ऋत्विजः। देवा आदित्या ये सप्त। तेभिः सोमाभि रक्ष न इति। तदप्याम्नायः। दिग्भ्राज ऋतून्करोति। एतयैवावृता सहस्रसूर्यताया इति वैशंपायनः। तस्यैषा भवति। यद् द्याव इन्द्र ते शतꣳ शतं भूमीः। उत स्युः। न त्वा वज्रिन्सहस्रं सूर्याः ॥५॥ अनु न जातमष्ट रोदसी इति। नानालिङ्गत्वादृतूनां नानासूर्यत्वम्। अष्टौ तु व्यवसिता इति। सूर्यमण्डलान्यष्टात ऊर्ध्वम्। तेषामेषा भवति। चित्रं देवानामुद्गादनीकम्। चक्षुर्मित्रस्य वरुणस्याग्नेः। आ प्रा द्यावापृथिवी अन्तरिक्षम्। सूर्य आत्मा जगतस्तस्थुषश्चेति। ॥ ६ ॥

॥ २ ॥

२·१

सह वै देवानां चासुराणां च यज्ञौ प्रततावास्ताम्। वयꣳ स्वर्गं लोकमेष्यामो वयमेष्याम इति। तेऽसुराः सन्नह्य सहसैवाचरन्ब्रह्मचर्येण तपसैव देवाः। तेऽसुरा अमुह्यꣳस्ते न प्राजानꣳस्ते पराभवन्ते न स्वर्गं लोकमायन्। प्रसृतेन वै यज्ञेन देवाः स्वर्गं लोकमायन्। अप्रसृतेनासुरान्पराभावयन्। प्रसृतो ह वै यज्ञोपवीतिनो यज्ञः। अप्रसृतोऽनुपवीतिनः। यत्किञ्च ब्राह्मणो यज्ञोपवीत्यधीते यजत एव तद्। अजिनं

वासो दक्षिणत उपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीत-
मेतदेव। विपरीतं प्राचीनावीतꣳ संवीतं मानुषम् ॥ १ ॥

॥ ४ ॥

५·१

देवा वै सत्रमासत। ऋद्धिपरिमितं यशस्कामाः। तेऽब्रुवन्। यन्नः
प्रथमं यश ऋच्छात्। सर्वेषां नस्तत्सहासदिति। तेषां कुरुक्षेत्रं वेदिरासीत्।
तस्यै खाण्डवो दक्षिणार्ध आसीत्। तूर्घ्नमुत्तरार्धः। परीणज्जघनार्धः।
मरव उत्करः ॥१॥ तेषां मखं वैष्णवं यश आर्च्छत्। तन्न्यकामयत। तेना-
पाक्रामत्। तं देवा अन्वायन्। यशोऽवरुरुत्समानाः। तस्यान्वागतस्य।
सव्याद्धनुरजायत। दक्षिणादिषवः। तस्मादिषुधन्वं पुण्यजन्म। यज्ञजन्मा हि
॥२॥ तमेकꣳ सन्तम्। बहवो नाभ्यधृष्णुवन्। तस्मादेकमिषुधन्विनम्। बहवोऽ-
निषुधन्वा नाभिधृष्णुवन्ति। सोऽस्मयत। एकं मा सन्तं बहवो नाभ्यधर्षिषुरिति।
तस्य सिष्मियाणस्य तेजोऽपाक्रामत्। तद्देवा ओषधीषु न्यमृजुः। ते श्यामाका
अभवन्। स्मयाका वै नामैते ॥३॥ तत्स्मयाकानां स्मयाकत्वम्। तस्मा-
द्दीक्षितेनापिगृह्य। तेजसो धृत्यै। स धनुः प्रतिष्कभ्यातिष्ठत्। ता उपदीका
अब्रुवन्वरं वृणामहै। अथ व इमꣳ रन्धयाम। यत्र क्व च खनाम। तदपोऽभि-

तृणदामेति । तस्मादुपदीका यत्र क्व च खनन्ति । तदपोऽभितृन्दन्ति ॥४॥ वारे-
वृतꣳ ह्यासाम् । तस्य ज्यामप्यादन् । तस्य धनुर्विप्रवमाणꣳ शिर उदवर्तयत् ।
तद् द्यावापृथिवी अनु प्रावर्तत । यत्प्रावर्तत । तत्प्रवर्ग्यस्य प्रवर्ग्यत्वम् । यत्
घ्राꣳ उ इत्यपतत् । तद्घर्मस्य घर्मत्वम् । महतो वीर्यमपप्तदिति । तन्महावीरस्य
महावीरत्वम् ॥५॥ यदस्याः समभरन् । तत्सम्राजः सम्राट्त्वम् । तꣳ स्तृतं
देवतास्त्रेधा व्यगृह्णत । अग्निः प्रातःसवनम् । इन्द्रो माध्यन्दिनꣳ सवनम् ।
विश्वे देवास्तृतीयसवनम् । तेनापशीर्ष्णा यज्ञेन यजमानाः । नाशिषोऽवारुन्धत ।
न सुवर्गं लोकमभ्यजयन् । ते देवा अश्विनावब्रुवन् ॥६॥ भिषजौ वै स्थः ।
इदं यज्ञस्य शिरः प्रतिधत्तमिति । तावब्रूतां वरं वृणावहै । ग्रह एव नावत्रापि
गृह्यतामिति । ताभ्यामेतमाश्विनमगृह्णन् । तावेतद्यज्ञस्य शिरः प्रत्यधत्ताम् ।
यत्प्रवर्ग्यः । तेन सशीर्ष्णा यज्ञेन यजमानाः । अवाशिषोऽरुन्धत । अभि सुवर्गं
लोकमजयन् । यत्प्रवर्ग्यं प्रवृणक्ति । यज्ञस्यैव तच्छिरः प्रतिदधाति । तेन
सशीर्ष्णा यज्ञेन यजमानः । अवाशिषो रुन्धे । अभि सुवर्गं लोकं जयति ।
तस्मादेष आश्विनप्रवया इव । यत्प्रवर्ग्यः ॥७॥

॥ ५ ॥

५·२

ॐ शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तः शीक्षाध्यायः ॥१॥

॥ ६ ॥

८·१

भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति । सैषानन्दस्य मीमाꣳसा भवति । युवा स्यात्साधुयुवाऽध्यापकः । आशिष्ठो द्रढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितॄणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्मदेवानामानन्दः । ये कर्मणा देवानपि यन्ति । श्रोत्रियस्य चाकामहतस्य । ते ये शतं कर्मदेवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवानामानन्दाः । स एकः इन्द्रस्यानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्यानन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं बृहस्पतेरानन्दाः । स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रामति । एतं प्राणमयमात्मानमुपसङ्क्रामति । एतं मनोमय-

मात्मानमुपसंक्रामति । एतं विज्ञानमयमात्मानमुपसंक्रामति । एतमानन्दमय-मात्मानमुपसंक्रामति । तदप्येष श्लोको भवति ॥ १ ॥

॥ ७ ॥
१०.९

यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति यथाऽसिधारां कर्तेऽवहितामवक्रामेद्युवेद्धुवे ह्वा विह्वदिष्यामि कर्तं पतिष्यामी त्येवमनृतादात्मानं जुगुप्सेत् ॥९॥

॥ ८ ॥
१०.६४

तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीधावद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्सञ्चरत्युपविशत्यु-त्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो या व्याहृतिराहुतिर्यदस्य विज्ञानं तज्जुहोति यत्सायं प्रातरत्ति तत्समिधं यत्प्रातर्मध्यन्दिन७ सायं च तानि सव-नानि ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य

ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणाः सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथ एतद्वै जरामर्यमग्निहोत्रꣳ सत्रं य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वादित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं गच्छत्येतौ वै सूर्याचन्द्रमसो-र्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युपनिषत् ॥ ६४॥

---

# आश्वलायनश्रौतसूत्रम्

॥ १ ॥

१.३

यजमानस्यार्षेयान्प्रवृणीते । यावन्तः स्युः । १॥

परं परं प्रथमम् ॥२॥

पौरोहित्यान्राजविशाम् ॥३॥

राजर्षीन्वा राज्ञाम् ॥४॥

सर्वेषां मानवेति संशये ॥५॥

देवेद्धो मन्विद्ध ऋषिष्टुतो विप्रानुमदितः कविशस्तो ब्रह्मसंशितो घृताहवनः प्रणीर्यज्ञानां रथीरध्वराणामतूर्तो होता तूर्णिर्हव्यवाळित्यवसाय । आस्पात्रं जुहूर्देवानां चमसो देवपानोऽराँइवाग्ने नेमिर्देवांस्त्वं परिभूरस्यावह देवान्यजमानायेति । प्रतिपद्य देवता द्वितीयया विभक्त्यादेशमादेशमावहेत्यावाहयति । आद्रिं प्लावयन् ॥६॥

अग्न आवहेति तु प्रथमदेवताम् ॥७॥

अग्निं सोममित्याज्यभागौ ॥८॥

अग्निमग्नीषोमाविति पौर्णमास्याम् ॥९॥

अग्नीषोमयोः स्थान इन्द्राग्नी अमावास्यायामसन्नयतः ॥१०॥

इन्द्रं महेन्द्रं वा सन्नयतः ॥११॥

अन्तरेण हविषी विष्णुमुपांश्वैतरेयिणः ॥१२॥

अग्नीषोमीयं पौर्णमास्याम् । वैष्णवममावास्यायामेके । नैके कंचन ॥१३॥

अन्येषामप्युपांशूनाम् । आवह स्वाहायाद् प्रियाधामानीदं हविर्महो ज्याय इत्युच्चैः ॥१४॥

येऽन्ये तद्वचनाः परोक्षास्तानुपांशूच्चैर्वा ॥१५॥

प्रत्यक्षमुपांशु ॥१६॥

प्रतिचोदनमावाहनम् ॥१७॥

सर्वा आदिश्य सकृदेकप्रदानाः ॥१८॥

तथोत्तरेषु निगमेष्वेकामिव संस्तुयात् ॥१९॥

समानां देवतां समानार्थाम् ॥२०॥

अव्यवहितां सकृन्निगमेषु ॥२१॥

ओळहास्वावापिकासु। देवाँ आज्यपाँ आवहाग्निं होत्रायावह स्वं महिमानमावहावह जातवेदः सुयजा यजेत्यावाह्य। यथास्थितमूर्ध्वजानुरुपविश्योदग्वेदेर्व्युह्य तृणानि भूमौ प्रादेशं कुर्याद्। अदितिर्मातास्यान्तरिक्षान्माच्छेत्सीरिदमहमग्निना देवेन देवतया त्रिवृता स्तोमेन रथन्तरेण साम्ना गायत्रेण छन्दसाग्निष्टोमेन यज्ञेन वषट्कारेण वज्रेण योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मस्तं हन्मीति ॥२२॥

आश्रावयिष्यन्तमनुमन्त्रयेत। आश्रावय यज्ञं देवेष्वाश्रावय मां मनुष्येषु कीर्त्यै यशसे ब्रह्मवर्चसायेति। प्रवृणानं देवसवितरेतं त्वा वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेण द्यावापृथिवी मां पातामग्निर्होताहं मानुष इति। मानुष इत्यध्वर्योः श्रुत्वोदायुषा स्वायुषोदोषधीनां रसेनोत्पर्जन्यस्य धामभिरुदस्थाममृताँ अन्वित्युत्तिष्ठेत् ॥२३॥

षष्टिश्चाध्वर्यो नवतिश्च पाशा अग्निं होतारमन्तरा विचृत्ताः। सिनन्ति पाकमति धीर एतीत्युत्थाय ॥२४॥

ऋतस्य पन्थामन्वेमि होतेत्यभिक्रम्यांसेऽध्वर्युमन्वारभेत पार्श्वस्थेन पाणिना ॥२५॥

आग्नीध्रमङ्कदेशेन सव्येन वा ॥२६॥

इन्द्रमन्वारभामहे होतृवूर्यं पुरोहितम्। येनायन्नुत्तमं स्वर्देवा अङ्गिरसो दिवमिति ॥२७॥

संमार्गतृणैस्त्रिरभ्यात्मं मुखं संमृज्जीत। संमार्गोऽसि सं मां प्रजया पशुभिर्मृड्ढीति ॥२८॥

सकृन्मन्त्रेण। द्विस्तूष्णीम्। सर्वत्रैवं कर्मावृत्तौ ॥२९॥

स्पृष्ट्वोदकं होतृषदनमभिमन्त्रयेत। अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतर इति ॥३०॥

अङ्गुष्ठोपकनिष्ठिकाभ्यां होतृषदनात्तृणं प्रत्यग्दक्षिणा निरसेत्। निरस्तः परावसुरिति। इदमहमर्वावसोः सदने सीदामीत्युपविशेद्। दक्षिणोत्तरिणोपस्थेन ॥३१॥

एते निरसनोपवेशने सर्वासनेषु सर्वेषाम्। अहरहः प्रथमोपवेशनेऽपि समाने ॥३२॥

द्विरिति गौतमः ॥३३॥ १.३.

# संशोधनम्

| अशुद्धम् | शुद्धम् | पत्रम् | पङ्क्तिः |
|---|---|---|---|
| रेवनांस्यदा | रेवनांस्तदा | ६ | २५ |
| रेख्या | रेख्याब्रवीत् | ५ | १० |
| ब्रवीत् | नापेक्ष्यते | ७ | १० |
| ततिर्थां | ततिर्थां | ३० | २० |
| गता७ | एता७ | ५८ | २० |
| द्रूम्या | द्रूम्या | ६० | १३ |
| साध्याय | साध्या वै | ६१ | २७ |
| हृयास | हैयास | ८० | २३ |
| क्षणादृतवो | क्षणा ऋतवो | ७६ | १३ |

---

# १ । ऐतरेयब्राह्मणभाष्यम्

॥ १ ॥

१-३

इत्थमिष्ठ्याहुत्यूतिहोतृशब्दानां निर्वचनेन दीक्षणीयेष्टिं प्रशस्य तयेष्ट्या दीक्षितस्य संस्कार विशेषान्विधातुं प्रस्तौति । पुनर्वा इति । यं यजमानं दीक्षणीयेष्ट्या दीक्षितं कुर्वन्ति तं यजमानं पुरा मातापितरौ कश्चित्कालं गर्भं कृतवन्तौ पुनरप्येनमिदानीमृत्विजो यज्ञकाले गर्भं कुर्वन्ति । गर्भवदसौ संस्कारैः पालनीय इत्यर्थः । एकं संस्कारं विधत्ते । अद्भिरिति । अप्सु स्नपयन्तीत्यर्थः । एतदेवाभिप्रेत्य तैत्तिरीया यजमानस्य वपनादूर्ध्वं स्नानमामनन्ति । अङ्गिरसः सुवर्गं लोकं यन्तोऽप्सु दीक्षातपसी प्रावेशयन् । अप्सु स्नाति साक्षादेव दीक्षातपसी अवरुन्ध इति । ( तै० स० ६-१-१-१ )। यजमानस्य स्नानकर्तृत्वेऽपि ऋत्विजां स्नापयितृत्वमभिप्रेत्याभिषिञ्चन्तीत्युक्तम् । उक्तानामपां प्रशंसामाह रेत इति । कार्यकारणयोरभेदादपां रेतस्त्वम् । वैराजदेहगताद्रेतस आप उत्पन्नाः । तथाचारण्यके सृष्टिप्रकरणे समाम्नास्यते शिश्नाद्रेतो रेतस आप इति । यद्वा मनुष्यादिशरीरगतं रेतोमूत्रादिकमपां कार्यम् । तच्च गर्भोपनिषदि आम्नातम् । अस्मिन्पञ्चात्मके शरीरे यत्कठिनं सा पृथिवी यद्द्रवं तदाप इति । (ग० उ० १)। तत्तेनाभिषेचनेनैनं यजमानं सरेतसं पुत्रोत्पादनसमर्थं कृत्वा संस्कुर्वन्ति । संस्कारान्तरं विधत्ते नवनीतेति । सर्वस्मिन्नपि शरीरेऽनुलेपयन्तीत्यर्थः । नवनीतस्य गर्भस्थानीययजमानयोग्यतां दर्शयति । आज्यमिति । आज्यघृतयोर्भेदः पूर्वाचार्यैरुदाहृतः । सर्पिर्विलीनमाज्यं स्याद्घनीभूतं घृतं विदुरिति । ईषद्विलीनमायुतं सुरभि योग्यं प्रियमित्यर्थः । घृतायुतनवनीतेष्वप्येतत्पदमनु वर्तते । ननु तैत्तिरीया घृतस्य देवप्रियत्वमामनन्ति । घृतं देवानां मस्तु पितॄणां निष्पक्वं मनुष्याणामिति ( तै० स० ६-१-१-४ )। ईषद्विलीनं मस्तु निश्शेषेण विलीनं निष्पक्वम् । नायं दोषः । उभयत्र नवनीतप्रशंसारूपार्थवादत्वेन घृताज्ययोर्व्यत्ययेन पाठेऽपि विरोधाभावात् । तथा सति नवनीतस्य गर्भयोग्यत्वे सति यदि नवनीतेनाभ्यञ्जं कुर्युस्तदानीमेनं यजमानं स्वोचितेनैव भागेन समृद्धं कुर्वन्ति । नेत्रयोरञ्जनेन संस्कारं विधत्ते आञ्जन्तीति । अक्ष्णोर्दृष्टिप्रसादहेतुत्वेनाञ्जनं प्रशंसति तेज इति । आञ्जनस्याक्षितेजस्करत्वं लोके प्रसिद्धम् । तत्प्रकारविशेषः शाखान्तरे दक्षिणपूर्वमाङ्क्ते ( तै० स० ६-१-१-५ ) इत्यादिना विहितः । संस्कारान्तरं विधत्ते एकेति । दर्भपिञ्जूलशब्देन कुशसङ्घा उच्यन्ते । तैरेकविंशतिसङ्ख्याकैर्यजमानं मार्जयित्वा शुद्धं कुर्युः । यद्यप्यसावभिषेकेण शुद्धस्तथाप्यतिशयेन शुद्धिरित्येवमभिप्रायं दर्शयति । शुद्धमिति । पूर्वमपि शुद्धमेव सन्तमेनं यजमानं पुनरपि

तत्तेन कुशसङ्घमार्जनेन पूतं कृत्वा संस्कुर्वन्ति । यद्यपि शाखान्तरे द्वाभ्यां पवयति । अहोरात्राभ्यामेवैनं पवयति । त्रिभिः त्रिभिः पवयति ( तै० स० ६·१·१·७ ) इत्यादिना सङ्ख्यान्तरविषया बहवः पक्षा उपन्यस्तास्तथाप्येते सर्वे एकविंशतावन्तर्भावादवयुत्यानुवादरूपाः प्रशंसार्थाः । अत एव तत्रान्तिमे पर्याय एकविंशत्या पवयति ( तै० स० ६·१·१·८ ) इत्युपसंहारः कृतः । उक्तैः संस्कारैः संस्कृतस्य दीक्षितस्य प्राचीनवंशाख्यशालाप्रवेशं विधत्ते दीक्षितेति । दीक्षितस्य प्रवेशार्थं विशेषेण निर्मितः प्राचीनवंशो दीक्षितविमितः । तं प्रवेशयेयुः । पूर्वत्र दीक्षितस्य गर्भत्वाभिधानादौचित्येन प्राचीनवंशं योनित्वेन प्रशंसति योनिरिति । प्राचीनवंशस्य योनित्वोपचारात्तत्तेन प्राचीनवंशप्रवेशेन स्वकीययोनिप्रवेशः संपाद्यते । सोऽयं प्रवेशः शाखान्तरे विस्पष्टमाम्नायते बहिः पवयित्वान्तः प्रपादयति मनुष्यलोक एवैनं पवयित्वा पूतं देवलोकं प्रणयति । (तै० स० ६·१·२·१) इति । आपस्तम्बोऽप्याह आवो देवास ईमह इति पूर्वया द्वारा प्राग्वंशं प्रविश्येति (आप० श्रौ० १०·७)। तस्य दीक्षितस्य कञ्चिन्नियमं विधत्ते तस्मादिति । अत्र तिस्रः पञ्चम्यः सप्तम्यर्थे द्रष्टव्याः । तस्मिन्दीक्षितार्थं निर्मितदेवयजनाख्ये स्थिरस्थाने स दीक्षित उपवेशनं सञ्चरणञ्च कुर्यात् । विहितमर्थं प्रशंसति तस्मादिति । यस्माद्गर्भस्थानीयस्य दीक्षितस्य स्थिरे देवयजनस्थाने योनिरूपे उपवेशनं सञ्चरणं च तस्माल्लोकेऽपि स्थिरे योनिमध्ये नवसङ्ख्याकान् मासान्गर्भा धार्यन्ते तस्मादेव स्थिराद्योनिमध्यादुत्पद्यन्ते । तस्य दीक्षितस्य देवयजनाद्बहिर्निर्गमनं निषेधति तस्मादिति । यस्माद्दीक्षितस्योपवेशनसञ्चरणयोर्देवयजनमेव स्थानं तस्मात्कारणाद्दीक्षितविमिताद्देवयजनदेशादन्यत्र बहिर्देशे दीक्षितमभिलक्ष्याश्रावणादिकं न कुर्युः । यद्यपि ध्रुवाद्योनेरास्ते चरतीति विधानादेवायमर्थः सिद्धस्तथापि मलमूत्रविसर्गाद्यावश्यककार्यार्थं कदाचिद्बहिर्निर्गमनमभ्युपगम्य तत्र विशेषाभिधानमेतत् । कालान्तरे कथञ्चिद्गमनेऽप्युदयास्तमयाश्रवणादिकालेषु सर्वथा न निर्गच्छेदित्यर्थः । तदेतद्दृष्टान्तपुरस्सरं शाखान्तरे प्रपञ्चितम् । गर्भो वा एष यद्दीक्षितो योनिर्दीक्षितविमितं यद्दीक्षितो दीक्षितविमितात्प्रवसेद्यथा योनेर्गर्भः स्कन्दति तादृगेव तत्र प्रवस्तव्यमात्मनो गोपीथायेति । ( तै० स० ६·२·५·५ )। संस्कारान्तरं विधत्ते । वाससेति । ऋत्विजो यजमानं वस्त्रेणाच्छादयेयुः । गर्भस्थानीयं दीक्षितं प्रत्यौचित्येन वस्त्रस्योल्बत्वं दर्शयति । उल्बमिति । उल्बशब्देन गर्भस्याभ्यन्तरं चर्म गर्भवेष्टनमुच्यते । अयमर्थः शाखान्तरे स्पष्टीकृतः । गर्भो वा एष यद्दीक्षित उल्बं वासः प्रोर्णुते तस्माद्गर्भाः प्रावृता जायन्त इति । ( तै० स० ६·१·३·२·३ )। वाससो बहिर्वेष्टनान्तरं विधत्ते कृष्णाजिनमिति । बहिर्वेष्टनत्वसाम्येन कृष्णाजिनस्य जरायुरूपत्वं दर्शयति उत्तरमिति । संस्कारान्तरं विधत्ते मुष्टी इति । यजमानो हस्तमुष्टी कुर्यात् । तत्प्रकार आपस्तम्बेन स्पष्टमभिहितः । अथाङ्गुलीर्न्यञ्चति ।

स्वाहा यज्ञं मनसेति द्वे इभ्यः स्वाहा दिव इति द्वे स्वाहा पृथिव्या इति द्वे स्वाहोरोरन्तरिक्षादिति द्वे स्वाहा यज्ञं वातादारभ इति मुष्टी करोति (आप० श्रौ० १०-११) इति। गर्भसाम्येन यज्ञस्य सर्वदेवतानां च धारणेन प्रशंसति मुष्टी इति। गर्भस्य मुष्टिद्वये शास्त्रप्रसिद्ध्यर्थो वैशब्दः। जायमानस्य मुष्टिद्वयं लोके प्रसिद्धम्। मुष्टिमध्ये यज्ञधारणं शाखान्तरेऽप्याम्नातम्। मुष्टी करोति वाचं यच्छति यज्ञस्य धृत्यै (तै० स० ६-१४-३) इति। प्रकारान्तरेण मुष्टिद्वयं प्रशंसति तदाहुरिति। तत्र मुष्ट्योः करणे ब्रह्मवादिनः कञ्चिद्गुणमाहुः। द्वयोर्बहूनां वा संभूय सोमाभिषवः संसवः। स च महान्दोषः। तस्मिन्नेव देशे तस्मिन्नेव काले मत्सरग्रस्तैर्यजमानैः प्रवर्तितत्वात्। नद्या वा पर्वतेन वा व्यवधानरहितयोः समीपवर्तिनोः परस्परमन्त्रध्वनिश्रवणयोग्ययोर्देशयोः स्पर्धमानाभ्यां यजमानाभ्यां प्रवर्तितौ सोमयागौ तयोरयं संसवाख्यो दोषः। तथाच सूत्रकार आह। संसवोऽनन्तर्हितेषु नद्या वा पर्वतेन वा इति (आ० श्रौ०६-६)। सोऽयं दोषः पूर्वदीक्षिणो नास्ति। एकस्मिन्नेव दिवसे द्वयोर्यजमानयोर्मध्ये यः पूर्वं दीक्षणीयेष्टिं करोति स पूर्वदीक्षी। एतस्य मुष्ट्योर्मध्ये यज्ञः परिगृहीतः सर्वाश्च देवताः परिगृहीताः। तदानीमितरसम्बन्धिनो यज्ञस्याप्रवृत्तत्वेन तत्र गच्छाम इत्येवं यज्ञस्य देवतानां वाऽऽलोचनाभावात्। पश्चाद्दीक्षणीयेष्टिं कुर्वाणस्यापरदीक्षितस्य यज्ञो देवताश्च सुलभा न भवन्ति। पूर्वमन्येन यजमानेनावरुद्धत्वात्। तस्मादपरदीक्षिण आर्तिरूपो विनाशो यथाऽस्ति तथा पूर्वदीक्षिण आर्तिर्नास्ति। संवेशाय त्वोपवेशाय त्वेत्यादिमन्त्रेण येयं संसवप्रायश्चित्ताहुतिः सेयमपरदीक्षिणैव कर्तव्या न पूर्वदीक्षिणेत्यर्थः। इतिशब्दो ब्रह्मवादिवचनसमाप्त्यर्थः। यदेतत्कृष्णाजिनवेष्टनं विहितं तस्यावभृथगमनात्प्रागेवोन्मोचनं विधत्ते उन्मुच्येति। योनिस्थानीयाद्देवयजनदेशान्निर्गत्यावभृथगमनं गर्भरूपस्य दीक्षितस्य जन्मस्थानीयम्। जन्म च लोके जरायुरूपवेष्टने छिन्ने सति पश्चात्सम्पद्यते। तस्मादत्रापि जरायुस्थानीयं कृष्णाजिनमुन्मुच्य जन्मस्थानीयमवभृथगमनं कुर्यात्। कृष्णाजिनवद्वाससोऽपि प्रसक्तमुन्मोचनं वारयति सहैवेति। उल्बाख्यस्याभ्यन्तरवेष्टनस्य जन्मकालेऽप्यनिवृत्तिदर्शनादुल्बस्थानीयवस्त्रस्यावभृथगमनकालेऽप्यनुवृत्तिर्द्रष्टव्या। अथ मीमांसा। पञ्चमाध्यायस्य तृतीयपादे चिन्तितम्। इष्टिदण्डादिभिर्दीक्षा किं वेष्ट्यैवोक्तितोऽग्रिमः। युक्तः संस्कार इष्ट्यैव दण्डादिर्व्यञ्जकत्वतः॥ (जै० न्या० वि० ५-३-११)। ज्योतिष्टोमे श्रूयते आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण इति। अन्यदपि श्रुतम्। दण्डेन दीक्षयति कृष्णाजिनेन दीक्षयतीति। अत्रेष्टिवद्दण्डादीनामपि साधनत्वविधानात्सर्वैरियं दीक्षेति चेन्मैवम्। इष्टेः क्रियारूपत्वात्संस्कारहेतुत्वं युक्तं दण्डादयस्तु द्रव्यरूपा न पुरुषं संस्कर्तुं प्रभवन्ति। न चैवं दण्डादिवैयर्थ्यम्। दीक्षितोऽयमित्यभिव्यक्तिरूपस्य दृष्टप्रयोजनस्य सद्भावात्। तस्मादिष्ट्यैव दीक्षा सिध्यति ॥१-३॥

॥ २ ॥

१.६

काम्ये संयाज्ये नानाविधे विधाय नित्ये संयाज्ये विधातुं विराट्छन्दः प्रशंसति अथो इति । अथो काम्यसंयाज्याकथनानन्तरं नित्ये संयाज्ये कथ्येते इति शेषः । विराडाख्यं यच्छन्दोऽस्ति एतच्छन्दः पञ्चविधवीर्योपेतत्वेन प्रसिद्धम् । तदेव विस्पष्टयति यदिति । यस्मात्कारणादियं विराट् पादत्रयोपेता तेन कारणेनोष्णिग्रूपा गायत्रीरूपा च भवति । तयोरपि पादत्रयोपेतत्वेन समत्वादतस्तयोरुभयोर्वीर्यं विराज्यस्ति । यस्मात्कारणादस्या विराजः पादा एकादशाक्षरोपेतास्तेन कारणेनेयं त्रिष्टुब्रूपा भवति । तदीयं वीर्यं प्राप्नोति । यस्मात्कारणादियं त्रयस्त्रिंशदक्षरोपेता तेन कारणेनानुष्टुब्रूपा । तदीयं वीर्यं प्राप्नोति । यद्यप्यनुष्टुब् द्वात्रिंशदक्षरा तथाप्येकेनाक्षरेण न्यूनेनाधिकेन वा छन्दांसि नैव नश्यन्ति । तथा द्वाभ्यामक्षराभ्यां न्यूनाभ्यामधिकाभ्यां वा न नश्यन्ति । एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्क इति न्यायात् । ननु त्रिंशदक्षरा विराडिति श्रूयते तत्र प्रेद्धो अग्ने इत्यस्यामृचि एकोनत्रिंशदक्षराणि । इमो अग्न इत्यस्यामृचि द्वात्रिंशदक्षराण्यतस्तयोर्न विराट्त्वमिति चेन्मैवम् । नवा एकेनाक्षरेणेति वाक्येनैव परिहृतत्वात् । यस्माद्विराट् तस्मादेतदीयं पञ्चमं वीर्यमस्ति । एवंविधविराड्वेदनं प्रशंसति सर्वेषामिति । गायत्र्युष्णिक्त्रिष्टुबनुष्टुब्विराड्रूपाणां सर्वेषां छन्दसां यत्सामर्थ्यमस्ति तदयं वेदितावरुन्धेऽभिमुखीकरोति । कृत्वा चाश्नुते प्राप्नोति । तथा सर्वच्छन्दोऽभिमानिदेवानां सायुज्यं सहभावं सरूपतां समानरूपत्वं सलोकतामेकस्थाननिवासं च प्राप्नोति । अन्नादोऽन्नभक्षणसमर्थो नीरोगः । अन्नपतिर्बह्वन्नस्वामी भवति । न केवलं स्वयमेव किन्तु स्वकीयया पुत्रादिप्रजया सहान्नाद्यमश्नुते । इत्थं छन्दः प्रशस्येदानीं विधत्ते तस्मादिति । यस्माद्विराजो युक्तमहिमास्ति तस्मादित्यर्थः । तयोः प्रतीकद्वयं दर्शयति प्रेद्ध इति । इत्थं दीक्षणीयेष्टौ स्विष्टकृतः संयाज्ये विधाय दीक्षितस्य सत्यवदनं विधत्ते ऋतमिति । मनसा यथावस्तु चिन्तनमृतशब्दाभिधेयम् । वाचा यथावस्तु कथनं सत्यशब्दाभिधेयम् । तदुभयात्मिका दीक्षा तद्वैकल्ये नश्यति । यस्मादेवं तस्माद्दीक्षितेन सत्यमेव वदितव्यं नतु स किञ्चिदप्यनृतं वदेत् । तदशक्याभिधानमित्यभिप्रेत्यानुजिघृक्षया प्रकारान्तरं विधातुं प्रस्तौति अथो इति । प्रकारान्तरप्रारम्भार्थोऽयमथोशब्दः । ब्रह्मवादिन एवमाहुः कः खलु मनुष्यः को नाम सर्वं वाक्यं सत्यं वदितुमर्हति न कश्चिदपि तथा कर्तुं शक्नोति । देवा एव सत्यसंहिताः सत्ये तात्पर्यवन्तः । मनुष्यास्तु प्रायेणानृते तात्पर्ययुक्ताः । इतिशब्दो ब्रह्मवादिवचनसमाप्त्यर्थः । इदानीं सत्यवदनफलसिद्ध्यर्थं प्रकारान्तरं विधत्ते विचक्षणेति ।

विचक्षणेत्यक्षरचतुष्टयात्मकोऽयं मन्त्रस्तद्युक्तं वाक्यं प्रयुञ्जीत। देवदत्त विचक्षण गामानय। यज्ञदत्त विचक्षण गां बधानेत्येवं तत्प्रयोगः। यदाहापस्तम्बः। चनसित विचक्षणेति नामधेयान्तेषु दधाति चनसितेति ब्राह्मणं विचक्षणेति राजन्यवैश्यौ (आप० श्रौ० १०-१२) इति। विचक्षणेति मन्त्रस्य सत्यवदनपूर्तिहेतुत्वं प्रतिपादयति। चक्षुरिति। चक्षुरिन्द्रियमेव विचक्षणशब्दवाच्यम्। तदेव स्पष्टीक्रियते। चक्षिङ् दर्शने इत्यस्माद्धातोरयं शब्दो निष्पन्नः। तथा सति विशेषेण वस्तुतत्त्वमेतेनाचष्टे पश्यतीति विचक्षणं नेत्रम्। तस्माच्चक्षुर्विचक्षणमिति पर्यायौ। उक्तनिर्वचनप्रदर्शनार्थ इतिशब्दः। अस्त्वेवं तयोः पर्यायत्वं कथमेतावता सत्यसंपूर्तिसिद्धिरित्याशङ्क्याह एतदिति। प्रत्यक्षानुमानादिप्रमाणानां मध्ये प्रत्यक्षप्रमितिसाधनं यच्चक्षुरिन्द्रियमस्ति एतदेव मनुष्येषु सत्यं निहितं यथावस्तुज्ञानसाधनत्वेनाभिमतं तस्माच्चक्षुष्पर्यायविचक्षणशब्दप्रयोगेण सत्यसंपूर्तिर्भवति। अन्वयव्यतिरेकाभ्यां चक्षुषो यथावस्तुदर्शनसाधनत्वं साधयति तस्मादिति। यस्माच्चक्षुपस्तत्त्वदर्शनहेतुत्वं मनुष्याणामभिप्रेतं तस्माल्लोके सभायामागत्य काञ्चिद्वार्तामाचक्षाणं पुरुषं प्रति सभ्या एवमाहुरद्रागिति। किन्त्वमेवमद्राक्षीरित्यर्थः। स च पुरुषो यद्यहमेवमद्राक्षमिति ब्रूयात्तदाऽस्य वचनं सत्यमिति सभ्याः सर्वे श्रद्दधति विश्वासं कुर्वन्ति। तदिदमेकमुदाहरणम्। यद्यु वा इत्ययं निपातसमुदाय उदाहरणान्तरप्रदर्शनार्थः। अथवा कश्चित्पुमान् स्वयमेव चक्षुषा स्कन्धमूलाद्युपेतं स्थाणुं पश्यति। अन्ये बहवः पुरुषा दूरवर्तिनोऽपश्यन्तः पुरुषोऽयमित्याचक्षते। चनशब्दोऽपिशब्दार्थः। बहूनामप्यन्येषां वचनमयं पुरुषो न श्रद्दधाति किन्तु स्वकीयं चाक्षुषं दर्शनमेव श्रद्दधाति। वाजसनेयिनोऽप्यामनन्ति। द्वौ विवदमानावेयायातावहमदर्शमहमश्रौषमिति य एवं ब्रूयादहमदर्शमिति तस्मा एव श्रद्दधति। इति। तैत्तिरीयाश्चामनन्ति। अनृतं वै वाचा वदति। अनृतं मनसा ध्यायति। चक्षुर्वै सत्यम्। अद्रागित्याह। अहमदर्शमिति। तत्सत्यमिति। तथाविधचक्षुःपर्यायस्य विचक्षणशब्दस्य सत्यसंपूर्तिहेतुत्वमुपपाद्य पूर्वोक्तं विधिमुपसंहरति तस्मादिति। अस्य विचक्षणशब्दोपेतवचनवादिनो या वागस्ति सा सत्योत्तरा स्वरूपेणानृतापि विचक्षणेतिमन्त्रसामर्थ्येन सत्यभूयिष्ठैव भवति। अनृतदोषो न स्पृशतीत्यर्थः। भवतिशब्दस्याभ्यासोऽध्यायसमाप्त्यर्थः ॥१·६॥

॥ ३ ॥

३·२

मन्त्रगतां सङ्ख्यां विधाय तन्मन्त्रान्विधातुमादौ प्रैषमन्त्रं विधत्ते सोमायेति। यः सोमः क्रीतः स क्रयदेशात्प्राचीनवंशं प्रति प्रोह्यते नीयते तदर्थमनुकूला ऋचो हे होतरनु-

क्रमेण ब्रूहि । तमेतं प्रैषमन्त्रमध्वर्युः पठेत् । अथ होतुः प्रथमामृचं विधत्ते भद्रादिति । सेयमृक् तैत्तिरीयशाखायामेवमाम्नाता । भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुर एता ते अस्तु । अथेमवस्य वर आ पृथिव्या आरे शत्रून्कृणुहि सर्ववीरः ( तै० स० १-२-३-३ ) इति । तस्या अयमर्थः । हे सोम भद्रान्मङ्गलाद्भूलोकरूपात्तस्मात्क्रयदेशाच्छ्रेयः श्रेष्ठं स्वर्गलोकस्थानीयं प्राचीनवंशदेशमभिलक्ष्य प्रेहि प्रकर्षेण गच्छ । तथा गच्छतस्ते बृहस्पतिः पुरएता पुरतो गन्ताऽस्तु । अथ गमनादूर्ध्वं पृथिव्याः सम्बन्धिन्यासमन्ताद्वरे श्रेष्ठे देवयजन ईमवस्येदं तवावस्थानयोग्यं स्थानं निश्चिनु । सर्वेभ्यो वीरः शूरस्त्वं शत्रून्पापरूपान्यज्ञद्वेषिण आरे कृणुहि दूरे कुर्वित्यर्थः । तस्यामृचि प्रथमं पादं व्याचष्टे अयमिति । तत्तेन प्रथमपादपाठेन । स्पष्टमन्यत् । द्वितीयं पादमनूद्य व्याचष्टे बृहस्पतिरिति । बृहस्पतेर्ब्रह्मत्वं ब्राह्मणजातिमत्त्वं ब्रह्म वै देवानां बृहस्पतिरित्यादिश्रुत्यन्तरे प्रसिद्धम् । एतदेतेन द्वितीयपादपाठेनास्मै यजमानार्थं ब्रह्मैव ब्राह्मणमेव पुरोगवं पुरोगन्तारमकः करोति । ब्रह्मवद्ब्राह्मणसहायोपेतं कर्म न वै रिष्यति नाशं न प्राप्नोति । तृतीयं पादमनूद्य व्याचष्टे अथेति । देवयजनाख्यस्य यागदेशस्य पृथिवीसम्बन्धिश्रेष्ठस्थानत्वात्तत्रैवैनं सोमं तत्तेन तृतीयपादपाठेनास्मै यजमानाय द्वेषं कुर्वन्तं पापरूपं शत्रुमपबाधते । अधरं पादयतीति । निकृष्टं पदं प्रापयतीत्यर्थः । होत्रानु-वक्तव्या द्वितीयाद्यास्तिस्र ऋचो विधत्ते सोमेति । तिसृणामृचां सङ्घस्तृचः । स च सोमदेवताको गायत्रीछन्दस्कश्च । सोमानयनकाले तं तृचमनुब्रूयात् । तत्तेनानुवचनेन स्वात्मरूपया देवतया स्वकीयछन्दसा चैनं समृद्धं करोति । अत्र नीयमानद्रव्यविशेषः सोमो मन्त्रदेवताप्यसावेव तस्मात्स्वात्मरूपत्वम् । गायत्री द्युलोकात्सोममानीतवतीति तैत्तिरीयाः कद्रूश्चेत्यनुवाके ( तै० स० ६-१-६ ) समामनन्ति । तस्माच्छन्दसः स्वकीयत्वम् । पञ्चमीमृचं विधत्ते । सर्वे इति । सा च संहितायामेवमाम्नाता । सर्वे नन्दन्ति यशसाऽऽगतेन सभासाहेन सख्या सखायः । किल्बिषस्पृत्पितुषणिर्ह्येषामरंहितो भवति वाजिनायेति । ( ऋ० स० १०-७१-१० ) तस्या ऋचोऽयमर्थः । सर्वे सखायो यजमानप्रभृतयः सख्या सोमरूपेण नन्दन्ति हृष्यन्ति । कीदृशेन सख्या । यशसा यशोरूपेण । आगतेन समीपं प्राप्तेन । सभासाहेन विद्वत्सभां विद्याप्रसङ्गेन सहतेऽभिभवति सभासाहस्तादृशेन । स तादृशः सोमरूपः सर्वेषा-मृत्विग्यजमानानां किल्बिषात्पापात्स्पृणोति पालयति किल्बिषस्पृत् । पितुशब्दोऽन्नवाची । तस्य सनिर्दानं येन सोमेन लभ्यते सोऽयं पितुषणिः । सोमस्य पापनिवारकत्वमन्नप्रदानेन । सर्वशास्त्रप्रसिद्धिद्योतनार्थो हिशब्दः । तथाऽयं सोमो वाजिनशब्दाभिधेयेन्द्रियाय वीर्याय वाऽरंहितोऽलमत्यन्तं हितो भवतीति । तस्या ऋचः प्रथमं पादं व्याचष्टे यश इति । यशस्कारणात्सोमस्य यशस्त्वम् । यः पुमानृत्विग्भूत्वा यज्ञे धनं लप्स्यते यश्च द्रष्टुमागतो ननु

धनार्थी सर्वोऽप्यसौ सोमक्रयणं दृष्ट्वा तुष्यति। द्वितीयं पादमनूद्य व्याचष्टे सभेति। योऽयं राजमानः सोमः सोऽयं ब्राह्मणसभामभिभवति। सर्वे ब्राह्मणाः सोमाधीना भवन्तीत्यर्थः। तृतीयपादे प्रथमं पदमनूद्य व्याचष्टे। किल्बिषेति। योऽयं सोमोऽस्ति एष उ एव किल्बिषात्पालयति सर्वकामहेतोः सोमयागस्य पापक्षयायानुष्ठातुं शक्यत्वात्। यज्ञानुष्ठाने च प्रवृत्तानामृत्विग्यजमानानां कः किल्बिषप्रसङ्ग इत्याशङ्क्याह य इति। यः पुमान्प्रौढे यज्ञे प्रवृत्तो भवति तत्रापि यः श्रेष्ठतां प्रयोगपाटवाभिमानमश्नुते प्राप्नोति स तादृशः पुरुषः कर्मसमाप्तिव्यग्रतया पण्डितम्मन्यत्वेन वाग्वैकल्यं कुर्वन् किल्बिषं भवति पापं प्राप्नोति। तमेतं पापप्रसङ्गं विस्पष्टयति तस्मादिति। यस्मादृत्विजां किल्बिषं सम्भाव्यते तस्माद्यजमाना एवमाहुर्हे होतस्त्वं मानुवोचोऽन्यचित्तः सन् पुरोऽनुवाक्यां मा पठ। हेऽध्वर्यो मा प्रचारीर्व्यग्रतया प्रचारमन्यथाऽनुष्ठानं मा कार्षीः। नु क्षिप्रं कुर्वन्तो भवन्तः किल्बिषं मा यातयन्मा प्राप्नुवन् इतिशब्दो यजमानानामुक्तिसमाप्तौ। इत्थं सम्भावितात्किल्बिषात्सोमः पालयति। तृतीयपादे द्वितीयपदमनूद्य व्याचष्टे पितुषणिरिति। अन्नवाची पितुशब्दो लब्धव्यत्वसाम्याद्दक्षिणामप्युपलक्षयति। तां दक्षिणामेतेन सोमेन निमित्तभूतेन सनोति ऋत्विग्भ्यो ददाति। तत्तेन पितुशब्दपाठेनैनं सोममन्नसनिमन्नदानभूतं करोति। चतुर्थं पादमनूद्य तत्र वाजिनशब्दं व्याचष्टे अरमिति। जरासमाप्तिपर्यन्तं वेदितुरिन्द्रियवीर्ययोरपच्छेदो न भवति। षष्ठीमृचं विधत्ते आगन्निति। स च मन्त्रः संहितायामेवमाम्नातः। आगन्देव ऋतुभिर्वर्धतु क्षयं दधातु नः सविता सुप्रजामिषम्। स नः क्षपाभिरहभिश्च जिन्वतु प्रजावन्तं रयिमस्मे समिन्वतु॥ इति। (ऋ० सं० ४-५३-७)। तस्यायमर्थः। सोमो देव आगन्निह कर्मण्यागच्छतु। आगत्य च ऋतुभिः सह क्षयं निवासस्थानं वर्धतु वृद्धिं प्रापयतु। नोऽस्माकं सविता प्रेरकः स देवः सुप्रजां शोभनापत्यमिषमन्नं च दधातु संपादयतु। स देवो नोऽस्मान् क्षपाभी रात्रिभिरहभिरहोभिश्च जिन्वतु प्रीणयतु। तथा प्रजोपेतं धनमस्मे समिन्वत्वस्मासु सम्यक् प्रापयत्विति। अस्या ऋचः प्रथमपादे पूर्वभागं व्याचष्टे। आगत इति। तर्हि तस्मिन्क्रयोत्तरकाले स सोम आगतो भवतीति प्रसिद्धम्। उत्तरभागमनूद्य व्याचष्टे ऋतुभिरिति। यथा लोके कस्यचिन्मनुष्यस्य भ्रातरोऽपि मनुष्यजातीयास्तथा राजजातीयस्य सोमस्य भ्रातरोऽपि राजजातीयाः। तत्तेन मन्त्रभागपाठेन तैर्ऋतुभिर्भ्रातृभिः सहैनं सोममस्मिन्कर्मण्यागमयति। द्वितीयपादमनूद्य व्याचष्टे दधात्विति। आशासनीयोऽपेक्षणीयः प्रजादिपदार्थ आशीस्तामनेन पादपाठेनाशास्ते। तृतीयपादमनूद्य व्याचष्टे स इति। लोकप्रसिद्धान्यहान्येवात्र मन्त्रोक्तान्यहानि। अहोभिरिति वक्तव्ये वर्णविकारेणाहभिरित्युक्तत्वात् शब्दान्तरभ्रमं व्युदसितुमिदं व्याख्यानम्। एवमत्र व्याख्यातव्यः पदविशेषो नास्ति किन्त्वाशीः

प्रार्थनरूपं तात्पर्यमेवेत्यभिप्रेत्यैवकारः प्रयुक्तः। सप्तमीमृचं विधत्ते येति। सेयमृक् संहितायामाम्नाता। या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम्। गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्यान्। (ऋ० सं० १-९१-१९) इति। हे सोम ते तव धामानि यान्युत्तरवेद्यादिस्थानानि यजमाना हविषा यजन्ति ते तव ता विश्वा तानि सर्वाणि स्थानानि व्याप्येति शेषः। ततो भवान्यज्ञं परिभूरस्तु परितः प्राप्तवान्भवतु। किञ्च त्वं गयस्फानो गयानामस्मदीयानां गवां वर्धयिता प्रतरणः प्रतारयिता सर्वापदुत्तारणहेतुः सुवीरः शोभनपुत्रपौत्रादिप्रदो भवेति शेषः। हे सोमावीरहाऽस्मदीयानां वीरपुरुषाणां हननमकुर्वाणो दुर्यानस्मदीयगृहान्प्रति प्रचर प्रकर्षेण गच्छ। अत्र प्रथमपादस्य स्पष्टार्थत्वं बुद्‍ध्वा व्याख्यानमुपेक्ष्य द्वितीयपादमपि स्पष्टार्थाभिप्रायेणैव पठति तेति। तृतीयपादमनूद्य व्याचष्टे गय इति। स्फावयिता वर्धयिता। चतुर्थपादमनूद्य व्याचष्टे अवीरहेति। आयत आगच्छतः सोमाद्राज्ञो यजमानस्य गृहा गृहवर्तिनो वीरपुरुषाः केनापि परिचर्याविकल्येन राजा कोपं करिष्यतीति मत्वा तस्मात्सर्वे बिभ्यति। तदानीं स होता यद्येतामवीरहेति पदयुतामृचमन्वाह तत्तेनानुवचनेन शान्त्या शान्तिहेतुभूतयाऽवीरहोक्त्यैवैनं राजानं शमयति शान्तं करोति। स च राजा शान्तः सन्नस्य यजमानस्य पुत्रादिकां प्रजां गवादिपशूंश्च न हिनस्ति। अष्टमीमृचं विधत्ते इमामिति। इयमृग्वरुणदेवताका तया परिदधाति। अनुवचनं समापयेदित्यर्थः। सेयमृक् संहितायामेवमाम्नाता। इमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण संशिशाधि। ययाति विश्वा दुरिता तरेम सुतर्माणमधिनावं रुहेम इति (ऋ० सं० ८-४२-३)। तस्या अयमर्थः। हे वरुण देवेमां धियं यज्ञानुष्ठानविषयां बुद्धिं शिक्षमाणस्याभ्यस्यतो यजमानस्य क्रतुं यज्ञविषयं वीर्यं दक्षं कौशलं यज्ञविषयं प्रज्ञानं संशिशाधि। सम्यगुपदिश। तादृशीं सुतर्माणं सम्यक्तरणहेतुं वाग्रूपां नावमधिरुहेमाधिक्येनारोहणं कुर्म इति। वारुण्या समापने कारणमाह वरुणेति। यावत्कालं सोम उपनद्धो वस्त्रादिना बद्धः स्याद्यावच्च परिश्रितानि प्राचीनवंशादिस्थानानि प्रतिपद्यते तावदेव सोमो वरुणदेवताको बन्धनस्य वरुणपाशाधीनत्वात्। तत्तथा सति वारुण्या परिदधानो होता स्वयैव सोमसम्बन्धिन्यैव देवतया स्वेन छन्दसा स्वसम्बन्धिना छन्दसा तमेनं सोमं समृद्धं करोति। अस्या ऋचस्त्रिष्टुप्छन्दः। सा च त्रिष्टुप् सोममाहर्तुं द्युलोके गत्वा दक्षिणां तपश्चाहृतवती। तथाच शाखान्तरे श्रूयते। सा दक्षिणाभिश्च तपसा चागच्छत् इति (तै० सं० ६-१-६-२-३)। तस्मादिदं छन्दः सोमस्य स्वकीयम्। प्रथमपादे शिक्षमाणस्येति पदं व्याचष्टे शिक्षमाणस्येति। पुनःपुनरभ्यासः शिक्षा। यजनशीलस्य सोऽस्ति। द्वितीयपादमनूद्य व्याचष्टे क्रतुमिति। द्वितीयार्द्धमनूद्य व्याचष्टे ययेति। तत्र यत्र यज्ञस्य वा कृष्णाजिनस्य वा प्रस्तावस्तत्र तत्परत्वेन सुतर्मशब्दो व्याख्येयः। इह तु मन्त्ररूपा वागि-

वच्छिता। तत्तेन मन्त्रपाठेन वाग्रूपामेव नावमारुह्य तया नावा स्वर्गमभिलक्ष्य सम्यक् तरति। उक्ताः सर्वा ऋचः प्रशंसति ता इति। विवक्षितार्थप्रतिपादकेन रूपेण समृद्धाः। तामेव समृद्धिं विशदयति एतदिति। पूर्ववद्‍व्याख्येयम्। आद्यान्त्ययोर्ऋचोरावृत्तिं विधत्ते तासामिति। आवृत्तिसहितानामृचां सङ्ख्यां प्रशंसति ता इति। वेदनं प्रशंसति प्रजापत्येति। आवृत्तिं प्रशंसति त्रिरिति। तत्तेनावर्तनेन वर्सौ रज्ज्वा उभयन्तोऽन्तयोः स्थितौ मण्याकारौ ग्रन्थी। तद्वदत्रापि नह्यति बध्नाति। तच्च बन्धनं स्थेम्ने स्थैर्याय भवति। तस्यैवान्वयव्यतिरेकाभ्यां व्याख्यानं प्राबल्यमविस्रंसनं च ॥३-२॥

॥ ४ ॥

३·३

सोमप्रवाहणीर्ऋचो विधाय सोमस्य शकटादवरोहणं विधत्ते। अन्येति। क्रयदेशे सोमं शकटे प्रक्षिप्य प्राचीनवंशसमीपे समानीय शकटबद्धयोरनडुहोर्मध्ये कश्चिदनड्वाहं विमुच्यापरमविमुच्य राजानं शकटादधस्तादृत्विज उपावहरेयुः। युक्तः शकटे बद्धो विमुक्तः शकटाद्वियोजितः। उभयोरनडुहोर्मोचने दोषमुपन्यस्यति। राज्ञः सोमस्य पितृभिः स्वीकृतत्वादयं सोमो देवयोग्यो न भवेत्। उभयोरनडुहोः शकटयोगेऽपि दोषमाह। यदिति। अप्राप्तस्य धनादेः संपादनं योगः। प्राप्तस्य रक्षणं क्षेमः। योगसहितः क्षेमो योगक्षेमः। तदभावः। प्रजाः पुत्रादिका विन्देल्लभेत प्राप्नुयात्। य इति। योऽनड्वान् विमुक्तस्तदेतच्छालासदां गृहावस्थितानां प्रजानां पुत्रादीनां रूपं योऽनड्वानधस्ताच्छकटे युक्तस्तच्च क्रियाणां लौकिकीनां वैदिकीनां च रूपम्। यद्वा चक्रमस्यास्तीति चक्रि शकटम्। तेन चक्रिणा शकटेन यान्ति शकटमारुह्य गच्छन्त्यः प्रजाश्चक्रियास्तासां रूपम्। एवं सति ते यजमानानां मध्ये ये केचिद् बुद्धिमन्तो यजमाना अन्ये युक्ते एकस्मिन्ननडुहि शकटबद्धेऽन्ये विमुक्ते इतरस्मिन्ननडुहि शकटाद्वियोजिते सति सोममुपावहरन्ति। ते बुद्धिमन्त उभावेव क्षेमं योगं च सम्पादयन्ति। अयमर्थस्तैत्तिरीया आमनन्ति। यदुभौ विमुच्यातिथ्यं गृह्णीयाद्यज्ञं विच्छिन्द्यादुभावविमुच्य यथाऽनागतायातिथ्यं क्रियते तादृगेव तद्विमुक्तोऽन्योऽनड्वान् भवत्यविमुक्तोऽन्योऽथातिथ्यं गृह्णाति यज्ञस्य सन्तत्यै। ( तै० स० ६·२-१-१ ) इति। नन्वेवत्र सोमावहरणकाल उच्यते इतरत्रातिथ्येष्टिकाल इति न समानविषयत्वमिति चेन्न। उभयोरेककालीनत्वात्। अथाख्यायिकामुखेन सोमावहरणस्यैशानीं दिशं विधत्ते। देवासुरा इति। समयतन्त। सङ्ग्राममकुर्वन्। प्राच्यादिषु चतसृषु दिक्षु देवानां पराजय आसीत्। ऐशान्यां दिशि नास्ति पराजयः। तस्मात्तस्यां दिशि सोमावहरणाय यतेत प्रयत्नं कुर्याद्वा यातयेत्प्रयत्नं कारयेद्वा। एवमेव

वैकल्यराहित्यं कर्तुं प्रभुर्भवति। अथवा सोमस्य राज्ञो विजयित्वेनोत्तरत्र प्रशंसां कर्तुं देवासुरावा इत्यादिना लौकिकस्य राज्ञ ऐशान्यां दिशि स्वकीयभृत्यप्रेरणं प्रतिपादितम् । इदानीं सोमस्य जयहेतुत्वं दर्शयति ते देवा इति । ते देवाः परस्परमेवमब्रुवन् अस्माकं राजाभावात्प्राच्यादि-दिक्षु पराजय आसीदसुराणां जय आसीत् । ततो राजानं संपादयाम इति विचार्य सोममेव राजानं कृत्वा प्राच्यादिदिक्षु जयं प्राप्ताः । एवं सति यो यजमानः सोमयागं करोति एष एव सोमराजा । सोमो राजा यस्येति बहुव्रीहिः । अतः सोमाख्यस्वामिनः प्रसादादयं यजमानः सर्वत्र जयति । तत्कथमिति चेत्तदुच्यते । सोमवाहनार्थे शकटे प्राचि तिष्ठति प्राङ्मुखेऽवस्थिते सत्यृत्विजस्तत्र सोममादधति प्रक्षिपन्ति । तेन सोमसम्बन्धिशकटस्य प्राङ्मुखत्वेन यजमानः प्राच्यां दिशि जयं प्राप्नोति । शकटस्थितं सोमं दक्षिणा परिवहन्ति शकटं ददिणाभिमुखत्वेन पर्यावर्त्य वहन्ति तेन दक्षिणस्यां दिशि जयः । ततः शकटं प्रत्यङ्मुखमावर्तयन्ति तेन प्रतीच्यां दिशि जयः तमुदीचस्तिष्ठत उदङ्मुखत्वेना-वस्थिताच्छकटात्तं सोममुपावहरन्ति तेनोदङ्मुखत्वेनोदीच्यां दिशि जयः। एवं सोम-राजप्रसादाद्यजमानः सर्वा दिशो जयति। अत्रार्थवादेन विधय उन्नेयाः। प्राङ्मुखे शकटे सोममादध्युः। ततो दक्षिणाभिमुखत्वेन परिवहेयुः। ततः प्रत्यङ्मुखत्वेनावर्तयेयुः। तत उदङ्मुखाच्छकटात्सोममुपावहरेयुरिति। एतत्सर्वमभिप्रेत्याहापस्तम्बः। सन्नप्राह प्रच्यवस्व भुवस्पत इति प्राचोऽभिप्रयाय दक्षिणमावर्तत इत्यग्रेण प्राग्वंशं प्रागीषमुदगीषं वा शकटमवस्थाप्येति (आप० श्रौ० ११-२६)। वेदनं प्रशंसति सर्वा इति। अत्र शब्दादेवा-श्रुतस्यापि सर्वा दिशो जयतीति वाक्यस्यावृत्तिः कर्तव्या ॥३-३॥

ऐतरेयब्राह्मणभाष्ये तृतीयाध्याये तृतीयः खण्डः ।

॥ ५ ॥

३.४

सोमोपावहरणं विधायातिथ्येष्टिरूपं कर्म विधत्ते हविरिति। प्राचीनवंशसमीपे सोमे राजनि समागते सति तस्यातिथिरूपत्वात्तदीयमातिथ्याख्यकर्मसम्बन्धि हविर्निर्व-पेत्। यद्यप्यस्य हविषोऽतिथिर्देवता न भवति विष्णुदेवताया वक्ष्यमाणत्वात्तथापि सोमस्यातिथिरूपस्योपचाराय क्रियमाणत्वादातिथ्यमिति कर्मनाम युक्तम्। एतमेवाभिप्रायं विस्पष्टयति सोम इति। तिथिविशेषमनपेक्ष्य भोजनार्थं कस्यचिद् गृहं प्रत्यकस्माद्यः समागतः सोऽतिथिः। सोमोऽपि तथाविधत्वादतिथिरित्युच्यते। तत्सम्बन्धित्वादातिथ्यमिति नामधेयम्। हविर्विशेषं विधत्ते नवेति। नवसु कपालेषु संस्कृतः पुरोडाशो नवकपालः।

पुरुषस्य शिरोगतेषु सप्तसु छिद्रेषु वर्तमानाः सप्त प्राणा अधोभागावस्थितयोर्वर्तमानौ द्वौ एवं नवसङ्ख्याकाः प्राणाः। तथाचान्यत्र श्रूयते। सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चाविति। एवं सति कपालगता नवसङ्ख्या प्राणानां क्लृप्त्यै स्वव्यापारसामर्थ्याय भवति। सामर्थ्यं च प्राणोऽयमीदृश इति सर्वे प्राणाः प्रज्ञाता भवन्ति। द्रव्यं विधाय देवतां विधत्ते। वैष्णव इति। विष्णुर्देवता यस्य पुरोडाशस्य सोऽयं वैष्णवः। विष्णोर्व्यापित्वात्सर्वयज्ञ-स्वरूपत्वम्। तथा सत्यातिथ्येष्टेरपि यज्ञत्वाद्विष्णुः स्वकीया देवता भवति। तया देवतयैनं समृद्धं करोति। यद्यप्यत्र मन्त्राणामविहितत्वात्तच्छन्दो न प्रकृतं तथापि यज्ञस्य विहितत्वाद्या-ज्यानुवाक्ययोरवश्यंभावेन तच्छन्दोऽर्थसिद्धम्। तेन स्वकीयेन छन्दसा यज्ञं समृद्धं करोति। ते च याज्यानुवाक्ये आश्वलायनेन दर्शिते। इदं विष्णुर्विचक्रमे तदस्य प्रियमभि पाथो अश्यामिति ( आ० श्रौ० ४-५ )। तयोश्च गायत्री त्रिष्टुप् चेति छन्दोद्वयम्। तेन छन्दोद्वयेन यज्ञस्य समृद्धिः। अत्र शाखान्तरोक्तानग्नेरातिथ्यमसि विष्णवे त्वेत्यादिकांश्च निर्वापमन्त्रान् हृदि निधाय तत्प्रशंसारूपमर्थवादं दर्शयति सर्वाणीति। गायत्रीत्रिष्टुबित्यादीनि सर्वच्छन्दांसि बृहद्रथन्तरवैरूपसामसाध्यानि पृष्ठस्तोत्राणि। तदुभयाभिमानिनो देवा अनुचराः सन्तो राजानमनु यजमानगृहं प्रत्यागच्छन्ति। अतो राज्ञा सहागतेभ्यः सर्वेभ्यः सहातिथ्यं कर्तव्यम्। तथा सत्यग्नेरातिथ्यमसीत्यादिमन्त्रैः ( तै० स० ६-२-१-२ ) सर्वेषामनुचराणां गायत्र्यादीनां तृप्तिर्भवतीत्यर्थः। तथा च तैत्तिरीया आमनन्ति। यावद्भिर्वै राजानुचरैराग-च्छति सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते छन्दांसि खलु सोमस्य राज्ञोऽनुचराण्यग्नेरातिथ्यमसि विष्णवे त्वेत्याह गायत्र्या एवैतेन करोति सोमस्यातिथ्यमसि विष्णवे त्वेत्याह त्रिष्टुभ एवैतेन करोति इत्यादि ( तै० स० ६-२-१-२ )। अत्रातिथ्येष्टिमध्येऽग्निमन्थनमापस्तम्ब आह चतुर्होत्रातिथ्यमासाद्य सम्भारयजूंषि व्याचष्टे। यजमानं वाचयतीत्येके। पशुवन्निर्मन्थ्यः सामिधेन्यश्च। ( आप० श्रौ० १०-३० ) इति। आश्वलायनोऽप्याह। आतिथ्येळान्ता तस्यामग्निमन्थनम्। ( आ० श्रौ० ४-५ ) इति। तदग्निमन्थनं विधत्ते अग्निमिति। लोके यथैवादोऽतिथिसत्करणं तथैव सोमस्यापि तत्सत्करणं द्रष्टव्यम्। तावेतौ दृष्टान्तदार्ष्टान्तिकौ मनुष्यराज इत्यादिना स्पष्टीक्रियेते। महति मनुष्यभूपतौ वान्यस्मिन् कस्मिंश्चिद्विद्यावृत्तादि-सम्पन्नत्वेनार्हति पूज्ये महति ब्राह्मणे वा गृहं प्रत्यागते सत्यतिथिसत्कारार्थं शास्त्रकुशलाः शिष्टाः कश्चिदुक्षाणं वृषभं वा वेहतं गर्भघातिनीं वृद्धां गां वा क्षदन्ते हिंसन्ति। अयं सत्कारः स्मृतिषु प्रसिद्धो युगान्तरधर्मो द्रष्टव्यः। एवमेवात्रापि अग्निं मन्थन्तीति यदुक्तिः एतदस्मै सोमायातिथिसत्कारार्थं क्षदन्तेऽग्नेर्देवपशुत्वात्। यथानड्वान्हव्यं वहति तथाग्निरपि हव्यं वहति तस्मादग्नेः पशुसाम्यम्। अत्र मीमांसा सप्तमाध्याये तृतीयपादे

चिन्तितम्। वैष्णवे त्रिकपाले वैष्णवान्नवकपालतः। धर्मातिदेशः स्यान्नो वा विद्यते ऽत्राग्निहोत्रवत्। श्रुत्या वैष्णवशब्दोऽयं देवताया विधायकः। स गौणवृत्तिमाश्रित्य धर्मान्नातिदिशत्यतः ॥ (जै॰ न्या॰ वि॰ ७-३-६)। आतिथ्येष्टौ वैष्णवो नवकपालो विहितः। तत्र श्रुतो वैष्णवशब्दो राजसूयगते त्रिकपाले प्रयुज्यमानोऽग्निहोत्रशब्दवन्नवकपालधर्माननतिदिशति। इति पूर्वः पक्षः। विष्णुर्देवता यस्येति विग्रहे विहिततद्धितप्रत्ययो देवतामभिधत्ते न तु धर्मान्। तस्मान्नातिदिशति ॥४॥

ऐतरेयब्राह्मणभाष्ये तृतीयाध्याये चतुर्थः खण्डः

॥ ६ ॥

६·१

राजक्रयब्राह्मणमुक्रमादौ वह्नेः प्रणीतिप्रतिपादिकाश्च तथा हविर्धानविवर्तनार्था अग्नेश्च सोमस्य च या ऋचः स्युः। अथ षष्ठाध्यायेऽग्नीषोमीयः पशुर्वक्तव्यः। तत्रादौ यूपं वक्तुमाख्यायिकामाह। यज्ञेनेति। पुरा कदाचिद्देवा ज्योतिष्टोमं यज्ञमनुष्ठाय तत्फलभूतं स्वर्गं प्राप्ताः। तत्र चावस्थाय भीतिं प्राप्ताः। केनाभिप्रायेणेति तदुच्यते। ये मनुष्या वर्णाश्रमधर्मप्रवृत्ता ये च ऋषयस्तपसि प्रवृत्तास्ते सर्वेऽपि अस्मदीयमिमं यज्ञं दृष्ट्वा स्वयमप्यनुष्ठाय स्वर्गं समागत्यास्मान्प्रज्ञास्यन्ति ततोऽस्मत्समा भविष्यन्ति। ततस्ते देवा भीता मनुष्याणामृषीणाञ्च व्यामोहाय तमेव स्वकीयं यज्ञं यूपस्तम्भेनैवायोपयन्मिश्रितवन्तः। अन्यथाऽनुष्ठानरूपं भ्रममुत्पादितवन्त इत्यर्थः। यस्मात्कारणाद्यूपेनैव तं यज्ञमयोपयन्नन्यथा कृतवन्तस्तस्माद्योपनसाधनत्वाद्यूपनाम सम्पन्नम्। केन क्रमेण व्यामोहितवन्त इति। उच्यते। तं यूपमूर्ध्वाग्रं सन्तमिदानीमवाचीनाग्रमधोमुखं निमित्य निखायोर्ध्वाभिमुखा उद्गतास्तदानीं मनुष्या ऋषयश्च देवानां यज्ञवास्तु यज्ञभूमिमागत्य यज्ञस्य सम्बन्धि चिह्नं यत्किञ्चिदवगमिष्यामस्तच्च देवानुष्ठितस्य प्रज्ञात्यै सम्पद्यत इत्यभिप्रेत्य यज्ञभूमिं सर्वतः परीक्ष्य यज्ञचिह्नमिदमिति यूपमेवाविन्दन्नलभन्त। कीदृशं यूपमवाचीनाग्रं निमितमधोमुखत्वेन निखातम्। ततस्ते मनुष्या ऋषयश्चैवं विदुः। कथमिति तदुच्यते। अनेनैवाधोमुखेन देवा अस्मद्भ्रमाय स्वकीयं यज्ञं मिश्रितवन्त इति। ततस्तमधोमुखं निखातं यूपमुत्खाय पुनरूर्ध्वाभिमुखं न्यमिन्वन्निखातवन्तः। ततो यथाशास्त्रमवस्थितेन यूपेन मनुष्याश्च ऋषयश्च देवैरनुष्ठितं यज्ञं प्रज्ञाय स्वर्गं लोकं प्राजानन्। तं यज्ञमनुष्ठाय स्वर्गं गता इत्यर्थः। सोऽयमर्थः शाखान्तरे सङ्गृहीतः। यज्ञेन वै देवाः सुवर्गं लोकमायंस्तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति ते यूपेन योपयित्वा सुवर्गं लोकमायंस्तमृषयो यूपेनैवानु

प्राजानंस्तद्यूपस्य यूपत्वमिति ( तै० स० ६-३-४-७ )। इदानीं यूपखननं विधत्ते। तदिति। निमीयते। निखातव्य इत्यर्थः। तस्य यूपस्य तत्क्षणेनाष्टाश्रित्वं विधीयते। वज्र इति। यूपस्य वज्रांशत्वेन वज्रत्वम्। तच्च शाखान्तरे श्रूयते। इन्द्रो वृत्राय वज्रं प्राहरत स त्रेधा व्यभवत् स्फ्यस्तृतीयं रथस्तृतीयं यूपस्तृतीयमिति ( तै० स० ६-१-३-४ )। लोके वज्रस्याष्टकोणत्वात्तद्रूपस्य यूपस्याप्यष्टाश्रित्वं कुर्यात्। द्विषते भ्रातृव्याय वधं द्वेषं कुर्वतः शत्रोर्वधहेतुं तं वज्रं तं यूपञ्च पुरुषः प्रहरति प्रहारार्थं प्रयुङ्क्ते। अतो वज्रवत्प्रहरण-सामर्थ्याद्यूपस्याष्टाश्रित्वं युक्तम्। यः शत्रुरस्य यजमानस्य स्तृत्यो हिंस्यो भवति। तस्मै स्तर्तवै तस्य शत्रोर्हिंसार्थमिदमष्टाश्रित्वम्। अष्टाश्रित्वसिद्धये यूपस्य वज्रत्वमुक्तम्। तदेव शत्रोरप्रियहेतुत्वेनोपपादयति। वज्र इति। यो यूपोऽस्ति स एव शत्रोर्वधे निमित्तभूते सति स्वयमुद्यतस्तिष्ठत्युद्योगवानवतिष्ठतेऽतो वज्रत्वम्। यस्मादेवं पुराऽऽसीत्तस्मादिदानीमपि यः शत्रुर्यजमानं द्वेष्टि तस्य शत्रोर्विरोधियजमानानां यूपस्य दर्शनेन महदप्रियं भवति। अमुष्य विरोधिनो यूप इति निश्चये सति अप्रियं न तु यूपमात्रदर्शनेन। अथ कामना-विशेषेण यूपस्य प्रकृतिभूता वृक्षविशेषा वक्तव्याः। तत्रादौ खदिरवृक्षं विधत्ते। खादिरमिति। फलद्वयार्थं बिल्ववृक्षं विधत्ते। बैल्वमिति। समां समां तस्मिंस्तस्मिन्संवत्सरे बिल्ववृक्षो गृभीतः फलैर्गृहीतः। तच्च फलग्रहणमदनयोग्यस्यान्नस्य रूपम्। बिल्वफलानि भुञ्जानै-र्भक्ष्यन्ते। मूलमारभ्य शाखाभिरनुक्रमेणोपचितो बिल्ववृक्षस्य चोपचयनं पुष्टेः स्वरूपं तस्मात्फलद्वयं युक्तम्। अध्वर्योर्वेदनं प्रशंसति। पुष्यतीति। लोकप्रसिद्ध्या बिल्वस्य प्रशस्ततां द्रढयति। यदेवेति। अत्र किंपदमध्याहृत्य योजनीयम्। हेऽध्वर्यो किमत्र बैल्वं यूपं कृतवानसि तत्सम्यग्भवता कृतम्। बिल्ववृक्षस्वरूपं वृक्षमध्ये श्रीवृक्षनामकत्वेन लक्ष्मीस्वरूपत्वात्पूज्यत्वेन ज्योतिर्भवति। प्लुतिस्तु प्रशंसाद्योतकध्वन्यभिनयार्था। यदेव यस्मादेव कारणाद्ब्रह्मवादिन एवमाचक्षते तस्माद्बैल्वो यूपोऽतिप्रशस्त इत्यर्थः। एतद्वेदनं प्रशंसति ज्योतिरिति। स्वेषु ज्ञातिषु ज्योतिस्तेजस्वी श्रेष्ठः श्रुतवृत्तसम्पन्नः। पुनः फलद्वयाय वृक्षान्तरं विधत्ते। पालाशमिति। तेजः शरीरकान्तिः। ब्रह्मवर्चसं श्रुताध्ययनसंपत्तिः। पुष्पाणामतिरक्तत्वेन पलाशस्य तेजस्त्वं परब्रह्मत्वश्रवणाद्ब्रह्मवर्च-सत्वम्। तथाच शाखान्तरे श्रूयते। देवा वै ब्रह्मन्नवदन्त तत्पर्ण उपाश्रृणोत्। इति। अध्वर्योरेतद्वेदनं प्रशंसति। तेजस्वीति। बिल्वात्पलाशं प्रशंसति यदेवेति। हेऽअध्वर्यो किं पालाशं यूपं कृतवानसि तत्सम्यक्कृतमिति प्रशंसार्था प्लुतिः। किञ्च पलाशः सर्ववनस्पतीनां कारणभूतस्तस्माद्योनित्वात्पलाशाख्यस्यैव वृक्षस्य सम्बन्धिना पलाशशब्देन सर्ववृक्षाणां पत्र-माचक्षते व्यवहरन्ति अमुष्य न्यग्रोधस्य पलाशं पत्रममुष्य चूतवृक्षस्य पत्रमेवं सर्ववृक्ष-

सङ्गृहार्था वीप्सा। पलाशशब्दः पुंलिङ्गो वृक्षविशेषवाची। नपुंसकलिङ्गः पत्रवाची। पलाशः किंशुकः पर्णः। पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्। इत्यभिधानकारैरुक्तत्वात्। यस्मात्प्लुतिप्रयोगो यस्माच्च सर्ववृक्षयोनित्वं तस्मात्पलाशवृक्षः प्रशस्त इत्यर्थः। वेदनं प्रशंसति। सर्वेषामिति ( ६·१ )

ऐतरेयब्राह्मणभाष्ये षष्ठाध्याये प्रथमः खण्डः

॥ ७ ॥

६·८

अध्रिगुप्रैषं समाप्य पुरोडाशं विधातुं बहुभिः पर्यायैरुपेता काचिदाख्यायिकोच्यते। तत्र प्रथमं पर्यायं दर्शयति। पुरुषमिति। पुर कदाचिद्देवाः स्वकीये यज्ञे पुरुषं मनुष्यं पशुमालभन्त पशुं कृत्वा तेन पशुना यष्टुमुद्युक्ताः। तस्मादालब्धाद्यष्टुमुद्युक्तान्मनुष्यपशोर्मेधो मेध्यो यज्ञयोग्यो हविर्भाग उदक्रामन्मनुष्यं परित्यज्यान्यत्रागच्छत्। गत्वा च स भागोऽश्वं प्राविशत्। यस्मादेवं तस्मादश्वो यज्ञयोग्योऽभवत्। अथ तदानीमुत्क्रान्तमेधं परित्यक्तहविर्भागमेनं मनुष्यं देवा अत्यार्जन्त। अतिशयेन वर्जितवन्तः। तस्मिन्पशुत्वमाप नाकुर्वन्। देवैः स्वीकृत्य परित्यक्तः स मनुष्यः किम्पुरुषः किन्नरावान्तरजातीयः। द्वितीयं पर्यायं दर्शयति। तेऽश्वमिति। आलब्धादश्वान्मेधो यज्ञयोग्यभाग उत्क्रम्य गां प्राविशत्। स गौर्यज्ञयोग्य आसीत्। तदानीमयोग्यत्वेन त्यक्तः सोऽश्वो गौरमृगोऽभवद्यस्य शृङ्गे अपि लोमशे भवतः। तृतीयं पर्यायं दर्शयति। ते गामिति। अजादयः प्रसिद्धाः। उष्ट्रो दीर्घग्रीवः। अजं पुनरपि प्रशंसति। सोऽज इति। स मेधाख्यो यज्ञयोग्यभागस्तस्मिन्नजे ज्योक्तमामिवातिशयेन चिरकालमेवारमत क्रीडितवांस्तस्माच्चिरकालमेव सद्भावाद्योऽयमजोऽस्ति स एष एतेषां पूर्वोक्तानां पशूनां मध्ये प्रयुक्ततमः शिष्टैरतिशयेन प्रयुक्तः। पञ्चमं पर्यायं दर्शयति। तेऽजमिति। इमां पृथिवीम्। शरभोऽष्टाभिः पादैरुपेतः सिंहघाती मृगविशेषः। अत्र प्रसङ्गात्कञ्चिद्धर्मविशेषं दर्शयति। त एत इति। मनुष्याश्वगोऽव्यजेभ्यो मेधस्योत्क्रमणेन निष्पन्नास्त एते किंपुरुषादयो मेधराहित्यादयज्ञयोग्याः पशवो नासन्। अत एतेषां पशूनां सम्बन्धि मांसं नाश्नीयात्। अथ पुरोडाशं विधत्ते। तमिति। तं मेधाख्यं हविर्भागमस्यां पृथिव्यां प्रविष्टं ग्रहीतुं देवा अन्वगच्छन्। स च मेधो देवैरनुगत उत्क्रान्तुमशक्तः सन्सहसा व्रीहिरभवत्। तथा सति यदि पशौ पुरोडाशमनुनिर्वपन्ति। पश्वालम्भनानन्तरमेव निर्वपेयुस्तदानीं नोऽस्माकं समेधेन यज्ञयोग्यहविर्भागयुक्तेन पशुनेष्टमसदिष्टं भवति। पुरोडाशनिर्वापकर्तॄणां कोऽभिप्राय

इति सोऽभिधीयते। नोऽस्माकं केवलेन साधनान्तरनिरपेक्षेण मेधपूर्णेन पशुनेष्टमस्त्विति तदभिप्रायः। वेदनं प्रशंसति। समेधेनेति। समेधेनेत्यस्यैव वाक्यस्य व्याख्यानं केवलेनेत्यादि। तदेतत्सर्वं श्रुत्यन्तरसङ्गृहीतम्। पशुमालभ्य पुरोडाशं निर्वपति समेधमेवैनमालभत इति।

अत्र मीमांसा। उपकारी संस्कृतिर्वा पुरोडाशः पशूदितः। तद्धितोक्त्या द्वयोर्देवभेदादुपकृतिर्मता॥ सन्दंशान्निश्चितेऽङ्गत्वे दृष्टोऽर्थः स्मृतिसंस्कृतिः। देवान्तरं चेद्विकृतावग्नीषोमनिवर्तनम्॥ ( जै० न्या० वि० १०-१-६ )। ज्योतिष्टोमाङ्गभूताग्नीषोमीयपशौ श्रूयते। अग्नीषोमीयस्य वपां प्रचर्याग्नीषोमी यमेकादशकपालं निर्वपति। इति। तत्र पशावुक्तः पुरोडाशः स किं पशोरारादुपकारक उत पशुदेवतासंस्कारक इति सन्देहः। तत्राग्नीषोमीयं पशुमालभेतेति पशुविधौ तद्धितोक्त्याऽग्नीषोमदेवता यथा गुणत्वेन पशौ विधीयते तथा पुरोडाशेऽपि। तथा सति विधिभेदेन विधेयभेदात्संस्कारो न युक्तः। गुणत्वं च संस्कार्यविरोधीति पूर्वोक्तम्। तस्मात्पशोरारादुपकारक इति प्राप्ते ब्रूमः। देवताभेदवादिना तावदिदं वक्तव्यम्। पशुः पुरोडाशश्च किं स्वतन्त्रौ यागौ किंवाऽङ्गाङ्गिरूपौ। तत्रापि किमङ्गं किमङ्गीति। तत्र पशुधर्मैरुभयतः सन्दष्टस्य स्वतन्त्राङ्गित्वे तयोः पशुप्रकरणपाठबाध्यत्वादभिमतमुपकारकत्वं न सिद्ध्येत्। अङ्गत्वेऽपि दृष्टसम्भवाददृष्टकल्पनमन्याय्यम्। भवति चात्र दृष्टं पुरोडाशवाक्येन तद्धितान्तपदेन पशुवाक्यगताया देवताया अनुवादे सति तदीयस्मरणपूर्वकनिर्वापे पशुदेवतायाः संस्क्रियमाणत्वम्। एवं च सति पशुवाक्ये गुणत्वेन प्रतीतायाः पुरोडाशवाक्ये प्राधान्यावगमात्संस्कार्यत्वमविरुद्धम्। तस्मात्पशुदेवतासंस्कारः पुरोडाशः। एवञ्च सत्यग्नीषोमीयपशुविकृतौ वायव्यपशौ अग्नीषोमीयदेवतायां निवृत्तायां तदीयपशुपुरोडाशेऽपि सा निवर्तत इति बाधः फलिष्यति॥ द्वादशाध्यायस्य प्रथमपादे चिन्तितम्। पश्वर्थानुष्ठितैर्नास्ति पुरोडाश उपक्रिया। अस्ति वा विध्यभावान्नो ह्यर्थतस्त्वस्तु लोकवत्॥ (जै० न्या० वि० १२-१-१)। अग्नीषोमीये पशौ यानि चोदकप्राप्तानि प्रयाजादीन्यङ्गानि अनुष्ठितानि तैः पशुपुरोडाश उपकारो नास्ति। कुतः। तदुपकारबोधकस्य विधेरभावात्। चोदकस्तु दर्शपूर्णमासवत्पशुरनुष्ठेय इत्येवंरूपत्वात्पशावेवोपकारं बोधयति। ननु पुरोडाशस्यापि इष्टिविकृतित्वात्तत्रापि चोदकोऽस्तीति चेत्। बाढम्। अत एव भिन्नचोदकबलात्पुरोडाशोपकाराय प्रयाजाद्यङ्गानि पृथगनुष्ठेयानि। इति प्राप्ते ब्रूमः। यद्यपि पश्वर्थैः पुरोडाशस्योपकार इत्येतादृशं शास्त्रं नास्ति तथाप्ययमुपकारोऽर्थप्राप्तो न निवारयितुं शक्यते। यथा प्रदीपस्य वेदिकार्ये निर्मितस्यार्थसिद्धं मार्गप्रकाशकत्वमनिवार्यं तथा पशुतन्त्रमध्येऽनुष्ठीयमानस्य पुरोडाशस्य पश्वर्थैरुपकारः केन वार्येत। तस्मादन्यार्थैरप्यस्तूपकारः॥६-८॥

॥ ८ ॥

७·१

यूपोऽथ यूपाञ्जनमाप्रियश्च पर्यग्न्युपप्रैषमथाग्निगुश्च । पशौ पुरोडाशविधिर्मनोता वनस्पतिस्स्विष्टकृदिडास्तुतिश्च ॥ अथ सप्तमाध्याये पशुप्रैषप्रातरनुवाकौ वक्तव्यौ तत्र पर्यग्निकरणस्तुत्यर्थामाख्यायिकामाह । देवा वा इति । पुरा कदाचिद्देवा यज्ञमतन्वत विस्तारितवन्तः । यद्यपि पूर्वमीमांसाकर्तृभिर्नवमाध्याये देवानामशरीरत्वात्कर्माधिकारो नास्ति इत्युक्तं तथापि प्रशंसार्थत्वेन स्वार्थतात्पर्याभावादविरोधः । यद्वोत्तरमीमांसाकर्तृभिः शरीरमङ्गीकृत्य विद्याधिकारोपपादनादितरेषां शरीरराहित्यमृत्विगादिवत्कर्मकाले प्रत्यक्षशरीरं नास्तीत्येतदभिप्रायम् । कर्माधिकारनिराकरणं च कर्मसाध्यस्य स्वर्गस्य प्राप्तत्वात्तत्प्रयोजनाभावाभिप्रायम् । जगदनुग्रहार्थं तु तेषां शरीरिणामस्त्येवाधिकार इत्यभिप्रेत्य यज्ञमतन्वतेत्यत्रोच्यते । तान्देवान्यज्ञविस्तारिणोऽभिलक्ष्यासुरा आगच्छन् । केनाभिप्रायेणेति तदुच्यते । एषां देवानां यज्ञवेशसं यज्ञविघातं करिष्याम इति तदभिप्रायः । कदा कुत्र समागता इति तदुच्यते । पशावाप्रीते प्रयाजैस्तर्पिते सति पर्यग्नेः पुर इव पर्यग्निकरणात्पूर्वस्मिन्काले यूपं प्रति पुरस्तात्पूर्वदेशे तान्देवानसुरा उपागच्छन् । ते देवास्तदागमनं निश्चित्याग्निमयीः पुरोऽग्निप्राकारास्त्रिपुरं वेष्टनत्रयं यथा भवति तथा पर्यास्यन्त पशोः पुरतः प्रक्षिप्तवन्तः । तच्च प्रक्षेपणं यज्ञस्य देवानां स्वरूपस्य च रक्षणाय भवति । एषां देवानां सम्बन्धिन्यस्ताः पुरः पशोः परितो ज्वलन्त्योऽन्धकारं निवर्त्य तं देशं प्रकाशयन्त्योऽतिष्ठन् । ता अग्निमयीः पुरोऽनपक्ष्यैव तिरस्कारमकृत्वैवापाद्रवन् अपगताः । तत्र देवास्तेन च प्राकारेणाग्निना पूर्वस्यां दिश्यसुरान्रक्षांसि च हतवन्तः पश्चादप्यग्निनैव हतवन्तः । अथ पर्यग्निकरणं विधत्ते । तथैवेति । यथा देवैरग्निप्राकाराः कृतास्तथैवैतद्यजमानानां पर्यग्निकरणम् । अतो यदि तत्कुर्युस्तदानीमग्निप्राकारवेष्टनं पशोः परितः प्रक्षिपन्ति । तच्च यज्ञस्य चात्मनश्च रक्षणाय भवति । तस्मादवश्यं पर्यग्निकरणमपेक्षितं तदर्थमनुवचनं चापेक्षितम् । तच्च पर्यग्निकरणमापस्तम्बो विस्पष्टयति । आहवनीयादुल्मुकमादायाग्नीध्रः परिवाजपतिः कविरिति त्रिः प्रदक्षिणं पर्यग्नि करोति पशुम् । ( आप० श्रौ० ७-१५-२ ) इति । अनुवचनं पूर्वमेवाग्निर्होता न इत्यादिना दर्शितम् । पर्यग्निकरणादूर्ध्वं पशोः शामित्रदेशं प्रत्यानयनं विधत्ते । तं वा इति । प्रयाजैस्तोषितं पर्यग्निकरणेन रक्षितपशुमुदङ्मुखं कृत्वा नयेयुः । नीयमानस्य पशोः पुरतो नेतव्यं विधत्ते । तस्येति । तदेतदुभयमापस्तम्बेन स्पष्टीकृतम् । ( आप० श्रौ० ७-१५-८ ) आहवनीयादुल्मुकमादायाग्नीध्रः पूर्वः प्रतिपद्यते शमिता पशुं नयति उरोरन्तरि-

चोल्मुन्तरा चात्वालोत्करावुदञ्चं पशुं नयन्ति। पशोः पुरतो वह्निनयनं प्रशंसति। यजमान इति। यः पशुरस्त्येष निदानेन सूक्ष्मदृष्टिनिरूपणेन यजमान एव भवति। पशुना स्वात्मनो निष्क्रीतत्वात्पशोर्यजमानत्वम्। पशोः पुरतो नीयमानज्योतिषा यजमानः पुरोवर्तिदीपयुक्तो भूत्वा स्वर्गं लोकं प्रयास्यति। यथा राजामात्यादिः पर्यटने रात्रौ पुरोवर्तिदीपयुक्तो गच्छति तद्वदित्य-भिप्रेत्योल्मुकं पुरस्तान्नयन्ति। तदभिप्रायानुसारेणैव यजमानोऽपि तथा स्वर्गं लोकं प्राप्नोति। तदेतदग्नेः पुरतो नयनं शाखान्तरेऽप्याम्नातम्। यर्हि पशुमाप्रीतमुदञ्चं पशुं नयन्ति तर्हि तस्य पशुश्रपणमाहरेत्तेनैवैनं भागिनं करोति। इति। शामित्रदेशं नीतस्य पशो-र्हननस्थले बर्हिष्प्रक्षेपं विधत्ते। तं यत्रेति। तं पशुं यस्मिन्देशे हनिष्याम इत्येवं मन्यते तस्मिन्देशेऽध्वर्युर्भूमौ बर्हिः प्रक्षिपेत्। तदेतच्छाखान्तरे समन्त्रकमाम्नातम्। पृथिव्याः सम्पृचः पाहीति बर्हिरुपास्यत्यस्कन्दायास्कन्नं हि तद्यद्बर्हिषि स्कन्दत्यथो बर्हिषदमेवैनं करोति ( तै० स० ६-३-८-२ ) इति। तदेतदापस्तम्बेन स्पष्टीकृतम्। अथ पर्यग्निकृते देश उल्मुकं निदधाति स शामित्रस्तं दक्षिणेन प्रत्यञ्चं पशुमवस्थाप्य पृथिव्याः सम्पृचः पाहीति तस्याधस्ताद्बर्हिरुपास्यत्युपाकरणयोरन्यतरत्तस्मिन्संज्ञपयन्ति प्रत्यक्शिरसमुदीचीनपादम् ( आप० श्रौ० ७-१६ )। इति। पशोरधो बर्हिष्प्रक्षेपं प्रशंसति। यदेवैनमिति। प्रयाजैस्तोषितं पर्यग्निकरणेन रक्षितं पशुं सौमिकवेदेर्बहिर्भागे संज्ञपनाय नयन्तीत्यदो यदस्ति तदानीमेनं पशुं बर्हिषदमेव दर्भेऽवस्थितमेव कुर्वन्ति। यद्वा बर्हिषदं यज्ञेऽवस्थितं वेद्यामवस्थितं कुर्वन्ति बाह्यदेशे नयनदोषं परिहरन्तीत्यर्थः। पशोः पुरीषस्थापनार्थमवटखननं विधत्ते। तस्येति। ऊवध्यं पुरीषं तस्य गोहं गोपनस्थानं तत्कुर्युः। अस्य खननस्य काल आपस्तम्बेन दर्शितः। ऊवध्यगोहं पार्थिवं खनतादित्य-भिज्ञायोवध्यगोहं खनति (आप० श्रौ० ७-१६)। इति। होता त्वध्रिगुप्रैषमन्ते यदोवध्यगोहमिति वाक्यं पठति तदा खनेत् इत्यर्थः। तदेतदूवध्यगोहखननं प्रशंसति। ओषधमिति। तदे-तदर्थवादवाक्यं पूर्वाध्यायमन्त्रप्रसङ्गे व्याख्यातम्। अथ पशुपुरोडाशं प्रशंसितुं प्रश्न-मुत्थापयति तदाहुरिति। तत्तत्र पशौ चोद्यवादिन आहुः। यद्यदा यः पशुरस्त्येष सर्वोऽपि हविरेव कृत्स्नस्य पशोरुपाकृतत्वात्। अथ तदानीं कस्याप्यवयवस्यापनयो न युक्तः। इह तु बह्ववयवजातमपैति। तद्यथा लोमानि रोमाणि त्वक् चर्मासृग्रक्तं कुष्ठिका उदर-वर्तिनो भक्षितास्तृणादयः शफाः खुरा विषाणे शृङ्गद्वयमेतत्सर्वमपैत्यग्नौ होमाभावात्। किञ्च पिशितं मांसं यत्किंचित्स्कन्दति भूमौ पतति तदप्यपैति। एवं सति केन प्रकारेणास्य पशोः सम्बन्धि तत्सर्वमवयवजातं समन्तात्पूर्यत इति प्रश्नः। तस्योत्तरमाह। यदेवैतदिति। पश्वालम्भनमनुसृत्य पुरोडाशं निर्वपन्तीति यदिदमस्ति तेनैवास्य पशोः सम्बन्धि तत्सर्वमव-

यवजातं पूरितं भवति । तदेतदुपपादयति । पशुभ्य इति । मनुष्याश्वादिभ्यः सकाशान्मेधा यज्ञयोग्या भागा उदक्रामन् । तदेतत्पुरुषं वै देवा इत्यस्मिन् खण्डे प्रपञ्चितम् । उत्क्रान्तमेधा भूमौ प्रविश्य व्रीहिर्यवश्चे ति यौ धान्यविशेषौ विद्येते तावुभौ भूतौ तद्रूपतां प्राप्तावजायेतां भूमेः सकाशादुत्पन्नौ । तद्गतपशावित्र्यादिकं तस्मिन्नेव खण्डे व्याख्यातम् । तद्वेदनं प्रशंसति । समेधेनेति । एतदपि तत्रैव व्याख्यातम् । पुनरप्यत्रोक्तिर्यवप्रशंसार्था । पूर्वत्र व्रीहिमात्रे प्राशस्त्यम् । इह तु व्रीहियवावुभावपि प्रशस्येते इति विशेषः । अत्र यदेष हविरेव यत्पशुरित्युक्तं तत्र कश्चिद्विशेषो दशमाध्यायस्य सप्तमपादे चिन्तितः । पशुः कृत्स्नो हविः किं वा प्रत्यङ्गं हविरन्यता । आद्यश्चोदनया मैवमवदानपृथक्त्वतः ॥ ( जै० न्या० वि० १०-७-६ ) इति । अग्नीषोमीयं पशुमालभेतेत्यत्र कृत्स्नस्य पशोरेकहविष्ट्वं युक्तम् । कुतः । अग्नीषोमदेवतां प्रति द्रव्यत्वेन पशोश्चोदितत्वात् । नहि हृदयाद्यङ्गं साक्षात्पशुर्भवति । इति प्राप्ते ब्रूमः । हृदयस्याग्रेऽवद्यति अथ जिह्वाया अवद्यति वक्षसोऽवद्यति दोष्णोरवद्यति पार्श्वयोरवद्यतीत्यादिना हृदयाद्यङ्गानामवदानानि पृथगाम्नायन्ते । अवदानं च हविष्ट्वप्रयोजकः संस्कारः । पुरोडाशादौ होतुमवदीयमानत्वदर्शनात् । हविःशब्दस्तु कर्मव्युत्पत्त्या होमयोग्यं द्रव्यं ब्रूते । पश्वाकृतिचोदना तु हृदयाद्यङ्गद्वारेण । तस्मात्प्रत्यङ्गं हविर्भेदः ॥७-१॥

॥ ९ ॥

७-२

अथ स्तोकानुवचनीया विधातुमादौ प्रैषमन्त्रं विधत्ते । तस्येति । तस्य पशोर्वपामुदरगतां वस्त्रसदृशीमुत्खिद्योद्धृत्य होमार्थमाहरन्ति । तां च वपामध्वर्युरभिघारयन्प्रैषमन्त्रं ब्रूयात् । तदेतदापस्तम्बो विशदयति । त्वामु ते दधिरे हव्यवाहमिति स्रुवेण वपामभिजुहोति प्रादुर्भूतेषु स्तोकेषु स्तोकेभ्योऽनुब्रूहीति सम्प्रेष्यति इति ( आप० श्रौ० ७-२० ) । तस्य प्रैषिकस्य तात्पर्यं दर्शयति । तद्यदिति । तत्तस्य वपायां तदानीमेव क्रियायामार्द्रायां श्रप्यमाणायां यदा स्तोका नीरबिन्दवः श्चोतन्ति निर्गत्याधः पतन्ति तदानीं सर्वदेवानां प्रियत्वादिमे स्तोकाः स्वयमनभिप्रीता अस्मासु प्रीतिरहिता देवान्गच्छन्त्वागमिष्यन्ति । तथा सति महदेतदस्माकं भयकारणं तन्मा भूदित्यभिप्रेत्य स्तोकप्रीणनार्थमिदं प्रैषानुवचनम् । अत्र नेदित्ययं शब्दः परिभयार्थः । तत्रानुवचनं विधत्ते । जुषस्वेति ( ऋ० सं० १-१४-१ ) । तस्यानुवचनस्य काल आश्वलायनेन दर्शितः । वपायां श्रप्यमाणायां प्रेषितः स्तोकेभ्योऽन्वाह जुषस्वेत ( आ० श्रौ० ३-४ ) । अत्रानुवचनवक्ता मैत्रावरुणः । तदाह बौधायनः । यदा जानाति स्तोकेभ्योऽनुब्रूहीति तदा मैत्रावरुणः स्तोकीया अन्वाह जुषस्व सप्रथस्तममिति । तस्या ऋचो द्वितीयपादमनुवदति । वचोदेवेति । सर्वस्या ऋचोऽयमर्थः । हेऽग्ने हव्या हवींषि

अस्मदीयानि आसन्यास्ये मुखे जुह्वानः प्रक्षिपन्वचोऽस्मदीयं स्तोत्रं जुषस्व सेवस्व। कीदृशं वचः। सप्रथस्तममतिशयेन प्रथसा विस्तरेण सहितं देवप्सरस्तमं देवानामतिशयेन प्रीणयितृ। अत्रासनीति पदस्याभिप्रायं दर्शयति। अग्नेरिति। तत्तेन मन्त्रपाठेन स्तोकानग्नेरेव मुखे जुहोति। अनुवचनीयामेकामृचं विधाय पुनरप्यनुवचनीयं पञ्चर्चं सूक्तं विधत्ते। इममिति (ऋ० स० ६-२१)। जातवेद इति सम्बोधनं वक्ष्यते। नोऽस्मदीयमिमं यज्ञममृतेषु देवेषु धेहि स्थापय। द्वितीयपादमनूद्य व्याचष्टे। इमेति। जुषस्वेत्यभिधानाद्धविःसेवायाः प्रार्थनम्। तृतीयपाद- मनूद्य व्याचष्टे। स्तोकानामिति। हेऽग्ने मेदसो वपाया ह्रूयमानस्य घृतस्य ये स्तोका बिन्दवः सन्ति तेषां मध्ये स्वादून्बिन्दूनित्यध्याहारः। प्राशानेति वक्ष्यमाणेनान्वयः। अत्र ये स्तोकाः पतन्ति यस्मान्मेदसश्च घृतस्य च सम्बन्धिनो भवन्ति। तस्माद्युक्तोऽयं पादः। चतुर्थं पादमनूद्य व्याचष्टे। होतरिति। हे होतर्होमनिष्पादकाग्ने त्वं प्रथमो मुख्यः सन्निषद्योपविश्य स्तोकान्प्राशान भक्षय। यद्यपि होतृशब्दोऽत्र प्रयुक्तस्तथाप्यग्नेरेव देव- होतृत्वादग्निमेव सम्बोध्य चतुर्थपादो ब्रूते। अस्मिन्सूक्ते द्वितीयस्या ऋचः पूर्वार्द्धमनूद्य व्याचष्टे। घृतवन्त इति (ऋ० स० ६-२१-२)। हे पावक शोधकाग्ने ते त्वदर्थं मेदसो वपायाः सम्बन्धिनो घृतवन्तो घृतसहिताः स्तोका बिन्दवः श्चोतन्ति। अत्र मेदःसम्बन्धे घृतसम्बन्धे च पृथक्प्रसिद्धिं वक्तुं मेदसश्च ह्येव हि घृतस्य चेति हिशब्दद्वयम्। उत्तरार्द्धमनूद्य व्याचष्टे। स्वधर्मैमिति। देववीतये देवानां भक्षणाय नोऽस्माकं स्वधर्मं कुलोचितयागादावनुष्ठानरूपं धर्मं धेहि सम्पादय। कीदृशं धर्मम्। श्रेष्ठमतिप्रशस्तम्। अत एव वार्यं सर्वैर्वरणीयम्। अत्र स्वधर्मं धेहीत्यनेनाशीः प्रतीयते। तृतीयस्या ऋचः पूर्वार्धमनूद्य व्याचष्टे। तुभ्यमिति (ऋ० स० ६-२१-३)। सन्तिर्दानं तामर्हतीति सन्त्यो हे सन्त्य फलप्रदानकुशलाग्ने विप्राय मेधाविने तुभ्यं त्वदर्थं स्तोका बिन्दवो घृतश्चुतो घृतस्राविणो वर्तन्ते। अत्र घृतस्रावित्वप्रसिद्धिं हिशब्देन दर्शयति। उत्तरार्द्धमनूद्य व्याचष्टे। ऋषिरिति। हेऽग्ने ऋषिर्द्रष्टा श्रेष्ठः प्रशस्यतमश्च समिध्यसेऽस्माभिः प्रज्वाल्यसे। अतो यज्ञस्यास्मदीयस्य प्राविता प्रकर्षेण रक्षिता भव। अत्र यज्ञरक्षणवचनेन यज्ञसमृद्धिप्रार्थनम्। चतुर्थ्या ऋचः पूर्वार्द्धमनूद्य व्याचष्टे। तुभ्यमिति (ऋ० स० ६-२१-४)। हेऽध्रिगो धृतरश्मे हे शचीवः शक्तिमन्नग्ने मेदसो वपायाः सम्बन्धिनो घृतस्य स्तोकासो बिन्दवस्तुभ्यं त्वदर्थं श्चोतन्ति क्षरन्ति। अत्रापि हिशब्दद्वयं पूर्ववत्। उत्तरार्धमनूद्य व्याचष्टे। कविशस्त इति। हे अग्ने त्वं कविशस्तो विद्वद्भिर्ऋत्विग्भिः स्तुतः सन्बृहता भानुना महता तेजसा युक्त आगा आगच्छ। हे मेधिर यज्ञयोग्यानि अस्मदीयानि हव्यानि जुषस्व। तदेतद्धविःसेवायाः प्रार्थनम्। पञ्चम्या ऋचश्चतुरोऽपि पादाननुवदति। ओजिष्ठमिति (ऋ० स० ६-२१-५)। हे अग्ने त्वदर्थमोजिष्ठं बलवत्तमं मेदो वपारूपं मध्यतः

पशोर्मध्यभागादुद्धृतमुत्कृष्य सम्पादितं वयं यजमानास्ते तुभ्यं प्रददामहे प्रकर्षेण दद्मः । हे वसो सर्वेषां निवासहेतोऽधित्वचि वपायामधिश्रिताः स्तोका बिन्दवस्ते त्वदर्थं श्चोतन्ति क्षरन्ति । देवशस्तत्तद्देवतुष्ट्यर्थं तान्स्तोकान् प्रति वीहि प्रत्येकं पिब । एतन्मन्त्रतात्पर्यं दर्शयति । अभ्येवेति ।तत्तेन मन्त्रपाठेनैनान्स्तोकानभि वषट्कारमन्त्रं पठति । यथा सोमस्येत्यादिमन्त्र-स्तद्वत् । इदानीं स्तोकान्प्रशंसति । तद्यदिति । तत्तस्यां वपायां यद्यस्मात्कारणात्स्तोकाः श्चोतन्ति ते च स्तोकाः सर्वासां देवतानां प्रिया एव तस्माद्देवतानुग्रहादियं वृष्टिर्लोके स्तोकशः प्रतिबिन्दु विभक्ता सती भूसमीपमागच्छति ॥१७·२२॥

ऐतरेयब्राह्मणभाष्ये सप्तमाध्याये द्वितीयः खण्डः ।

॥ १० ॥

९·१

अपोनप्त्रीयतच्छ्लेष उपांश्वादिग्रहा अपि । सवनीयाः पुरोडाशाः पवमानाय सर्पणम् । इदानीमैन्द्रवायवादीन्द्विदेवत्यान्ग्रहान्विधातुमाख्यायिकामाह । देवा वा इति । पुरा कदा-चिद्देवाः सोमस्याग्रपेये प्रथमपाने निमित्तभूते सति न समपादयन्सम्पादनं सम्पत्तिं न प्राप्ताः किन्त्वहमेव प्रथमः पिबेयमिति सर्वेऽप्यकामयन्त । सर्वे समयबन्धपुरःसरमाजिं धावनावधिं कञ्चिद्वृक्षं पाषाणमन्यद्वा किञ्चिदयाम प्राप्नवाम । स यो यः कश्चिदपि नोऽस्माकं मध्य उज्जेष्यति तस्मिन्धावने उत्कर्षेण जयं प्राप्स्यति स एक एव प्रथमो भूत्वा सोमस्य सोमं पास्यति । ते देवास्तथेत्यङ्गीकृत्याजिं धावनमर्यादामयुः प्राप्तवन्तः । आजिं यतां प्राप्नुवतामभिसृष्टानामभितः प्रवृत्तानां तेषां मध्ये वायुः प्रथमो भूत्वा मुखमवधेः सम्मुखं तं प्रत्यपद्यत । वायोः पृष्ठत इन्द्रस्तस्य पृष्ठतो मित्रावरुणौ तयोः पृष्ठत अश्विनावित्येवंक्रमेण सर्वे धावनं प्रारब्धवन्तः । तस्मिन्धावने वायोरिन्द्रस्य च परस्परं संवादं दर्शयति । सोऽवेदिति । अयं वायुरुत्कर्षेण जयत्येवेति स इन्द्रोऽवेत्स्वमनसि ज्ञातवाञ्ज्ञात्वा च तं वायुमनु पृष्ठतः परापतत्सहसैवाधावत् । आगत्य चेदमुक्तवान्हे वायो नावावयोरुभयोः सह सोमपानमस्तु तवार्धं ममार्धम् । अथ तस्मा-त्कारणादावामुभौ सहैवोत्कर्षेण जयं प्राप्नवावेति । स वायुर्नेति निराकृत्याहमेक एवोज्जेष्यामी-त्यब्रवीत् । ततः स इन्द्र एवमुवाच ममार्धं मा भूत् किं तर्हि तृतीयं त्रिषु भागेषु भागोऽस्तु तव द्वौ भागौ । अथैवं सति सहैवावामुज्जयावेति । पुनरपि नेत्येव निराकृत्य स वायुरहमे-वोज्जेष्यामीत्यब्रवीत् । ततः स इन्द्रः पुनरप्युवाच तृतीयो मा भूत्किन्तु मे तुरीयमस्तु चतुर्थभागोऽस्तु तव त्रयो भागा अथैवं सत्यावामुभावुज्जयावेति । ततो वायुरङ्गीकृत्य तमिन्द्रं तुरीये चतुर्थभागेऽत्यार्जतातिशयेन स्थापितवान् । तस्मात्कारणादिन्द्रश्चतुर्थांश-

भागभूत्। वायुरंशत्रयभागवान्। अथ विजयक्रमेण सोमपानक्रमं दर्शयति। तौसहेति। इन्द्रवायू उभौ सहैवोदजयतां धावतामवधिदेशं प्राप्नुताम्। तयोः पृष्ठतो मित्रावरुणौ परस्परं सह प्राप्नुतः। तयोः पृष्ठतोऽश्विनौ सह प्राप्नुतः। एषां देवानां यथोजितं तत्तज्जय-मनतिक्रम्य त एते भक्ताः सोमपानरूपा अभवन्निन्द्रवाय्वोः प्रथमं सोमपानं ततो मित्रावरुणयोः सोमपानं ततोऽश्विनोः सोमपानमित्येवं द्विदेवत्यग्रहाणां क्रमो व्यवस्थितः। इदानीमैन्द्रवायवग्रहं विधत्ते। स एष इति। सोऽयमिन्द्रवायुदेवताको ग्रहः स एष इन्द्रतुरीय इन्द्रस्य तुरीयभागो यस्मिन्ग्रहे सोऽयमिन्द्रतुरीयस्तादृशं ग्रहं गृह्णीयात्। उक्तभागविशेषं मन्त्रसंवादेन द्रढयति। तदेतदिति। तदेतच्चतुर्थभागत्वं दिव्यदृष्ट्या पश्यन्कश्चिन्मन्त्रात्मक ऋषिस्तेन मन्त्रेणाभ्यनूवाच साकल्येन तदुक्तवान्। नियुत्त्वानित्यादिको मन्त्रः। नियुत्वच्छब्दो वायुसम्बन्धिनां मन्त्राणां वाचकः। अथ वायुं नियुतः सश्चत स्वा इत्यादिमन्त्रेष्वभिधानात्। नियुतो यस्य वायोः सन्ति सोऽयं नियुत्त्वान्। इन्द्रः सारथिर्यस्य वायोः सोऽयमिन्द्रसारथिः। अत्र सारथित्वाभिधानादिन्द्रस्य चतुर्थभागप्राप्तिर्दर्शिता। उक्तमर्थं लोकव्यवहारेण द्रढयति। तस्मादिति। यस्मात्सारथिरूपस्येन्द्रस्य चतुर्थभागः पूर्वं प्रत्तस्तस्माद्ध तत एव कारणादेत-र्ह्यपीदानीमपि भरता भरः सङ्ग्रामस्तं तन्वन्ति विस्तारयन्तीति भरता योद्धारः सत्वनां सारथीनां वित्तिं वेतनां जीविकारूपां प्रयन्ति प्रकर्षेण सम्पादयन्ति। ते च सङ्ग्रहीतारः सारथयस्तुरीये हैव युद्धलब्धस्य द्रव्यस्य चतुर्थभाग एव वदन्तेऽस्माकमेतावदुचितमिति कथयन्ति। तदौचित्ये युक्तिमाह। अमुनैव पूर्वोक्तेनैवानूकाशेन दृष्टान्तेन। स एष दृष्टान्तो यदद इत्यादिना स्पष्टीक्रियते। यस्मात्कारणादिन्द्रो वायोः सारथिरिव भूत्वाऽदश्चतुर्थांशरूपं सोमात्मकं धनमुदजयत्तस्माल्लोकेऽपि तथैव प्रवृत्तमित्यर्थः ॥ ६.१ ॥

ऐतरेयब्राह्मणभाष्ये नवमाध्याये प्रथमः खण्डः।

॥ ११ ॥

९.७

अथ तूष्णींशंसविधानार्थमितिहासमाह। देवावा इति। देवाः पुरा स्वकीये यज्ञे यदेवाङ्गमन्वतिष्ठन्नसुरा अप्यवेक्ष्य तदेवान्वतिष्ठन्। तदा ते देवाश्च असुराश्च परस्परं समावद्वीर्यास्तुल्यसामर्थ्या एवाभवन्नैकस्य वर्गस्य सामर्थ्याधिक्यमितरस्य तु न्यूनत्वमित्येवं व्यावृत्तिं न प्राप्ताः। ततो देवाः सामर्थ्याधिक्यलक्षणव्यावृत्तिहेतुं वेदेष्वन्विच्छन्त एतं वक्ष्य-माणं तूष्णींशंसं तदुपायत्वेन दृष्टवन्तः। सर्वेष्वपि शस्त्रेष्वृचः पठ्यन्ते। अस्मिंस्तु न पठ्यन्त इति तूष्णींशंसत्वम्। ऋक्पाठराहित्येन गूढमेषां देवानां तं तूष्णींशंसमसुरा नान्ववायन्नानु-

गतवन्तः। एतदनुष्ठानमविज्ञाय न कृतवन्त इत्यर्थः। योऽयं तूष्णींशंस एष तूष्णींसारो वा ऋक्पाठराहित्यलक्षणात्तूष्णींभाव एवास्मिञ्छस्त्रे शस्तः। असुराणां तु निष्फलमेव तूष्णीमवस्थानमिति निश्चयः। अस्य तूष्णींशंसस्य असुरविनाशहेतुत्वं दर्शयति। देवावा इति। देवा असुरविनाशार्थमायुधरूपं मन्त्ररूपमभिचाररूपं वा यं यं वज्रं प्रयुक्तवन्त एषां देवानां तं तं वज्रमसुराः प्रत्यबुध्य तदा तदा प्रतीकारं कुर्वन्ति। ततो देवा एतं तूष्णींशंसं वज्रत्वेन दृष्ट्वा तदसुरविनाशार्थं प्रयुक्तवन्तः। असुरास्तु देवानां तं तूष्णींशंसमज्ञात्वा प्रतीकारं न कृतवन्तः। ततो निर्विघ्नेन देवास्तं तूष्णींशंसमसुराणामुपरि प्राहरंस्तद्विनाशार्थं प्रयुक्तवन्तः। असुरैरविज्ञातेन तेनैवासुरान्हतवन्तः। ततो वै देवा विजयिनोऽभवन्मुख्येष्वसुरेषु हतेष्ववशिष्टा असुराः पराभूताः। एतद्वेदनं प्रशंसति। भवतीति। अथोपाख्यानमुखेनैव तूष्णींशंसस्य स्वरूपं दर्शयति। ते वा इति। मुख्यानामसुराणां हतत्वात्ते देवा विजितिनो विजयवन्तो वयमिति मन्यमाना यज्ञं विस्तारितवन्तः। एषां देवानां यज्ञमभिलक्ष्यासुरास्तत्र गताः। केनाभिप्रायेणेति तदुच्यते। एषां देवानां यज्ञवेशसं यज्ञविघातं करिष्याम इति तदभिप्रायः। ततो देवाः समन्तमेव पुरतः पृष्ठतः पार्श्वयोश्च समागतानुदारानुद्धतान्परियत्तानत्यन्तसन्निधावुदपश्यन्नुदङ्मुखाः सन्तो दृष्टवन्तः। दृष्ट्वा च परस्परमिदमब्रुवन्निमं यज्ञं संस्थापयामः। शीघ्रं समापयामः। तथा सति नोऽस्मदीयं यज्ञमसुरा मा वधिषुर्मा विनाशयन्तु विलम्बे सति विनाशयिष्यन्ति तन्मा भूदिति। तद्वचनं परस्परमङ्गीकृत्य स्वकीयं तं यज्ञं तूष्णींशंसे संस्थापयञ्छीघ्रं समापितवन्तः। यद्वा तूष्णींशंसस्य वज्ररूपेण रक्षकत्वाद्रक्षार्थं तस्मिन्स्थापितवन्तः। कोऽयं तूष्णींशंस इति तदुच्यते। भूरग्निर्ज्योतिर्ज्योतिरग्निरिति एष नवाक्षरात्मको मन्त्र एकस्तूष्णींशंसभागः। आज्यं प्रउगं चेत्युभे प्रातःसवनकालीने शस्त्रे तदुभयमप्युक्ते तूष्णींशंसभागे स्थापितवन्तः। इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्र इत्येष दशाक्षरात्मको मन्त्रो द्वितीयस्तूष्णींशंसभागः। निष्केवल्यं मरुत्वतीयं चेत्युभे माध्यन्दिनसवनकालीने शस्त्रे। तदुभयमिन्द्रो ज्योतिरित्यस्मिंस्तूष्णींशंसभागे स्थापितवन्तः। सूर्यो ज्योतिर्ज्योतिः स्वः सूर्य इत्येष नवाक्षरात्मको मन्त्रस्तृतीयस्तूष्णींशंसभागः। वैश्वदेवमाग्निमारुतं चेत्युभे तृतीयसवनकालीने शस्त्रे तदुभयं सूर्यो ज्योतिरित्यादिके तूष्णींशंसभागे स्थापितवन्तः। तं सवनत्रयगतैः षड्भिः शस्त्रैरुपेतं यज्ञमेवमुक्तेन प्रकारेण तूष्णींशंसे स्थापितवन्त इत्येवमुक्तार्थस्योपसंहारः। पुनस्तमेवेत्यादिरुक्तार्थानुवादः। षड्विधशस्त्रस्थापनादूर्ध्वमरिष्टेन हिंसारहितेन तेन यज्ञेनोदचमुत्तमामृचं यज्ञसमाप्तिमाश्नुवत प्राप्तवन्तः। इत्थमाख्यायिकामुखेन तूष्णींशंसस्वरूपमभिधाय तदनुष्ठानं विधत्ते। सयदेति। यस्मिन्काले होता तमिमं शंसेत्तदैव स यज्ञो निर्विघ्नः समाप्यते। तस्माद्धोता तच्छस्त्रं शंसनीयम्। तत्प्रकार

आश्वलायनेन दर्शितः। सुमत्पद्वग्दे पिता मातरिश्वाऽच्छिद्रा पदाधादच्छिद्रोक्था कवयः शंसन्सोमो विश्वविन्नीथा निनेषद्बृहस्पतिरुक्था मदानि शंसिषद्वागायुर्विश्वायुः क इदं शंसिष्यति स इदं शंसिष्यतीति जपित्वाऽनभिहिंकृत्य शोंसावो ३ मित्युच्चैराहूय तूष्णींशंसं शंसेत् उपांशु सप्रणवमसन्तन्वन्नेष आहावः प्रातःसवने शस्त्रादिषु। (आ० श्रौ० ५-६) इति। अस्यायमर्थः। ऋतुपात्रभक्षणानन्तरं होतुर्मुखत आसीनोऽध्वर्युः पराङ्मुखः सन्नावर्तते तदानीं होता सुमदित्यादि स इदं शंसिष्यतीत्यन्तं मन्त्रं जपित्वाऽभिहिंकारमकृत्वा शोंसावोमित्यनेन मन्त्रेणाध्वर्युमुच्चैराहूय भूरग्निरित्यादिकं प्रणवसहितमुपांशु पठेत्प्रणवेन सहासन्ततमविच्छेदनं कुर्वन्। एष शोंसावोमिति मन्त्रोऽध्वर्योराह्वानरूपत्वादाहाव इत्युच्यते। स च प्रातःसवने शस्त्रादिषु प्रवर्तते इति। उक्तं तूष्णींशंसनं प्रशंसति। स य इति। होत्रा तूष्णींशंसे शस्ते सत्येनं होतारं स उपवदेद्वाऽनुव्याहरेद्वा यः कोऽप्यन्यः पुरुषो निन्देच्छपेद्वा। उपवादो निन्दाऽनुव्याहारः शापः। तदानीमयं होता निन्दितारं शप्तारं वा ब्रूयात्। कथं ब्रूयादिति तदुच्यते। यो निन्दिता शप्ता वाऽस्त्येष एव निन्दारूपां शापरूपां वार्तिं विनाशमारिष्यति प्राप्स्यति नत्वहं प्राप्स्यामि। तत्र हेतुरुच्यते प्रातर्वाव प्रातःसवन एव वयं होतारोऽद्यास्मिन्दिवसेऽस्माभिः शस्ते तूष्णींशंसे तमिमं यज्ञं संस्थापयामः समापयामो यथा लोके गृहानितं स्वकीयान्गृहान्प्राप्तमतिथिं कर्मणाऽऽतिथ्यसत्काररूपेणानुसमियादानुकूल्येन सम्यक् प्राप्नुयादुपचरेदित्यर्थः। एवमेवमपीदं तूष्णींशंसानुष्ठानं कुर्वन्तं यज्ञमनुसमिम आनुकूल्येन सम्यक्प्राप्नुम उपचराम इत्यर्थः। एष एवेत्यादिकोऽनुसमिम इत्यन्ता निन्दाशापपरिहारार्थो मन्त्रः। तं होता ब्रूयात्। यस्मिन्नुक्ते सति यः पुमान्स्वयं विद्वानेव संस्तूष्णींशंसस्य शंसनादूर्ध्वं निन्दति शपति वा स एव तामार्तिं प्राप्नोति। तस्मात्कारणादेवमुक्तार्थं विद्वान्पुरुषस्तूष्णींशंसपाठादूर्ध्वं न निन्देन्नापि शपेत्॥ ६.७

ऐतरेयब्राह्मणभाष्ये नवमाध्याये सप्तमः खण्डः।

॥ १२ ॥

१०.५

अथाज्यशस्त्रस्य बहिष्पवमानस्तोत्रोत्तरत्वं प्रउगशस्त्रस्य आज्यस्तोत्रोत्तरत्वं विधत्ते। देवरथ इति। यो यज्ञोऽस्ति एष देवानां रथ एव तस्य रथरूपस्य यज्ञस्याज्यं प्रउगं च यच्छस्त्रद्वयं तदन्तरौ रश्मी अश्वबन्धनरज्जू। रथस्योपर्यवस्थितेन सारथिना ध्रियमाणत्वात्तयोरभ्यन्तरत्वम्। यस्मादेवं तस्मात्तथाज्यशस्त्रेण बहिष्पवमानमनु पश्चाच्छंसेत्प्रउगशस्त्रेण चाज्यस्तोत्रमनुशंसेत्तदानीं देवरथस्यैव सम्बन्धिनावभ्यन्तरौ रश्मी प्रग्रहौ विहरति विशेषेण

सम्पादयति। तच्चालोभाय व्यामोहराहित्याय सम्पद्यते। रश्मिराहित्ये दुष्टाभ्यामश्वाभ्यां यत्र क्वापि दुर्गमे देशे रथनयने सति रथभङ्गरूपो व्यामोहः स्यात्तन्मा भूदिति शस्त्रद्वयं क्रमेण प्रयोक्तव्यम्। लौकिकफलदर्शनेऽत्रैव रश्मिस्थानीयं शस्त्रद्वयं प्रशंसति। तामन्विति। तां कृतिं देवरथे शस्त्रद्वयरूपरश्मिकरणमनु पश्चान्मनुष्यरथस्यैवान्तरौ सारथिना ग्रहणयोग्यौ रश्मी प्रग्रहौ विहरन्ति संपादयन्ति। तच्च मनुष्यरथस्यालोभाय सम्पद्यते। अभग्नो मनुष्य-रथो यजमानस्य सम्भवतीत्यर्थः। वेदनं प्रशंसति। नास्येति। इदानीं स्तोत्रशस्त्रयोर्वैय-धिकरण्यरूपं चोद्यमुद्भावयति। तदाहुरिति। तत्तस्मिन्नाज्यशस्त्रे ब्रह्मवादिन आहुश्चोदयन्ति यथैव स्तोत्रं सामगैरुक्तं तथैव बह्वृचैः शस्त्रं वक्तव्यं स्तुतमनुशंसतीति विधानम्। अत्र तु सामगा उपास्मै गायता नरः पवमानाय (सा० स० उ० १-१-१-२) इत्यादिषु पावमानीषु पवमानदेवताकास्वृक्षु बहिष्पवमानाख्येन स्तोत्रेण स्तुवते। बह्वृचस्तु होता प्र वो देवायाग्नय (ऋ० स० ३-१३-१) इत्यादिकमाज्यशस्त्रं शंसति। तथा सति कथमस्य होतुः पावमान्य ऋचोऽनुशस्ता भवेयुः। नहि पवमानः शस्त्रस्य देवता किन्त्वग्निरिति चोद्यम्। तस्य परिहारमाह। योवा इति। अग्निपवमानदेवतयोः परस्परप्रीत्याऽभेदादाग्नेयमपि सूक्तं पावमानमिति वक्तुं शक्यते तेन पावमान्योऽनुशस्ताः सम्पद्यन्ते। अग्निपवमानयोरेकत्वे कश्चिन्मन्त्रमुदाहरति। तदपीति। ऋषिरतीन्द्रियद्रष्टा। योऽयमग्निः स एव पवमानो वायुः प्रीत्यतिशयेनैकत्व-प्रतिभासात्। यद्वा शोधकत्वादग्निरेव पवमान इति मन्त्रार्थः। परिहारमुपपाद्य निगमयति। एवमिति। अग्निदेवताकाभिः सूक्तगताभिर्ऋग्भिः शस्त्रं प्रारभमाणस्य होतुर्बहिष्पवमानस्तोत्र-गताः पवमानदेवताका ऋचोऽनुशस्ता भवन्ति। देवताप्रयुक्तं वैयधिकरण्यं परिहृत्य छन्दःप्रयुक्तं वैयधिकरण्यरूपं चोद्यं पूर्ववदुद्भावयति। तदाहुरिति। बहिष्पवमानस्तोत्रगता उपास्मै गायता नर (सा० स० उ० १-१-१-२) इत्याद्या ऋचो गायत्रीच्छन्दस्काः प्र वो देवायाग्नय (ऋ० स० ३-१३-१) इत्यादिकमाज्यशस्त्रमनुष्टुप्छन्दस्कमिति वैयधि-करण्यं चोद्यम्। तस्य परिहारमाह। संपदेतीति। अनुष्टुप्सु गायत्रीत्वे सम्पादिते सति तया सम्पदा वैयधिकरण्यपरिहारादनुकूलशंसनं भवतीति परिहारं ब्रूयात्। सम्पादनप्रकारं दर्शयति। सप्तेति। आद्यन्तयोस्त्रिरावृत्तौ सत्यां स्वभावतः सप्तानामनुष्टुभामेकादशत्वं संपद्यते। अग्न इन्द्रश्चेति (ऋ० स० ३-२-४५) याज्या विराट्छन्दस्का। सा द्वादश्यनु-ष्टुबिति गणनीया। यद्यपि तस्या विराजस्त्रयस्त्रिंशदक्षरत्वादेकमक्षरमनुष्टुप्त्वादतिरिच्यते तथाऽप्यल्पेन वैकल्येन छन्दस्त्वं नापैतीति न्यायः पूर्वमप्युदाहृतः। एवं सति द्वादश-स्वनुष्टुप्सु द्वादशपादानपनीयावशिष्टैः पादैस्त्रिपदा गायत्र्यो द्वादश सम्पादनीयाः। अपनी-तैश्च पादैश्चतस्रो गायत्र्य इत्यनेन प्रकारेण षोडशसङ्ख्याका गायत्र्य एव सम्पद्यन्ते।

परिहारं निगमयति। एवमिति। इदानीमैन्द्राग्नग्रहस्य याज्यां विधत्ते। अग्न इति (ऋ० स० ३-२५-४)। नन्वैन्द्राग्नग्रहे पूर्वभावित्वमिन्द्रस्य प्रतीयतेऽग्नेस्तु पश्चाद्भावित्वम्। याज्यायां तु तद्विपर्ययः कस्मात्क्रियत इत्याशङ्क्याह। नवा इति। असुरैः सह देवानां विजययुद्धे सति विजयार्थमिन्द्रस्य पुरोगमनमग्नेः पश्चाद्गमनमित्येवं न सम्पन्नम्। किन्त्वग्निः पुरोगत इन्द्रः पश्चाद्गतः। अतो विजयकालीनकर्मणैवाग्निपूर्वकत्वप्रतिपादिकया यजने सति यजमानस्य विजयाय सम्पद्यत एव। याज्यागतान्यक्षराणि प्रशंसति। सेति। अक्षराणां देवतानां च सङ्ख्यासाम्यम्। उक्थमुखे शस्त्राणां मध्ये मुख्ये प्रथम आज्यशस्त्रे देवताः प्रत्येकमक्षर-भाजः करोति। ततस्तत्तदक्षरमेवानुसृत्य ता देवताः सोमं प्रकर्षेण पिबन्ति। तथा सति स्वयोग्येनाक्षररूपेण देवपात्रेणैव देवतास्तृप्ता भवन्तीति। शस्त्रयाज्ययोर्देवताप्रयुक्तं वैयधिकरण्यचोद्यमुद्भावयति। तदाहुरिति। शस्त्रस्याग्निरेक एव देवता याज्यायास्त्वग्नि-रिन्द्रश्चेति द्वयोर्मिलितयोर्देवत्वमिति वैयधिकरण्यम्। अस्य चोद्यस्य परिहारमाह। या वा इति। येयमाग्नेन्द्री याज्या सेयमैन्द्राग्न्यपि भवति। द्वयोः पौर्वापर्यविसंवादेऽपि तस्या ऋचो द्विदेवत्वसद्भावाद्देवतयोः क्रमविपर्यासमात्रेऽङ्गीकृते सति याज्याया ऐन्द्राग्नत्वमुपचरितं यथा संपद्यते तथैवैतदुक्थमाज्यशस्त्रमपि ग्रहद्वारा तूष्णींशंसद्वारा चैन्द्राग्निदेवतासहितं सम्पद्यते। तथा सत्यैन्द्राग्नत्वस्योपचरितस्य याज्याशस्त्रयोः सद्भावान्नास्ति वैयधिकरण्यम्। आज्यशस्त्रस्य ग्रहद्वारकं तूष्णींशंसद्वारकं चैन्द्राग्नत्वं दर्शयति। इन्द्राग्नी इति (ऋ० स० ३-१२-१)। हे इन्द्राग्नी सुतमभिषुतं सोमं प्रत्यागतमागच्छतम्। कीदृशं सुतम्। गीर्भिः स्तुतिभिर्युक्तमिति शेषः। नभ आकाशस्वरूपम्। आकाशवन्महान्तमित्यर्थः। वरेण्यं वरणीयम्। आगत्य च युवां धियेषिता स्वबुद्ध्या प्रेषितौ सन्तावस्य सोमस्य सारं पातं पिबतम्। इत्यनेनैन्द्राग्नदेवताकमन्त्रेणाध्वर्युरैन्द्राग्नं ग्रहं गृह्णाति। तूष्णींशंसे भूरग्निरित्यग्निराम्नातः। इन्द्रो ज्योतिरितीन्द्रोऽप्याम्नातः। तत उभयसद्भावात्तूष्णींशंसोऽप्यैन्द्राग्नः। ईदृशस्य ग्रहस्य तूष्णींशंसस्य सम्बन्धादाज्यशस्त्रमप्यैन्द्राग्नं भवति। तस्माच्छस्त्रयाज्ययोरैन्द्राग्नत्वसम्पाद-नान्नास्ति वैयधिकरण्यम॥ १०·५॥

ऐतरेयब्राह्मणभाष्ये दशमाध्याये पञ्चमः खण्डः॥

॥ १३ ॥

२२·९

पूर्वोक्ते सूक्तद्वये लिङ्गं दर्शयति। नाभानेदिष्ठमिति। नाभानेदिष्ठाख्यः कश्चिन्महर्षिस्तेन दृष्टं पूर्वोक्तं सूक्तद्वयं नाभानेदिष्ठं तच्छंसेत्। अयं महर्षिसम्बन्ध एवात्र लिङ्गम्।

तदेतत्सूक्तद्वयं प्रशंसितुमुपाख्यानमाह नाभानेदिष्ठमिति। मनोः पुत्रो नाभानेदिष्ठो नाम बालको गुरुगृहे ब्रह्मचर्यं वसत्युपनीतः सन्वेदमध्येतुं तत्र तिष्ठति। तदानीं तस्य ज्येष्ठभ्रातरो मनोः पितुर्धनं स्वार्थं विभजन्तस्तं बालकं निरभजन्भागरहितमकुर्वन्। बालोऽयं ब्रह्मचारी वेदमेवाभ्यस्यतु किं तस्य धनेनेति मत्वा भागं न दत्तवन्तः। तदानीं स नाभानेदिष्ठ एत्य वेदाभ्यासं कृत्वा समागत्य भ्रातॄनिदमब्रवीत्। हे भ्रातरो मह्यं किमभाक्त। किं नाम वस्तु भागत्वेन यूयं पृथक्कृतवन्त इति। ते च भ्रातर एतमेव मनुं पितरं हस्तेन प्रदर्श्य हे नाभानेदिष्ठ वयं नो जानीमस्तमेव पृच्छेत्यब्रुवन्। कीदृशं मनुम्। निष्ठावम्। धनविभागादेर्धर्मरहस्यस्य निःशेषेण स्थितिर्निर्णयो निष्ठा सा यस्मिन्नस्ति स निष्ठावः। तादृशं धर्मरहस्यनिर्णेतारमित्यर्थः। अववदितारम्। ज्येष्ठपुत्रस्यैतावत् द्वितीयस्यैतावत् अन्यस्यैतावदित्यवच्छिद्य वेदितुं समर्थोऽववदिता तादृशम्। अयमर्थः। अयं मनुर्धर्मशास्त्रकर्तृत्वाद्धर्मरहस्यनिर्णयवान्। पितृत्वेन तवैतावदित्यवच्छिद्य वक्तुं समर्थश्च। तस्मान्मदीयो भागः क इति मनुमेव पृच्छेत्यब्रुवन्। यस्मादस्य भ्रातर एवमुक्तवन्तस्मादिदानीमपि पितरं पुत्रा इत्यनेन प्रकारेणाचक्षते। केन प्रकारेण सोऽभिधीयते। अयं पिता निष्ठावो निर्णयवानस्यैतावदित्यवच्छिद्य वदिता चेति। तत ऊर्ध्वं नाभानेदिष्ठस्य कृत्यं दर्शयति। सपितरमिति। स नाभानेदिष्ठो भ्रातृभिस्तथोक्तः सन्पितरं प्रत्यागत्येदमब्रवीत्। हे पितर्मह्यं त्वां ह वाव त्वामेव भ्रातरः सर्वेऽप्यभाक्षुर्भागमकार्षुरतो मदीयो भागस्त्वय्यस्ति तं मे देहीत्यभिप्रायः। ततस्तं नाभानेदिष्ठं पिता मनुरेवमब्रवीत्। हे पुत्रक बालक भ्रातॄणां वचनं नादथा स्तस्मिन्वचन आदरं मा कार्षीः। नास्त्येव मद्धस्ते त्वदीयो भागः। सर्वमपि धनं त्वद्भ्रातृभिर्गृहीतम्। तत्र तु धनप्राप्त्यर्थमेकमुपायं कथयिष्यामि। अङ्गिरोनामका महर्षय इमे समीपदेशवर्तिनः स्वर्गार्थं सत्रमनुतिष्ठन्ति। ते पुनः पुनः सत्रमुपक्रम्य तदा तदा प्राप्तं तत्तत्षष्ठमेवाहरागत्य तत्र मन्त्रबाहुल्ये मुह्यन्ति। भ्रान्ताः सन्तः सत्रसमाप्तिमप्राप्य सर्वदा क्लिश्यन्ति। तान्महर्षीन्षष्ठेऽहनि त्वं गत्वेदमित्थेति (ऋ० स० १०-१६१-१) ये यज्ञेनेति (ऋ० स० १०-६२-१) चैते उभे सूक्ते शंसय। ततस्तेषामृषीणां यत्सहस्रसङ्ख्याकं धनं सत्रपरिवेषणं सत्रार्थं परितः सम्पादितमस्ति तत्सर्वमनुष्ठानादूर्ध्वमवशिष्टं धनं ते तुभ्यमङ्गिरसो महर्षयः स्वर्गं प्राप्नुवन्तो दास्यन्तीति। तथाऽस्त्विति तत् पितृवचनं नाभानेदिष्ठोऽङ्गीचकार। अङ्गीकारादूर्ध्वं किं कृतवानित्याशङ्क्य तद्वृत्तान्तं दर्शयति। तानिति। तानङ्गिरसो महर्षीनुपैत्। नाभानेदिष्ठः समीपं प्राप्तवान् प्राप्यच प्रतिगृभ्णीतेत्यादिमन्त्रपादेनैव महर्षीणामग्रे किञ्चिद्वचनमुक्तवान्। तस्य पादस्यायमर्थः। हे सुमेधसः शोभनमेधायुक्ता अङ्गिरसो मानवं मनोः पुत्रं नाभानेदिष्ठाख्यं मां प्रतिगृभ्णीत यूयं

स्वीकुरुतेति। तथा वदन्तं नाभानेदिष्ठं प्रति मुनय इदमब्रुवन्। हे नाभानेदिष्ठ किंकामः कीदृगपेक्षायुक्तः सन्नस्मान्प्रत्येवं वदसीति। ततः स नाभानेदिष्ठोऽब्रवीत्। हे महर्षयो वो युष्माकमिदमेव षष्ठमहः प्रज्ञापयानि प्रकर्षेण बोधयानि इति। अथ बोधनानन्तरं सत्रपरिवेषणं भवद्भिः सत्रार्थं सम्पादितमनुष्ठानादूर्ध्वमवशिष्टं यदेतत्सहस्रसङ्ख्याकं धनमस्ति तत्सर्वं यूयं मे मह्यं स्वर्गं प्रति गच्छन्तो दत्तेति। तथेति मुनिभिरङ्गीकृते सति तान्मुनीनेते उभे सूक्ते षष्ठेऽहन्यशंसयत्। तत एव ते मुनयो यज्ञं प्रकर्षेणाजानन्ज्ञातवन्तः। तदनुष्ठानेन स्वर्गलोकमपि प्राजानन्। सूक्तद्वयं प्रशस्य तद्विधिं निगमयति। तद्यदिति। यस्मात्सूक्तद्वयशंसनेनाङ्गिरोभिर्यज्ञः स्वर्गश्च प्रज्ञातस्तस्माद्धोता तदुभयं शंसेत्। तच्च यज्ञस्वर्गयोरवगमाय भवति। पुनरपि सूक्तयोर्महिमानं दर्शयितुमुपाख्यानमेवाह। तमिति। तं नाभानेदिष्ठं स्वर्यन्तः स्वर्गं प्राप्नुवन्तोऽङ्गिरसोऽब्रुवन्। हे ब्राह्मण नाभानेदिष्ठैतद्गोसहस्रं यज्ञभूमाववशिष्टं ते तुभ्यं दत्तमिति शेषः। अत्र शाखान्तरानुसारेण गोसहस्रमित्यर्थो लभ्यते। शाखान्तरे चैवमाम्नायते। ते सुवर्गं यन्तो य एषां पशव आसंस्तानस्मा अदुरिति। तद्गोसहस्रं समाकुर्वाणं सम्यगात्मसात्कुर्वन्तमेनं नाभानेदिष्ठं कश्चित्पुरुषो यज्ञभूमेरुत्तरत उपोत्थाय समीप एवोत्थितो भूत्वेदमब्रवीत्। कीदृशः पुरुषः। कृष्णशवासी। अतिशयेन कृष्णं मलिनं वस्त्रं कृष्णशं तद्वस्ते आच्छादयतीति कृष्णशवासी। अत्रायं मलिनवस्त्रः पुरुषः पशुस्वामी रुद्र इत्यवगन्तव्यम्। तथाच शाखान्तरे पठ्यते। तं पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आगच्छत्। इति। स रुद्रः किमब्रवीदिति तदेतदभिधीयते। हे नाभानेदिष्ठेदं पशुसहस्रं ममैव स्वम्। वास्तुहं वास्तौ यज्ञभूमौ हीनं कर्मान्ते परित्यक्तं वास्तुहं तादृशं सर्वं ममैव स्वमिति सर्वत्र सम्प्रतिपन्नमिति। एवं पुरुषेणोक्तः स नाभानेदिष्ठः पुनरेनमब्रवीत्। हे रुद्र मह्यमेवेदं सहस्रमङ्गिरसो दत्तवन्तः। नाभानेदिष्ठं पुनः पुरुषो ऽब्रवीत्। हे नाभानेदिष्ठ तर्हि तस्मिन्नेव त्वदीयं मदीयमिति सन्देहे सति नावावयोरुभयोरपि तवैव पितरि मनौ निर्णयार्थं प्रश्नोऽस्त्विति। ततः स नाभानेदिष्ठः पितरं प्रष्टुमैत्। आगतवान्। स पिता तेन पृष्टस्तमब्रवीत्। हे पुत्रक बालक तुभ्यमङ्गिरसो महर्षयोऽदुर्ननु दत्तवन्तः किम्। प्लुतिः प्रश्नार्था। एवं पित्रा पृष्टः स नाभानेदिष्ठो मे मह्यमदुरेव दत्तवन्त एवेत्यब्रवीत्। तर्हि कस्तत्र विचार इत्याशङ्किते स नाभानेदिष्ठ एवमुवाच। ते महर्षयो दत्तवन्त एव किन्तु तद्गोसहस्रं कश्चित्पुरुषो मलिनवस्त्रः सन्यज्ञभूमेरुत्तरत उत्थायेदं गोसहस्रं ममैव स्वं यज्ञवास्तौ हीनत्वादित्यभिधायादितादानं कृतवान्। अपहृतवानित्यर्थः। तथा ब्रुवन्तं पुत्रं प्रति पिताऽब्रवीत्। हे पुत्रक शिशो तद्यज्ञवास्तौ हीनं गोसहस्रं तस्यैव रुद्रस्य स्वं पशुपतित्वाद्यज्ञावशिष्टस्वामित्वाच्च। किन्तु तथा सत्यपि तव हानिर्नास्ति। स रुद्रस्तद्गोसहस्रं तुभ्यं दास्यतीति। यज्ञ-

काले तत्सर्वमङ्गिरसां धनं भवति समाप्ते तु यज्ञे यदवशिष्टं तस्य रुद्र एव स्वामीति नाङ्गिरसां दातुमधिकारोऽस्तीत्यभिप्रायः। तथा रुद्रवचनं शाखान्तर एवमाम्नायते। न वै तस्य त ईशत इत्यब्रवीत् यज्ञवास्तौ हीयते मम वै तदिति। तत्ते दास्यतीति वचनं श्रुत्वा स नाभानेदिष्ठः पुनरपि रुद्रस्य समीपमेत्येदमब्रवीत्। हे भगवन्पूज्य रुद्र तव ह वाव किल तवैव सर्वमिदं स्वमिति मदीयः पिता प्राहेति। ततः स रुद्रोऽब्रवीत्। हे नाभानेदिष्ठ तत्सर्वं तुभ्यमेव ददामि यस्त्वं सत्यमेवावादीर्न त्वनृतमुक्तवानसि। तस्मात्परितोषात्सत्यवादिने तुभ्यमेव ददामीति। इत्थमुपाख्यानं समाप्य प्रसङ्गात्पुरुषार्थत्वेन सत्यवदनं विधत्ते। तस्मादिति। एवंविदुषा सत्यस्य श्रेयोहेतुत्वं जानता। उपाख्यानस्य सर्वस्य तात्पर्यं दर्शयति। स एष इति। नाभानेदिष्ठेन ऋषिणा दृष्टो यो मन्त्रसमूहः स एष सहस्रसनिः। सहस्रसंख्याकस्य वस्तुनः सनिर्लाभो यस्मिन्मन्त्रे सोऽयं सहस्रसनिः। वेदनं प्रशंसति। उपैनमिति। एवं वेदितारं सहस्रसंख्याकं धनमुपनमति प्राप्नोति। स च कालान्तरे षष्ठमहरनुष्ठाय तेन स्वर्गं लोकं प्रजानाति॥ २२·६॥

ऐतरेयब्राह्मणभाष्ये द्वाविंशाध्याये नवमः खण्डः॥

॥ १४॥

२४·६

चतुर्होतृमन्त्रव्याख्यानार्थमाहावं विधत्ते। अध्वर्यो इति। चतुर्होतृनामकेषु मन्त्रेषूच्चैरुच्चारणं कर्तुमुद्युक्तो होता हे अध्वर्यो इत्याह्वानं कुर्यात्। यथा शस्त्रादौ शोंसावोमित्याह्वानं करोति तद्वदत्रापि सम्बोधनमेवाहावस्य रूपम्। चतुर्होतृव्याख्यानकालेऽध्वर्योः प्रतिगरविशेषं विधत्ते। ओं होतरिति। हे होतरों त्वदभिलषितमस्तु। हे होतस्तथा क्रियतामित्यध्याहारः। अनेन मन्त्रेणाध्वर्युः प्रतिगरं ब्रूयात्। होतुरुत्साहजनकं प्रतिवचनं प्रतिगरः। वक्ष्यमाणेषु होत्रा प्रयोज्येषु दशसंख्याकेषु पदेषु मध्ये एकैकस्मिन्पदेऽवसिते समाप्ते सति तदा तदा पुनःपुनरध्वर्युरों होतरित्यादिमन्त्रेण प्रतिगरं ब्रूयात्। अवसितशब्दस्य वीप्सा प्रतिपदं प्रतिगरप्रयोगार्थम्। तत्र प्रथमं पदं दर्शयति। तेषामिति। देवकर्तृके सत्रे प्रजापतिर्गृहपतिरन्ये देवा यजमानास्ते च मन्त्रान्तरे वक्ष्यन्ते। त एवात्र तेषामिति तच्छब्देन परामृश्यन्ते। तेषां प्रजापतिरूपगृहपतियुक्तानां देवतात्मनां यजमानानां मानसे कर्मणि चित्तिः स्रुगासीत्। चिती सञ्ज्ञाने इति धातोश्चित्तिशब्दनिष्पत्तिः। इदं वस्त्वीदृशमेव न त्वन्यथेति या सम्यग्ज्ञानरूपा मनोवृत्तिः सा चित्तिः। सैवैषां होमसाधनभूतजुहूस्थानीया आसीत्। अमूर्तायाश्चित्तेर्जुहूरूपत्वमाश्चर्यमिति द्योतयितुं प्लुतिः। एवमुत्तरत्रापि द्रष्टव्यम्। द्वितीयं पदं दर्शयति। चित्तमिति। पूर्वोक्तायाश्चित्तिरूपाया वृत्तेराधारभूतं यदन्तःकरणं तच्चित्तम्।

तदेवाज्यस्थानीयमासीत्। तृतीयं पदं दर्शयति। वागिति। यद्वागिन्द्रियं तद्वेदिस्थानीयमासीत्। चतुर्थं पदं दर्शयति। आधीतमिति। आसमन्ताद्धीतं मनसा ध्यातं यद्वस्तु तदेव बर्हिःस्थानीयमासीदिति। पञ्चमं पदं दर्शयति। केत इति। कित ज्ञाने इति धातुः। चित्तिः सम्यग्ज्ञानम्। केतुर्ज्ञानमात्रमिति विशेषः। स च केतोऽग्निस्थानीयमासीत् इति। षष्ठं पदं दर्शयति। विज्ञातमिति। मनसा विज्ञातं विशेषेण निश्चितं यद्वस्तु तदग्नीत्। आग्नीध्रनामक ऋत्विगासीत्। सप्तमं पदं दर्शयति। प्राण इति। योऽयं प्राणवायुः स हविःस्थानीय आसीत्। अष्टमं पदं दर्शयति। सामेति। यद्गीयमानं साम तदध्वर्युस्थानीयमासीत्। नवमं पदं दर्शयति। वाच इति। योऽयं वाचस्पतिर्बृहस्पतिः सोऽयं होतृस्थानीय एवासीत्। दशमं पदं दर्शयति। मन इति। यद्यप्येकमेवान्तःकरणं चित्तशब्देन मनःशब्देन चाभिधीयते तथाप्यवस्थाविशेषो द्रष्टव्यः। चित्तिकेत्वादिवृत्तिजनकत्वाकारेण मनः। तच्चालोपवक्ता होतुः समीपस्थो वक्ता मैत्रावरुण आसीत्। एषां दशानां पदानामेकैकस्मिन्पदेऽवसिते सत्यध्वर्युरों होतस्तथा होतरिति प्रतिगरं ब्रूयात्। सोऽयं दशपदात्मकश्चतुर्होतृसञ्ज्ञको मन्त्रसंघातः। अवग्रहसञ्ज्ञकं मन्त्रं दर्शयति। तेषा इति। तेषामिति पदेनोक्ताः प्रजापतियुक्ता देवरूपा ये यजमानाः सन्ति त एवैनं मानसं ग्रहमगृह्णत। ग्रहणकाले वाचस्पतिं सम्बोध्य ब्रुवते। हे वाचस्पते बृहस्पते हे विधे जगतो विधातर्हे नामन् सर्वस्य नमयितः। सर्ववशीकारयुक्तेत्यर्थः। तादृशस्य ते नाम विधेम ख्यातिं करवाम। यद्वा नामान्नं हविर्लक्षणं विधेम सम्पादयामः। त्वमप्यस्माकं प्रजापतियुक्तानां देवानां विधिः कीर्तिमन्नं च सम्पादय। तेनास्मद्दत्तेनान्नेन नाम्ना हविर्लक्षणेन कीर्त्या वा युक्तो द्यां स्वर्गं गच्छ। प्रजापतिर्गृहपतिर्येषां देवानां ते प्रजापतिगृहपतयः। तादृशा देवा यामृद्धिमैश्वर्यमराध्नुवंस्तामृद्धिं तादृशमैश्वर्यं वयमपि यजमाना रात्स्याम इत्यवग्रहमन्त्रस्तमपि होता पठेत्। मन्त्रान्तराणि विधत्ते। अथेति। चतुर्होत्रवग्रहमन्त्रपाठानन्तरं होता प्रजापतितनूसञ्ज्ञकान्मन्त्रान्ब्रह्मोद्यसञ्ज्ञकं च मन्त्रमनुद्रवति। अनुक्रमेण ब्रूयात्। द्वादशसंख्याकाः प्रजापतितनूसञ्ज्ञका अन्नादाचेतिचशब्दान्तानि द्वादश पदानि प्रजापतेस्तन्वः। तत्र द्वे द्वे पदे उपादाय क्रमेण प्रशस्येते। तत्र प्रथमं पदयुग्ममाह। अन्नादेति। अन्नादादयः प्रजापतेर्मूर्तिविशेषस्य वाचकाः शब्दाः। अन्नादेति यदस्ति तदयमग्निरन्नपत्नीति यदस्ति तदसावादित्य एतदुभयं प्रजापतितनूरूपम्। द्वितीयं युग्ममाह भद्रेति। पूर्ववद्व्याख्येयम्। तृतीयं युग्ममाह। अनिलयेति। एष वायुः कदाचिदपि नेलयति नहि। इलयतिर्गतिकर्मा। नेलयति न गच्छति इति नहि किन्तु सदागच्छत्येव। अमुमर्थं निलयेति शब्दो ब्रूते। निलयो निवासः स नास्ति यस्या वायुमूर्तेः सेयमनिलया अपगतं भयं यस्या मृत्युमूर्तेः सेयमपभया।

सर्वमपि जगदेतस्मान्मृत्योर्बिभाय । भीतिं प्राप्नोति । तादृशो मृत्युः कस्मादन्यस्माद्भीतिं प्राप्नुयात् । अनेन न्यायेन पूर्वोक्तानामपि मूर्तीनां निरुक्तयो द्रष्टव्याः । अन्नपत्नीत्यत्रान्नादाऽग्निमूर्तिः । अन्नस्य पत्नी पालयित्री सूर्यमूर्तिः । आदित्याज्जायते वृष्टिरिति न्यायेन पालयितृत्वम् । सोममूर्तेः शैत्यहेतुत्वाद्वृष्टिप्रियत्वाच्च भद्रत्वम् । पशुमूर्तेः क्षीरादिप्रदानेन कल्याणत्वमिति तासां निरुक्तयः । चतुर्थयुग्ममाह । अनाप्तेति । दूरस्थस्य ग्रामादेः संयोगे सति प्राप्तिरित्युच्यते । पृथिव्यामेवोत्पन्नस्य मनुष्यादेः दूरत्वपूर्वकः पृथिवीसंयोगो नास्ति । तस्मादसंयोगपूर्वस्य संयोगस्य प्राप्तिशब्दार्थस्याभावादनाप्ता भूमिः । उपरि दूरदेशवर्तित्वेन प्राप्तुमयोग्यत्वाद् द्यौरनाप्या । पञ्चमं युग्ममाह । अनाधृष्येति । आगत्य समीपं प्राप्य हस्तस्पर्शेन धर्षितुमभिभवितुमशक्योऽग्निः । आदित्यो यथा न प्रकाशते तथा कश्चित्प्रतिबन्धं कृत्वा धर्षितुमभिभवितुमशक्य आदित्यः । षष्ठं युग्ममाह । अपूर्वेति । न विद्यते पूर्वं प्रथमप्रवृत्तमिन्द्रियं यस्या मनोमूर्तेः सेयमपूर्वा । सर्वमपीन्द्रियजातं मनसा संकल्पिते विषये पश्चात्प्रवर्तते । अतो नान्यस्य पूर्वप्रवृत्तिः । संवत्सरः कालात्मा सर्वं जगज्जरयति । न च तं कालं जरयितुं समर्थः कश्चिदन्योऽस्ति । तस्मात्सम्वत्सरमूर्तिर्भ्रातृव्यरहिता । द्वादशपदरूपा प्रजापतितनूरुपसंहरति । एता इति । अन्नादेत्यारभ्याभ्रातृव्येत्यन्ता द्वादशसंख्याका मूर्तयो याः प्रोक्ता एता एव प्रजापतेर्जगन्निर्वाहिकास्तन्वः । एष द्वादशभिस्तनूभिर्युक्तः प्रजापतिः कृत्स्नः संपूर्णः । तथा सत्येतत्पदपाठेन कृत्स्नं प्रजापतिरूपं दशममहः प्राप्नोति । ब्रह्मोद्यमन्त्रविधिमनूद्य तन्मन्त्रस्वरूपं दर्शयति । अथेति । अथ द्वादशपदानुद्रवणादनन्तरं ब्रह्मोद्यनामकं मन्त्रं वदेयुः । ब्राह्मणानामुद्यं संवादो ब्रह्मोद्यम् । अग्निरित्यादिकस्तन्मन्त्रः । एके ब्राह्मणा अग्निर्गृहपतिः स्वामीत्याहुः । सोऽस्येत्यादिना तन्मतमन्यैर्ब्राह्मणैर्दूष्यते । सोऽग्निरस्य लोकस्य भूलोकमात्रस्य गृहपतिर्नतु सर्वलोकस्येति दूषणवादिनामपरितोषः । तच्छ्रुत्वा परे ब्राह्मणा वायुर्गृहपतिरित्याहुस्तदपि मतमन्यैर्ब्राह्मणैर्दूष्यते । स वायुरन्तरिक्षलोकमात्रस्य गृहपतिर्नतु सर्वस्य । योऽसावादित्यस्तपति सोऽसावेव गृहपतिरिति सर्वैरङ्गीकार्यं मतम् । कथं गृहपतित्वमिति तदुच्यते । एष प्रकाशमान आदित्यः पतिस्तेन निष्पाद्या वसन्ताद्या ऋतवो गृहाः । तस्मादृतुलक्षणानां गृहाणां पतिरित्ययमर्थो नाग्निवाय्वोरस्ति । आदित्ये तु विद्यते तत्सञ्चारादृतुनिष्पत्तेः । किञ्च येषामृतूनां स्वामिनमादित्यं देवं गृहपतित्वेन विद्वान्पुरुषः स्वयमपि गृहपतिर्भवति । स च गृहपती राध्नोति सर्वैर्भोगैः समृद्धो भवति । तादृशेन गृहपतिना युक्तास्ते यजमानाः सर्वेऽपि राध्नुवन्ति समृद्धिं प्राप्नुवन्ति । येषामृतुगृहाणां स्वामित्वादादित्यस्य गृहपतित्वं युक्तमित्यर्थः । सत्रे दीक्षिताः सर्वेऽपि यजमानास्तेषु मुख्यो गृहपतिरिति विवेकः । किञ्च येषामृतूनां स्वामिनमादित्यदेवमपहतपाप्मानं

सर्वपापरहितं विद्वान्पुरुषः स्वयं गृहपतिर्भवति । स गृहपतिः पाप्मानमपहते ये त्वन्ये यजमानस्तेऽपि पाप्मानपघ्नते । तादृशामृतूनां स्वामिनो गृहपतित्वं युक्तम् । हे अध्वर्यो वयमरात्स्म समृद्धा अभूम । अभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥२४.६ ॥

ऐतरेयब्राह्मणभाष्ये चतुर्विंशाध्याये षष्ठः खण्डः ॥

॥ २५ ॥

२५.४

अथानुदितहोमनिन्दोदितहोमस्तुतिश्च प्रारभ्यते । वृषशुष्म इति । वतावन्नाम्नो महर्षेरपत्यं वातावतो जतूकर्णस्य पौत्रो जातूकर्ण्यः । सच वृषशुष्मो वृषभस्येव शुष्मं बलं यस्य महर्षेः सोऽयं वृषशुष्मः । तादृशो महर्षिः कदाचिदग्निहोत्रिणामग्रे प्रसङ्गादिदमुवाच । हे अग्निहोत्रिणो भवदीयमिदमाचरणं देवेभ्यो वक्तास्मो वयं वक्ष्यामः । किं तदाचरणमिति तदुच्यते । एतदग्निहोत्रं पुरातनैर्महर्षिभिरुभयेयुरहूयत दिनद्वये हुतमासीत् । पूर्वदिने रात्रावग्निमुद्दिश्य होमः परदिनस्य प्रातः सूर्यमुद्दिश्य होम इत्येवं दिनद्वयानुष्ठानं पूर्वैः कृतम् । तदुल्लङ्घ्येदानीमेतदग्निहोत्रं मनुष्यैरन्येयुरन्यतरस्मिन्नेव दिवसे हूयतेऽस्तमयादूर्ध्वमग्नये होमः पुनरपि सूर्योदयात्प्रागेव सूर्याय होम इत्येवमेकस्यामेव रात्रौ होमद्वयमनुचितं क्रियते इत्येतदाचरणं शास्त्रविरुद्धं देवतानामग्रे कथयिष्यामीति वृद्धस्य महर्षेर्वाक्यम् । अस्मिन्नेवार्थे कुमारी वाक्यमप्युदाहरति एतदुहेति । ऋषेः पुत्री काचिद्बाला तद्गृहस्वामिना गन्धर्वेण कदाचिद् गृहीता सती प्रसङ्गादेतदेव वाक्यमग्निहोत्रिणामग्र उवाच । वक्तास्म इत्यादिकमेतद्वाक्यम् । पितृभ्य इत्येतावानेव विशेषः । ऋषेः कुमार्याश्च वाक्यतात्पर्यं दर्शयति । एतदिति । इदानीन्तनो यदग्निहोत्रं सूर्येऽस्तमितेऽध्वर्युः सायं जुहोति परेद्युः प्रातरुदिते सूर्ये पश्चाज्जुहोति । एतदग्निहोत्रमुभयेद्युर्दिनद्वय एव हूयते । एवमिदानीन्तनानामेकदिनानुष्ठानरूपां निन्दां पुरातनानां दिनद्वयानुष्ठानरूपां स्तुतिं च प्रदर्श्योदिते होमं प्रातःकाले विधत्ते । तस्मादिति । प्रकारान्तरेणोदितहोमं प्रशंसति । चतुर्विंश इति । यः पुरुषोऽनभिज्ञ इदानीन्तनोऽनुदितहोमी स पुरुषश्चतुर्विंशतिसङ्ख्यापूरके संवत्सरे गायत्रीदेवताया लोकं प्राप्नोति । तावद्भिः संवत्सरैर्गायत्र्यक्षरसंख्यानिष्पत्तेः । उदितहोमीतु द्वादशसंख्यापूरक एव संवत्सरे तं गायत्रीलोकमाप्नोति तावतैवोक्तसंख्यानिष्पत्तेः । कथमेतदिति तदुच्यते । सोऽनुदितहोमी यदा संवत्सरावनुदिते सूर्ये प्रातर्जुहोत्यथ तदानीं तस्यानुदितहोमिन एक एव संवत्सरो हुतो भवति । अस्तमयादूर्ध्वं पुनरुदयात्पूर्वं च कालैक्येन होमद्वयनिष्पत्त्यभावात् । अथ तद्वैलक्षण्येन यः शास्त्राभिज्ञ उदयादूर्ध्वं प्रातर्जुहोति तस्य कालद्वयानुष्ठानसिद्धेः संवत्सरद्वयमितरेणानुष्ठितफलमेकेनैव संवत्सरे-

णास्य सिध्यति। तस्माद् द्वादशे संवत्सरे द्विगुणसंख्यया गायत्रीलोकप्राप्तिरुपपद्यते। संवत्सरेणेत्यादिकं वाक्यं विद्वत्प्रशंसार्थं पुनरप्यावर्तनीयम्। यो विद्वाञ्जुहोति स कालद्वयानुष्ठानात्संवत्सरमात्रेण संवत्सरद्वयफलं लभेत। तस्मादुदिते सूर्ये सति पश्चादेव होतव्यम्। पुनरपि प्रकारान्तरेणोदितहोमं प्रशंसति। एष इति। यः सायं प्रातर्होमौ कालभेदेन जुहोति एष पुमानहोरात्रयोः सम्बन्धिनि विविधे तेजसि जुहोति। कथमेतदिति तदुच्यते। येयं रात्रिः सेयमग्निनैव तेजसा युक्ता सती तेजस्वती भवति। यदिदमहस्तदेतदादित्येन तेजसा तेजस्वद्भवति। तस्मात्सायंप्रातःकालद्वये जुह्वतस्तेजोद्वये होमसिद्धिः। वेदनपूर्वकमनुष्ठानं होमं प्रशंसति। अहोरात्रयोरिति। उपपादितमर्थं निगमयति तस्मादिति ॥ २५·४ ॥

ऐतरेयब्राह्मणभाष्ये पञ्चविंशाध्याये चतुर्थः खण्डः ॥

॥ १६ ॥

२५·७

अथाग्निहोत्रप्रसङ्गाद् बुद्धिस्थस्य सर्वप्रायश्चित्तसम्पादकस्य व्याहृतित्रयस्य सृष्टिं वक्तुमुपक्रमते। प्रजापतिरिति। पुरा प्रजापतिरेको भूत्वा प्रजोत्पादनेन बहुविधः स्यामिति कामयित्वा तत्सिद्ध्यर्थं तपः पर्यालोचनमकरोत। इदं वस्त्वीदृशमिति पर्यालोचनरूपं तपः कृत्वा पर्यालोचितप्रकारेणोत्पद्यतामितिसंकल्प्य तेन संकल्पेन लोकत्रयमसृजत। ताँल्लोकान्पुनरप्यभितः पर्यालोचितवान् किमेभ्यो लोकेभ्यः सारभूतं संपादनीयमिति पर्यालोचनम्। तथापर्यालोचितेभ्यो लोकेभ्यः प्रजापतिसंकल्पानुसारेणाग्निवाय्वादित्यरूपाणि ज्योतींष्यजायन्त। तत्रापि सारं पर्यालोच्य त्रिभ्यो ज्योतिर्भ्यो वेदत्रयमुत्पादितवान्। तेभ्यश्च वेदेभ्यो व्याहृतित्रयरूपाणि शुक्राणि ज्योतींषि पापाख्यतमोनिवारणसमर्थान्यजायन्त। एवं व्याहृतित्रयस्योत्पत्तिमुक्त्वा प्रणवस्योत्पत्तिमाह। तानीति। तानि शुक्राणि व्याहृतित्रयरूपाणि ज्योतींषि सारोत्पादनाय पर्यालोचितवान्। तेभ्यः पर्यालोचितेभ्यः प्रजापतिसंकल्पाद्वर्णत्रयमजायत। तच्च त्रयमेकधा संयोजितवान्। तदेतदेकीभूतं वर्णत्रयमोमित्येवं सम्पन्नम्। तस्मात्सर्वसारत्वाद्धोता यः प्रयोगमध्य ओमिति प्रणवं करोति। सर्वप्रयोगसंग्रहार्था वीप्सा। सोऽयमोंकारः स्वर्गप्राप्तिहेतुत्वात्तदात्मकः। तथा योऽसावादित्यस्तपत्यसावप्योंकारस्वरूपः। आदित्यप्राप्तेरोंकारसाधनत्वात्। ओंकारस्य फलहेतुत्वं कठा आमनन्ति। एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तद्। इति। अथ प्रायश्चित्तं विधातुमुपयुक्तमुपाख्यानमाह। स इति। पुरा प्रजापतिः स्वेच्छया यज्ञमतनुत विस्तारितवान्। केन प्रकारेणेति सोऽभिधीयते। तं यज्ञसाधनसमूहमाहृत्य तेन साधनेन यागं कृतवान्। वेदत्रयगतैर्मन्त्रैः क्रमेण हौत्राध्वर्यवौद्गात्राणि

निष्पाद्य त्रय्यै विद्यायै वेदत्रयरूपायां विद्यायां यदेतच्छुक्रं सारं व्याहृतिरूपं तेन सारेण ब्रह्मत्वं कृतवान् । अथ ब्रह्मयज्ञवद्देवतायज्ञं दर्शयति । स इति । पूर्ववद्व्याख्येयम् । अथ प्रश्नोत्तराभ्यां प्रायश्चित्तं विधत्ते । ते देवा इति । ते देवाः प्रजापतिं प्रत्येवमपृच्छन्नोऽस्मदीये यज्ञे यदि कदाचिदृक्‌ ऋङ्‌मन्त्रादार्तिर्नाशो भवेत् । तथा यजुर्मन्त्रात्साममन्त्राद्वा कदाचिदार्तिः स्यात् । एताः सर्वा आर्तयोऽस्माभिर्विज्ञाता यदि वा कदाचिदविज्ञाता काचिदार्तिर्भवति । यदि वा सर्वथा यद्वेदत्रयमन्त्रनिमित्ताऽस्माभिर्विज्ञाताऽस्माभिरज्ञाता च सर्वाप्यार्तिर्भवेत् । केदानीं प्रायश्चित्तिः सा वक्तव्येति देवप्रश्नः । ऋङ्‌मन्त्रवैकल्ये गार्हपत्ये भूरिति होमः । यजुर्मन्त्रवैकल्ये सत्याग्नाध्रीये धिष्ण्ये भुव इति होमः । सोऽयं सोमयागे द्रष्टव्यः । हविर्यागे आग्नध्रीयाभावात् । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि दाक्षायणयज्ञः कौण्डपायिनामयनं सौत्रामणी वा सप्तमी । त एते हविर्यज्ञास्तेषु आग्नीध्रीयाभावेनान्वाहार्यपचने दक्षिणाग्नौ जुहवाथ हे देवा यूयं जुहुत । सामभ्रेषे स्वरित्याहवनीये होमः । यद्यविज्ञातो भ्रेषो यदि वा वेदत्रयभ्रेषसमुच्चयस्तत्रोभयत्रापि भूर्भुवःस्वरित्येतास्तिस्रो व्याहृतीः सर्वा अनुद्रुत्योच्चार्याहवनीय एव जुहुत । अनेनार्थवादेन प्रायश्चित्तविधिमुन्नीय व्याहृतिप्रशंसापूर्वकं तं विधिमुपसंहरति । एतानीति । या एता व्याहृतयः सन्ति एतानि ह वै त्रीण्येव व्याहृतिरूपाणि वेदानां सम्बन्धीन्यतःश्लेषणानि अन्तर्बन्धनसाधनानि । तत्र दृष्टान्तोऽभिधीयते । यथा लोक आत्मनाऽऽत्मानं सन्दध्यात् । आत्मशब्दः स्वरूपवाचित्वात्सर्वद्रव्यपरः । एकेन द्रव्येण द्रव्यान्तरं सन्धीयते । एतच्छन्दोगैर्विस्पष्टमाम्नातम् । तद्यथा लवणेन सुवर्णं सन्दध्यात्सुवर्णेन रजतं रजतेन त्रपु त्रपुणा सीसं सीसेन लोहं लोहेन दारु दारुणा चर्मेति । क्षारादिना सुवर्णादीनां सन्धानं सुवर्णकारादिषु प्रसिद्धम् । तदेतदभिप्रेत्यात्मनाऽऽत्मानं सन्दध्यादित्युक्तम् । यथा च हस्तपादादिष्वेकेन पर्वणा पर्वान्तरं संश्लिष्टं चर्मणा चर्मण्यं पादत्राणादिकमन्यद्वा शकटादिषु विश्लिष्टमङ्गं चर्ममय्या रज्ज्वा संश्लेषयेत् । अनेनैव प्रकारेणैताभिर्व्याहृतिभिर्यज्ञस्य विश्लिष्टमङ्गं संश्लिष्टं भवति । या एता व्याहृतयः सैषा सर्वस्य वैकल्यस्य प्रायश्चित्तिः । तस्माद्यज्ञे वैकल्यपरिहारार्थमेषैव प्रायश्चित्तिः कर्तव्या ॥ २५·७ ॥

ऐतरेयब्राह्मणभाष्ये पञ्चविंशाध्याये सप्तमः खण्डः ॥

॥ १७ ॥

२६·१

अथाग्निहोत्रं पयसः प्रशंसा तद्दोहनापत्तिविनिष्कृतिश्च ।

तस्य प्रशंसाऽप्युदिते च होमो ब्रह्मर्त्विजो व्याहृतयोऽप्यधीताः ॥

अब्राह्मणः कर्तव्यविधानेन ग्रावस्तुद्वृद्धिस्थस्तस्याग्निष्टोमे कर्तव्यं विधातुमुपाख्यानमाह। देवा इति। पुरा कदाचिद्देवाः सर्वचरुनामके देशविशेषे सत्रं किञ्चिदनुष्ठितवन्तः। ते देवास्तेन सत्रेण स्वकीयं पाप्मानं दारिद्र्यहेतुं नापजघ्निरे न नाशितवन्तः। तान्पापक्षय-रहितान्देवानर्बुदनामकः कश्चिदृषिरागत्योवाच। कीदृशोऽर्बुदः। काद्रवेयः कद्रूनाम-धारिण्याः स्त्रियाः पुत्रः सर्पः सर्पजातीयदेहधारी ऋषिरतीन्द्रियार्थद्रष्टा मन्त्रकृत्। करोति-धातुरत्र दर्शनार्थः। मन्त्रस्य प्रैते वदन्तु प्र वयं वदाम (ऋ० स० १०-६४) इत्यादि-सूक्तस्य द्रष्टा। तेनार्बुदेन किमुक्तमिति चेत्तदुच्यते। हे देवा एका वै वो होत्रैकैव होतृ-वेदोत्पन्ना क्रिया वो युष्माकमकृता नानुष्ठिता तद्वैकल्येन पापक्षयो नासीत्। तां क्रियां वो युष्म-दर्थमहं करवाणि अनन्तरं पाप्मानं यूयमपहनिष्यध्वे। इत्येतदृषिवाक्यं देवा अङ्गीचक्रुः। ततः सोऽर्बुदस्तेषां देवानां सत्रे प्रतिदिनं मध्यन्दिनसमय एवोप समीपमुत्सुकः सन्नागच्छत्। आगत्य च ये सोमाभिषवार्था ग्रावाणः पाषाणाः सन्ति तान्पूर्वोक्तेन सूक्तेनाभिष्टौति। अभितः स्तुतिं कृतवान्। इदानीं ग्रावस्तुत ऋत्विजस्त्वेतत्सूक्तेन ग्राव्णामभिष्टवं विधत्ते। तस्मादिति। यस्मा-दर्बुदेनाभिष्टुतिः कृता तस्मात्सोमप्रयोगेषु सत्रेषु मध्यन्दिने काल एव प्रैते वदन्त्वितिसूक्तेन (ऋ० स० १०-६४) ग्राव्णामभिष्टवमृत्विजः कुर्युः। तदनुकृतीति क्रियाविशेषणम्। तस्यार्बुदस्यानु-कृत्यानुरूप्यं यथा भवति तथेत्यर्थः। अर्बुदस्य वृत्तान्तं लोकप्रसिद्ध्या द्रढयति। सहेति। स तु ह सोऽर्बुदाख्यः सर्पदेहो महर्षिर्येन मार्गेणोपोदासर्पत्तत्समीपं प्रति बिलादुद्गम्यागच्छत्। तद्ध तस्मि-न्देशे एतर्हीदानीमप्यर्बुदोदासर्पणीत्यनेन नामधेयेन युक्ता प्रपन्मार्गोऽस्ति। प्रपद्यते गम्यतेऽनयेति प्रपद्। अथाभिष्टवकाले ग्रावस्तुत उष्णीषेण नेत्रवेष्टनं विधत्ते। तानिति। ग्राव्णामभि-ष्टवार्थमर्बुदाख्ये सर्परूपे महर्षौ समागते सति तदीयविषदृष्ट्याऽवलोकितः सोमो वल्ल्यात्मकः स्वयमपि विषयुक्तः सन्समीपवर्तिनो देवान्मदयाञ्चकारोन्मत्तान्परवशान् कृतवान्। तदानीं ते देवाः परस्परमिदमूचुः। आशीविषः सर्परूपोऽयमर्बुदो नोऽस्माकं राजानं विषदृष्ट्याऽवेक्षते हन्त कष्टमेतत्सम्प्रत्यमतस्तत्परिहाराय केनचिदुष्णीषेण शिरोवेष्टनसाधनेनाल्पवस्त्रेणास्यार्बुदस्याक्ष्या-वपिनह्याम चक्षुषोर्बन्धनं करवामेति विचार्य त्रिः प्रदक्षिणं तस्य मुखमुष्णीषेण वेष्टयित्वा तदीयचक्षुषोर्बन्धनं कृतवन्तः। यस्माद्देवैरेवं कृतं तस्मादृत्विजोऽप्युष्णीषमेव पर्यस्य परितो मुखं वेष्टयित्वा ग्राव्णः सोमाभिषवार्थान्पाषाणानभिष्टुवन्ति। तस्य अर्बुदस्यानुकृति सादृश्यं यथा भवति तथेत्यनेनाभिप्रायेण वेष्टनम्। अथ ग्रावस्तुतः पूर्वोक्तसूक्तादन्या अपि ऋचो विधत्ते। तानिति। पुनरपि सोमो राजा तान्देवान्पूर्ववन्मदयां चकारैव ततस्ते देवाः पर-स्परमूचुर्दृष्टिविषपरिहारेऽपि अयं सर्पदेह ऋषिः स्वकीयेनैव सूक्तरूपेण मन्त्रेण ग्राव्णोऽभि-ष्टौति। अतो मन्त्रसम्बद्धेन विषेणास्माकमुन्मादो जायते हन्त कष्टमेतत्। अतो मन्त्रगत-

विषपरिहारायास्यार्बुदस्य मन्त्रं सूक्तमन्याभिराप्यायस्व समेतु ते ( ऋ० सं० ६-३१-४ ) इत्यादिभिर्ऋग्भिरापूरणवाम । पृची सम्पर्के इति धातुः । • सर्वतः संपर्कात्तत्सूक्तगतो-प्रत्वेऽसत्येतान्देवान्सोमो राजा न मदयाञ्चकारोन्मादं ना करोत् । तस्मात्कारणादर्बुदस्य मन्त्रं सूक्तमन्याभिराप्यायस्वेत्यादिभिः( ऋ० सं० ६-३१-४ )अभिष्टवकाले संपृक्तं कुर्युः । तच्च शान्त्यर्थमेव भवति । देवानामभिष्टवकृतां पापशान्तिं दर्शयति । तेहेति । ते देवा अर्बुदानुष्ठितेनाभिष्टवेन दारिद्र्यादिहेतुं पाप्मानं नाशितवन्तः । तेषां देवानामपहतिं पापविनाशमनु पश्चादर्बुदसम्बन्धिनः सर्पाः सर्वेऽपि स्वकीयं पाप्मानं नाशितवन्तः । ये सर्पाः स्वशरीरगतां पूर्वसिद्धां जीर्णां त्वचं हित्वा नवयैव नूतनयैव त्वचा युक्ताः प्रयन्ति । सर्वतः प्रसर्पन्ति । एते नूतनत्वग्युक्ताः सर्पा अपहतपाप्मान इत्युच्यन्ते । वेदेनं प्रशंसति । अपेति ॥ २६·१ ॥

ऐतरेयब्राह्मणभाष्ये षड्विंशाध्याये प्रथमः खण्डः ॥

॥ १८ ॥

३५·१

क्षत्रियो यजमानो यस्तस्य होमादि वर्णितम् ।

फलनामा तु चमसस्तस्यैवात्रोपवर्ण्यते ॥१॥

तत्रादौ क्षत्रियस्य सोमभक्षराहित्यप्रदर्शनार्थमुपाख्यानमाह । विश्वन्तर इति । शोभनं सद्म राजगृहं यस्य राज्ञः सोऽयं सुषद्मा तस्य पुत्रः सौषद्मनः । स च विश्वन्तरनामकः । स कदाचिद्यागं चिकीर्षुः श्यापर्णनामकान्ब्राह्मणविशेषान्परित्यज्य आर्त्विज्ये निराकुर्वन् विश्यापर्ण यज्ञमाजह्रे । श्यापर्णनामकब्राह्मणविरहितमेव यज्ञमनुष्ठितवान् । तद्ध तत्सर्वं श्यापर्ण-नामका ब्राह्मणा अनुबुध्य मनुष्यमुखादवगत्य विश्वन्तरेण राज्ञा तदानीमनाहूता एव तं यज्ञमा-जग्मुः । आगत्य ते ह त एव श्यापर्णास्तदन्तर्वेदि तस्य यज्ञस्य वेदिमध्ये आसाञ्चक्रिरे राजा-नुज्ञामन्तरेण स्वयमेवोपविष्टवन्तः । राजा तान्दृष्ट्वा श्यापर्णान्दृष्ट्वा स्वकीयान्वेलपाणोनुवाच । यदेते श्यापर्णास्सन्तीमेऽपूतायै वाचो वदितारोऽपूतां वाचं मदीयावज्ञारूपां वदन्तः पापस्य कर्मणः कर्तारो धौर्त्यरूपं व्यापारं कर्तुमुद्यता इहासते । इमे श्यापर्णा मेन्तर्वेदि मदीयाया वेदेर्मध्ये माऽऽसिषत स्वयमेवोपविष्टाः । इमान्धूर्तान्हे वेलपाणय उत्थापयत । इत्येवं राज्ञोक्ता वेलपाणयस्तथेत्यङ्गीकृत्य ताञ्छ्यापर्णानुत्थापयाञ्चक्रुः । तेषां श्यापर्णानां वृत्तान्तमाह । त इति । वेलपाणिभिरुत्थाप्यमानास्ते श्यापर्णा ब्राह्मणा रुरुविरे रवं शब्दं परस्परमुच्चैर्ध्वनिं कृतवन्तः । तत्र धृष्टाः केचिदन्यान्प्रति काञ्चित्पुरातनीं कथामूचुः । परीक्षितः पुत्रो जनमेजयाख्यो यो राजा स कदाचित्कश्यपवंशोत्पन्नान्ब्राह्मणान्विहाय विकश्यपं यज्ञं भूतवीरसञ्ज्ञकैर्ब्राह्मणैर्ऋत्विग्भिः

कारयामास। तदानीं कश्यपानां मध्ये ये केचिदसितमृगनामकाः पुरुषाः सोमपीथं जनमेजयसम्बन्धिनं सोमयागं तेभ्यो भूतवीरसञ्ज्ञकेभ्यो ब्राह्मणेभ्यो बलादाकृष्य स्वयमभिजिग्युः। अभितो जयं प्राप्ताः। बहुषु यज्ञप्रयोगेषु विजिगीषुकथां कृत्वा तान् भूतवीरान्ब्राह्मणान्पराजयं प्रापय्य स्वयमसितमृगनामानो ये जितवन्तः। तैरसितमृगैस्ते कश्यपास्तत्र जनमेजयस्य यज्ञे वीरवन्तः शूरपुरुषोपेता आसुः। एतां कथामुदाहृत्य श्यापर्णाः स्वकीयानेवं पृच्छन्ति। अस्माकं राज्ञा तिरस्कृतानामस्माकं मध्ये यः पुमानिमं सोमपीथं विश्वन्तरस्य राज्ञः सोमयागमभिजेष्यति स तादृशो वीरः कश्चिदस्ति यः कोऽपि किमस्ति इत्येवमुच्चैः शब्दं चक्रुः। तस्य श्यापर्णानां प्रश्नस्य तन्मध्ये केनचिदुक्तमुत्तरं दर्शयति। अयमिति। मृगवुर्नाम काचियोषित्तस्याः पुत्रो रामनामा कश्चिद्ब्राह्मण एवमुवाच। हे श्यापर्णा वो युष्माकं मध्ये वीरः परकीयान्विजेतुं शूरोऽहमयमस्मि भवतां पुरो वर्तमानोऽस्मीति। तस्य रामस्य वृत्तान्तमाह। राम इति। श्यापर्णीयः श्यापर्णानां ब्राह्मणानां सम्बन्धी मृगवुपुत्रो रामोऽनूचानः साङ्गवेदशास्त्रपारङ्गत आस। तत्रावस्थितवान्। तेषां श्यापर्णानां वेदेरुत्तिष्ठतां मध्येऽवस्थितो रामो विश्वन्तरं प्रत्येवमुवाच। हे राजन्नित्थंविदं यागसम्बन्धिप्रयोगप्रकाराभिज्ञं मामपि त्वदीया वेलपाणयो नु क्षिप्रं वेदेरुत्थापयन्ति तदेतदयुक्तमिति। तच्छ्रुत्वा विश्वन्तरो राजैवमुवाच। हे ब्रह्मबन्धो ब्राह्मणाधम राम यस्त्वं धार्ष्ट्याद्ब्रवीषि स त्वं कथं वेत्थेति। अत्र राजोवाचेत्यध्याहार्यम् ॥३५.१॥

ऐतरेयब्राह्मणे पञ्चत्रिंशाध्याये प्रथमः खण्डः

॥ १९ ॥

३५.२

अथ रामः स्वकीयं वेदनं राज्ञोऽस्मै प्रकटयति। यत्रेति। हे विश्वन्तर मदीयं वेदनं शृणु। पुरा कदाचिद्देवता इन्द्रोस्योपरि पञ्चापराधान्संपाद्येन्द्रं पर्यवृञ्जन्। यज्ञेषु परितो वर्जितवन्तः। यत्र यदा वर्जनं कृतं तत्र तदेन्द्रः सोमपीथेन व्यार्ध्यत। सोमापानेन वियुक्तोऽभूत्। इन्द्रस्य येऽपराधास्तेऽभिधीयन्ते। त्वष्टुः पुत्रं विश्वरूपनामानं ब्राह्मणमभ्यमंस्तेन्द्रो हिंसितवान्। तथा तेन त्वष्ट्रोत्पादितं वृत्रनामानं ब्राह्मणमस्तृत हिंसितवान्। एतदुभयं तैत्तिरीयैर्विश्वरूपो वै त्वाष्ट्रः (तै० स० २-५-२) त्वष्टा हतपुत्रः। (तै० स० २-५-१) इत्यनुवाकद्वये विस्पष्टमाम्नातम्। तथा यतिवेषधरानसुराञ्छस्त्रेण छित्वा सालावृकेभ्योऽरण्यश्वभ्यः प्रादात्। तथाऽन्यानप्यरुर्मघनामकान्ब्राह्मणवेषानसुरानवधीत्। तथा स्वगुरोर्वाक्यं स्वकीयेन वाक्येन प्रत्यवधीत्। सोऽयं प्रतिघातो न युक्तः। तथा चापस्तम्बः

स्मरति । वाक्येन वाक्यस्य प्रतिघातमाचार्यस्य वर्जयेच्छ्रेयसां चेति । एते पञ्चापराधास्तै-र्निमित्तभूतैरिन्द्रस्य सोमपाने निवारिते सति व्यृद्धिं तन्निवारणमनु क्षत्रं सर्वापि क्षत्रजातिः सोमपीथेन व्यार्द्धत । सोमपानेन वियुक्ताऽभूत् । तदूर्ध्वं सोमपानेऽपि स प्रवृत्तोऽभूत् । कथमिति तदुच्यते । अमुष्य त्वष्टुः सोममाबलादपिवत् इति शेषः । तथा च तैत्तिरोया आमनन्ति । स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत् । ( तै० स० २-५-२ ) इति । तत्तथा सतीन्द्रेण बलात्सोमे पीते सति क्षत्रियान्तरस्य तत्सामर्थ्याभावादिदानीमपि क्षत्रं सोमपीथेन व्यृद्धमेव सोमपानरहितमेवावतिष्ठते । येन भक्षविशेषेण क्षत्रं समृद्धं भवति तादृशो योऽन्यो भक्षः सोमपानेन वियुक्तस्य क्षत्रस्य संभवति तं भक्षं यः पुमान्विद्यात्तं तादृशं क्षत्रियभक्षविदमस्मदादिपुरुषं कथमेते वेलपाणयो वेदेरुत्थापयन्तीति राज्ञ उपालम्भः । अथ रामविश्वन्तरयोरुक्तिप्रत्युक्ती दर्शयति । वेत्थेति । हे ब्राह्मण राम त्वं तादृशं भक्षं किं वेत्थेति विश्वन्तरस्य प्रश्नः । तदर्था प्लुतिः । वेद हि जानाम्येवेति रामोऽब्रवीत् । हे ब्राह्मण त्वं वै तमेव क्षत्रियभक्षं नोऽस्माकं ब्रूहीति विश्वन्तरः पप्रच्छ । हे राजंस्तस्मै ते वै तादृशाय पृच्छते तुभ्यमेव कथयामीति राम उवाच ॥३५-२॥

ऐतरेयब्राह्मणे पञ्चत्रिंशाध्याये द्वितीयः खण्डः ॥

॥ २० ॥

३५·३

क्षत्रियस्य हेया भक्षास्त्रिविधा उपादेयो भक्ष एकस्तत्र हेयान्भक्षान्दर्शयति त्रयाणामिति । हेयानां त्रयाणां मध्ये भक्षमेकं क्षत्रियस्य तवानभिज्ञा ऋत्विज आहरिष्यन्ति । कं भक्ष-मित्याशङ्क्य सोमं वा दधि वा जलं वेत्युक्तम् । तत्र सोमपक्षे दोषं दर्शयति । सयदीति । सोऽनभिज्ञ ऋत्विग्यदि ते विश्वन्तरस्य क्षत्रियस्य सोमं भक्षमाहरेदिति शेषः । स सोमो ब्राह्मणानां योग्यो भक्षस्तेन भक्षेण ब्राह्मणाञ्जिन्विष्यसि प्रीणयिष्यसि । नतु क्षत्रियस्य तव प्रीतिः । तथा सति ते तव राज्ञः प्रजायां सन्ततौ ब्राह्मणकल्पः । ईषदसमाप्तो ब्राह्मण आजनिष्यते । क्षत्रियधर्मेण शौर्येण रहितत्वात्तस्य ब्राह्मणसदृशत्वम् । स च पुत्रो ब्राह्मण-वद्वक्ष्यमाणगुणचतुष्टयोपेतो भवति । आदानं प्रतिग्रहस्तच्छील आदायी । प्रतिग्रहश्च ब्राह्मणगुणः । ऋत्विग्भूत्वा सोममासमन्तात्पाययतीत्यापायी । तदेतद्याजनमपि ब्राह्मणगुणः । अवसमन्नं तस्य सम्बन्धि याचनमावसः । तमावसमेति प्राप्नोतीत्यावसायी । परगृहे सदा भोजनयाचनमपि ब्राह्मणगुणः । काममिच्छामनतिक्रम्य यथाकामं तदनुसारेण प्रयाप्यो निर्वासयितुं शक्यः । क्षत्रियवैश्यादिवच्छौर्यधनाद्यभावाद्यः कोऽप्यागत्य दुर्बलं ब्राह्मणं तद्गृहात्त-

दीयग्रामाद्वा निष्कासयितुमिच्छति तदानीमयं ब्राह्मणो दुर्बलत्वात्तेन निःसारयितुं शक्यते। एवमेते चत्वारो धर्मा ब्राह्मणगुणाः। सोमं भक्षयतो राज्ञ एतद्गुणकः पुत्रो जायते। किञ्च यदा प्रमादात्क्षत्रियाय पापं क्षत्रियस्य किञ्चिन्निषिद्धाचरणं भवति तदानीं तेन पापेन तस्य क्षत्रियस्य प्रजायां सन्ततौ ब्राह्मणकल्पः शौर्यराहित्यादिना ब्राह्मणसदृशः पुत्र आजायते। अस्मात्पापिनः क्षत्रियाद्द्वितीयो वा तृतीयो वा पुत्रो वा पौत्रो वा ब्राह्मणतामभ्युपैतोः शौर्यादि-गुणरहितं ब्राह्मण्यं प्राप्तुमीश्वरः समर्थो भवति। स ब्राह्मणसदृशः क्षत्रियपुत्रो ब्रह्मबन्धवेन ब्राह्मबन्धुत्वेन ब्राह्मणोचितयाचादिना जिज्यूषितो जीवितुमिष्टो नीचरूपदैन्यवृत्त्या जीवितुं प्रवृत्तो भवतीत्यर्थः। सोमस्य भक्षत्वे दोषमुक्त्वा दध्नो भक्षत्वे दोषमाह। अथयदीति। यदि ते दधिरूपं भक्षमाहरेत्तदा दध्नो वैश्यभक्षत्वात्तेन वैश्यान्प्रीणयिष्यसि। तव सन्ततौ वैश्यसमानः पुत्र आजनिष्यते। वैश्यश्च वाणिज्यं कुर्वन्नन्यस्य राज्ञो बलिकृद्बलिं पूजां करोति करं प्रयच्छतीत्यर्थः। अत एवान्यस्य राज्ञ आद्यो भक्ष्योऽधीनो भवतीत्यर्थः। तस्य राज्ञः काममिच्छामनतिक्रम्य ज्येयोऽभिभवनीयो भवति। ज्या अभिभव इति धातुः। त एते करप्रदानपराधीनत्वतिरस्कार्यत्वाख्या वैश्यगुणाः। यदा क्षत्रियस्य किञ्चित्पापं संभवति तदा तस्य सन्ततौ वैश्यसदृशो जायते। अस्मात्क्षत्रियात्पापिनोऽन्यः पुत्रः पौत्रो वा वैश्यतां प्राप्तुं समर्थो भवति। स च वैश्यतया करप्रदानादिना जीवितुं प्रवृत्तो भवति। दधिभक्षे दोषमुक्त्वा जलभक्षे दोषमाह। अथ यदीति। यदि ते क्षत्रियस्य कश्चिदृत्विगपो जलं भक्षमाहरेत्तदानीं स जलात्मकः शूद्राणां भक्षस्तेन भक्षेण शूद्रान्प्रीणयिष्यसि। ततस्तव सन्ततौ शूद्रसदृशः पुत्र उत्पत्स्यते। शूद्रश्चान्यस्योत्तमवर्णत्रयस्य प्रेष्यः प्रेषणीयो भृत्यो भवति। तथा कामोत्थाप्यो मध्यरात्रादौ यदा कदाचिद्दिन इच्छा भवति तदानीमयमुत्थाप्यते। तदीयं काममिच्छामनतिक्रम्य वध्यः कुपितेन स्वामिना ताड्यो भवति। एते शूद्रगुणाः। क्षत्रियस्य कदाचित्पापे सति शूद्रसमानः पुत्रो जायते। तस्मात्क्षत्रियादन्यः पुत्रः पौत्रो वा शूद्रत्वं प्राप्तुं समर्थो भवति। स पुत्रः शूद्रतया शूद्रवर्णतया दासत्ववृत्त्या जीवितुं प्रवृत्तो भवति ॥३५.३॥

ऐतरेयब्राह्मणभाष्ये पञ्चत्रिंशाध्याये तृतीयः खण्डः ॥

॥ २१ ॥

३९.७

उक्तं महाभिषेकं चिरन्तनशिष्टाचारोदाहरणेन प्रशंसति। एतेनेति। कवषस्य पुत्र-स्तुरनामको महर्षिः परिक्षितपुत्रं जनमेजयमुक्तविधानेन अभिषिषेच। तस्मादेव कारणाज्जन-मेजयः सर्वतो दिक्षु पृथिवीं समन्तमन्तेन समुद्रतीरेण संयुक्तं यथा भवति तथा जयन्विजयं

प्राप्नुवन्परीयाय परितश्चचार । अभिषेकमाहात्म्येनैवं दिग्विजयं कृतवानित्यर्थः । अभिषेक-प्रसादादेव मेध्येन यागयोग्येनाश्वेन चेज इष्टवान् । अश्वमेधं कृतवानित्यर्थः । अस्मिन्नर्थे काञ्चिद्गाथामुदाहरति । तदेषेति । तत्तस्मिञ्जनमेजयवृत्तान्ते एषा वक्ष्यमाणा यज्ञविषया गीतिर्वैदिकैरभितो गीयते । तां गाथां दर्शयति । आसन्दीति । आसन्दीवानिति देश-विशेषस्य नामधेयं तस्मिन्देशे जनमेजयो देवेभ्यो देवार्थं यागयोग्यमश्वं बबन्ध । कीदृश-मश्वम् । धान्यादम् । धान्यमेवात्ति । रुक्मिणम् । रुक्मशब्देन ललाटगतं श्वेत-लाञ्छनमुपलक्ष्यते । तद्युक्तम् । हरितवर्णा स्रक् यस्यासौ हरितस्रक् । पुष्पमालेव वर्णो देहं व्याप्य वर्तत इत्यर्थः । सारं कर्मसु श्रेष्ठं यागं गच्छतीति सारङ्गः । इत्यनया गाथया जनमेजयस्याभिषेकमहिमोदाहृतः । जनमेजयवच्छार्याततनामकं राजानमुदाहरति । एतेनेति । भृगोः पुत्रश्च्यवननामको महर्षिर्मनुवंशोत्पन्नं शार्याततनामकं राजानमभिषिषेच । तस्मात्फलं पूर्ववत् । किञ्च देवानां सम्बन्धिनि सत्रेऽपि शार्यातो गृहपतिरभूत् । शतानीकनामकं राजानमुदाहरति । एतेनेति । सोमशुष्मनामकः कश्चिन्महर्षिः । स च वाजरत्नस्य पौत्र-स्तथाविधो मुनिः सत्राजितः पुत्रं शतानीकनामकं क्षत्रियमभिषिषेच शेषं पूर्ववत् । आम्बष्ठ्यनामकं राजानमुदाहरति । एतेनेति । युधांश्रौष्टिनामकमुग्रसेनस्य पुत्रं राजान-मुदाहरति । एतेनेति । भुवनाख्यस्य पुत्रं विश्वकर्मनामकं राजानमुदाहरति । एतेनेति । भौवनाभिषेकमाहात्म्यं प्रशंसितुं पुरातनमहर्षिप्रोक्तमुदाहरणं दर्शयति । भूमिरिति । भूमि-र्देवता जगौ भौवनं प्रति किञ्चिद्वाक्यं गाथारूपमुक्तवतीत्येवं पूर्वे महर्षय उदाहरन्ति । तां गाथां दर्शयति । नमेति । भुवनाख्यस्य पुत्र हे विश्वकर्मन्कश्चिदपि मनुष्यो मां भूमिं दातुं नार्हति । अत एव मीमांसका विचार्य सर्वस्वदाने महाभूमिदानं निवारित-वन्तः । एवं सति त्वं मां भूमिं दिदासिथ कश्यपाय त्वदीयायाचार्याय दातु-मिच्छसि । अहं तु सलिलस्य समुद्रस्य मध्ये निमङ्क्ष्ये निमज्जनं करिष्ये । तथा सति ते कश्यपाय त्वदीयाचार्यस्य कश्यपस्यैष सङ्गरो भूमिप्रतिग्रहविषयो मोघ आस व्यर्थ एव बभूवेति । ईदृशमपि महाभूमिमज्जनं महाभिषेकमहिम्ना निवारितमिति तात्पर्यार्थः । सुदा इत्येतन्नामकं पिजवनस्य पुत्रं राजानमुदाहरति । एतेनेति । अविक्षिन्नामकस्य पुत्रं मरुत्तनामकं राजानमुदाहरति । एतेनेति । संवर्तनामको महर्षिराङ्गिरसः पुत्रः । तेन कृतं मरुत्ताभिषेकं प्रशंसितुं श्लोकमुदाहरति । तदपीति । मरुत्ताभिषेकमाहात्म्ये एव वक्ष्यमाणः श्लोकः पादबद्धो मन्त्रोऽभिगीतोऽभितः सर्वैः पठितः । तं श्लोकं दर्शयति । मरुत इति । मरुत्तनाम्नो राज्ञो गृहे मरुत्सञ्ज्ञका देवा भोजनकाले परिवेषणकर्तारो भूत्वावसन् । तथैवा-विक्षितस्याविक्षित्पुत्रस्य कामप्रेः सर्वकामपूरितस्य मरुत्तस्य गृहे विश्वे सर्वे देवाः सभासदः

सभायामुपविष्टाः सेवन्त इति शेषः। इत्येष सर्वोऽपि महाभिषेकस्य महिमेत्यभिप्रायः ॥३९.७॥

ऐतरेयब्राह्मणभाष्ये एकोनचत्वारिंशाध्याये सप्तमः खण्डः ॥

॥ २२ ॥

३९.८

अङ्गनामकराजानमुदाहरति। एतेनेति। उदमयनामकः कश्चिन्महर्षिरत्रेः पुत्रोऽङ्गमभिषिषेच। तस्याङ्गस्याभिषेकमाहात्म्यं दर्शयितुं कश्चिद्वृत्तान्तमाह। सहेति। योऽयमङ्गनामको राजोक्तः सोऽयमलोपाङ्गः संपूर्णावयव इत्यर्थः। महदस्याङ्गसौष्ठवम्। स कदाचित्स्वकीयाभिषेककर्तर्युदमयनामके पुरोहिते स्वार्थं यागं कुर्वाणे सति तं प्रत्येवमुवाच। हे ब्राह्मणास्मिंस्त्वदीये यज्ञे मामुपाह्वयस्व समाह्वानं कुरु। अहमागत्य त्वदीययज्ञे दक्षिणासम्पूर्त्यर्थं तुभ्यं गजसहस्राणि दासीसहस्राणि च ददामीति। सेयं बहुदानसम्पत्तिः सद्बुद्धिश्च महाभिषेकप्रसादलब्धा। एतमेवार्थं प्रपञ्चयितुं श्लोकानुदाहरति। तदपीति। तस्मिन्नप्यङ्गराजपुरोहितस्य यागे दानप्रतिपादका एते पञ्च श्लोका अभितो गीताः सर्वतोऽभिज्ञैः पठिताः। तत्र प्रथमं श्लोकमाह। याभिरिति। प्रियमेधस्य पुत्राः प्रैयमेधा महर्षयः। उदमयनामकमङ्गराजपुरोहितं याभिर्गोभिर्दक्षिणारूपाभिरयाजयन्। ता गावो बध्यन्त इति शेषः। बद्वमिति शतकोटिसङ्ख्याया नामधेयम्। बद्वानां शतकोटिसङ्ख्याकानां गवां मध्ये प्रतिदिनं द्वे द्वे सहस्रे मध्यतो माध्यन्दिनसवनेऽत्रिपुत्र उदमयो दत्तवान्। द्वितीयं श्लोकमाह। अष्टाशीतिरिति। वैरोचनो विरोचनस्य पुत्रोऽङ्गनामको राजा स्वकीयपुरोहित उदमयनामके यजमाने यागं कुर्वाणे स्वयमागत्याष्टाशीतिसहस्रसंख्याकानश्वाञ्छ्वेतवर्णान्प्रष्टीन्पृष्ठवहनयोग्यवयस्कान्निश्चल्य स्वकीयादश्वबन्धनस्थानान्निस्सार्य प्रायच्छद्दत्तवान्। तृतीयं श्लोकमाह। देशादिति। देशाद्देशाद्दिग्विजयकाले तत्तद्देशविशेषात्समोळ्हानां सम्यगासमन्तादूढानामानीतानामाढ्यदुहितॄणां धनिकपुत्रीणां सर्वासां दशसहस्राण्यात्रेयोऽङ्गराजपुरोहितो दत्तवान्। ताश्च दुहितरो निष्ककण्ठ्य आभरणोपेतकण्ठयुक्ताः। चतुर्थं श्लोकमाह। दशेति। अङ्गराजस्य पुरोहितो ब्राह्मण आत्रेयोऽवचत्नुकनामकदेशे गजसहस्राणि दशसंख्यानि दत्वा दानेन श्रान्तः सन्पारिकुटान्परिचारकान्प्रैषत्प्रेषितवान्। हे परिचारका यूयं दत्तेत्येवमुक्तवानित्यर्थः। पञ्चमं श्लोकमाह। शतमिति। परिचारकाणामप्ययम् एकैकशो बहुमशक्तस्तुभ्यं शतं तुभ्यं शतमिति शतसंख्यां प्रोच्य तत्रापि प्रताम्यति स्मैव ग्लानिमेव प्राप्तवान्। ततः शतसङ्ख्यां परित्यज्य सहस्रं तुभ्यमित्युक्त्वा तस्यामपि सङ्ख्यायां बहुशः

प्रोक्तायामाश्रान्तः सन्प्राणान्प्रतिपद्यते स्म । मध्ये मध्ये श्रमपरिहाराय दीर्घश्वासं कृतवानित्यर्थः । अङ्गराजस्य पुरोहितायाप्येतादृशसामर्थ्यं महाभिषेकलब्धमिति तात्पर्यार्थः ॥३६.८॥

ऐतरेयब्राह्मणभाष्ये एकोनचत्वारिंशाध्यायेऽष्टमः खण्डः ॥

॥ २३ ॥

३६.६

दुष्यन्तपुत्रं भरताख्यं राजानमुदाहरति । एतेनेति । ममताख्यायाः स्त्रियाः पुत्रो दीर्घतमा इत्येतन्नामा मुनिर्भरतमभिषिषेच भरतोऽपि दिग्विजयेन पृथिवीं परीत्य मेध्यैरश्वैरपीजे । उचेतिनिपातयोः समूहः समुच्चयार्थः । भरताभिषेकमाहात्म्यं दर्शयितुं श्लोकानुदाहरति । तदपीति । तत्तस्मिन्भरताभिषेकमाहात्म्येऽप्येते वक्ष्यमाणाः पञ्च श्लोका अभितः परिगीयन्ते । तत्र प्रथमं श्लोकमाह । हिरण्येनेति । मृगशब्देनात्र गजा विवक्षिताः । मृगवदतिबाहुल्यविवक्षया मृगशब्दः । ते च गजा हिरण्येन परिवृताः सर्वाभरणयुक्ताः शरीरपुष्ट्या वर्णोत्कर्षं सत्यत्यन्तं कृष्णाः प्रतिभासन्ते । शुक्लाभ्यां दन्ताभ्यां युक्तास्तादृशान्गजान् मष्णारनामके देशे भरतो राजा दत्तवान् । शतमित्यादि तत्संख्योच्यते । बद्वं वृन्दमिति पर्यायौ । वृन्दशब्दश्च शतकोटिवाचित्वेन गणिते ग्रन्थकारैर्दर्शितः । एकं दश च शतं च सहस्रं चायुतनियुते तथा । प्रयुतकोट्यर्बुदं वृन्दं स्थानं स्थानाद्दशगुणं स्याद् ॥ इति । तानि च शतकोटिरूपाणि बद्वानि सप्ताधिकशतसङ्ख्याकानि । तावतो गजान्दत्तवानित्यर्थः । द्वितीयं श्लोकमाह । साचिगुणनामके कस्मिंश्चिद्देशे दुष्यन्तपुत्रस्य भरतस्यैवोऽग्निश्चितः । अग्निचयनं कृतवानित्यर्थः । यस्मिन्नग्निचयने सहस्रसंख्याका ब्राह्मणा बद्वशः प्रत्येकं शतकोटिसंख्यया गा विभेजिरे । गवां विभागं कृतवन्तः । तृतीयं श्लोकमाह । अष्टासप्ततिमिति । मेध्यैरश्वैरीज इत्युक्तं तेषामश्वानां संख्यात्रोच्यते । अष्टाधिका सप्ततिरष्टासप्ततिः । तानष्टासप्ततिं दुष्यन्तपुत्रो भरतो यमुनामनु यमुनायास्तीरेऽबध्नात् । बद्धवान् । तावतोऽश्वमेधान्कृतवानित्यर्थः । गङ्गायां गङ्गातीरे वृत्रघ्ननामके देशे पञ्चाधिकपञ्चाशत्संख्याकान्हयानबध्नात् । तावतोऽश्वमेधान्कृतवान् । चतुर्थं श्लोकमाह । त्रयस्त्रिंशदिति । यमुनातीरे गङ्गातीरे चानुष्ठिता अश्वास्त्रयस्त्रिंशदधिकशतसंख्याकाः । तावतोऽश्वान्मेध्यान् यज्ञयोग्यान्विष्युक्तक्रमेण बन्धनं कृत्वा सोऽयं राजा दौष्यन्तिर्मायवत्तरोऽतिशयेन मायावी सन्राज्ञः स्वकीयशत्रोर्मायामत्यगात् अतिक्रान्तवान् । पञ्चमं श्लोकमाह । महाकर्मेति । भरतस्य राज्ञो यदेतन्महाकर्म तदेतत्पूर्वे पित्रादयो न कर्तुं शक्ताः । अपरे जनाः पुत्रपौत्रादयश्च न कर्तुं शक्ताः । तत्र दृष्टान्तः । यथा मनुष्यो दिवं स्वर्गं हस्ताभ्यां स्प्रष्टुमशक्त एवं पञ्च मानवा निषादपञ्चमाश्चत्वारो

वर्णा नोदापुस्तदीयं कर्म प्राप्तुमशक्ताः। सोऽयं सर्वोऽपि महाभिषेकस्य महिमेत्यर्थः। अथ संप्रदायकथनमुखेन महाभिषेकं प्रशंसति। एतमिति। बृहदुक्थनामकः कश्चिदृषिः पञ्चालदेशस्वामिने दुर्मुखनाम्ने राज्ञे तमेतमिन्द्रसम्बन्धिनं महाभिषेकं प्रोवाच। तस्मादेव कारणात्स राजा सन्विद्यया महाभिषेकज्ञानेनैव सर्वासु दिक्षु समन्तं समग्रां पृथिवीं जयन्परीयाय परितः सञ्चचार। अथ ब्राह्मणोक्ताभिषेकाधिकाराभावेऽपि तद्विद्याधिकारसद्भावात्फलसिद्धिं दर्शयति। एतमिति। वसिष्ठगोत्रोत्पन्नो वासिष्ठः सत्यहव्यस्य पुत्रः सात्यहव्यस्तादृशो मुनिरत्यरातिनामकाय जनन्तपपुत्राय तमेतं महाभिषेकं प्रोवाच। तस्मादेव कारणादयमत्यरातिर्जानन्तपिः स्वयमराजा सन्नप्यभिषेकविद्यया जयं प्राप्तः परितो गतवान्। यथाभिषेके शपथं कृत्वा गुरुद्रोहो न कर्तव्य एवं विद्यायामपीति दर्शयति। सहेति। सात्यहव्यो वासिष्ठो गुरुरत्यरातिं शिष्यमेवमुवाच हेऽत्यराते विद्यासामर्थ्यात्पृथिवीं जितवानसि। अतो मां गुरुं महद्गमय महत्त्वमैश्वर्यं प्रापय। ततः शिष्योऽत्यरातिरेवमुवाच। मा भूदिदानीं तव महत्त्वम्। हे ब्राह्मणाचार्य यदाहमुत्तरकुरुनामकान्हिमवत्पर्वतस्योत्तरदेशाञ्जयेयं तदानीं त्वमेव पृथिव्या राजा भव। अहं तु त्वदीयसेनापतिरेव भवामीति। ततः सात्यहव्यो वासिष्ठः स गुरुरेवमुवाच। हेऽत्यराते मेरोरुत्तरतो यदस्ति तद्देवक्षेत्रमतस्तत्क्षेत्रं मनुष्यो जेतुं नैवार्हति। त्वं तु मे मह्यमद्रुह्वो वै द्रोहं कृतवानेव। मदपेक्षितं महत्त्वं दातुमनिच्छुः सन्वञ्चनार्थं यत्किंचिदुक्तवानसि। अतः शपथोल्लङ्घिनो गुरुद्रोहिणस्तव सामर्थ्यमाददेऽपहरामीति। ततः सामर्थ्यापहरणादत्यरातिं जानन्तपिं गुरुणाऽपहृतवीर्यमपहृततेजस्कं कश्चिच्छत्रुतापनः शिबिपुत्रः शुष्मिणाख्यो राजा जघान हतवान्। एतद्वृत्तान्तकथनफलं दर्शयति। तस्मादिति। यस्माद् गुरुद्रोहे महती हानिरुक्ता तस्मादेवंविदुषे महाभिषेकाभिज्ञायैवंचकुषेऽभिषेककर्त्रे ब्राह्मणायाचार्याय क्षत्रियो न द्रुह्येत्। केनाभिप्रायेणेति सोऽभिधीयते। राष्ट्रादस्माद्देशान्नेदवपद्येयं नैव भ्रष्टो भूयासम्। अथवा मा प्राणो नेज्जहन्नैव परित्यजत्वित्यभिप्रायः। अभ्यासोऽध्यायसमाप्त्यर्थः ॥३६·६॥

ऐतरेयब्राह्मणभाष्ये एकोनत्रिंशाध्याये नवमः खण्डः ॥

## ३। शतपथब्राह्मणभाष्यम्

### ॥ १ ॥

### १·१·४·११—१९

हविष्कृत आह्वानं विधत्ते। अथ हविष्कृतमिति। उद्वादयति। उच्चैराह्वयतीत्यर्थः। हविष्कृदेहीति मन्त्रस्य द्विः पाठो मन्त्रकाण्डे द्विराम्नानात्। हविष्कृच्छब्दार्थमाह। वाग्वै हविष्कृदिति। निर्वापादौ मन्त्ररूपाया वाचो हविष्करणसाधनत्वाद्वागेव हविष्कृत् अतस्तामनेनैव

मन्त्रेणाह्वयन्हविर्ग्रहणकाले नियमितां वाचं विसृजेत्। अत एव कात्यायनेन अग्नेस्तनूरसीति मन्त्रेण हविष्कृदेहीति मन्त्रेण वा वाग्विसर्जनं कर्तव्यमिति विकल्पेन सूत्रितम् ( का० श्रौ० २-४ )। अग्नेस्तनूरसीति वाचं विसृजते, हविष्कृता वेति। वागु वा इति। या वाक् हविष्कृत् सैव खलु यज्ञः। तस्य तन्निर्वर्त्यत्वात्। तत् तथा सति एतत् एतेन वागात्मिकाया हविष्कृत आह्वानेन यज्ञमेव पुनराह्वयते ॥११॥ ब्रह्मक्षत्रादिवर्णभेदोपजीवनेन हविष्कृदाह्वानमन्त्रे विशेषमाह। तानि वा एतानि चत्वारीति। वाचः सम्बन्धीनि चत्वारि रूपाणि। कानि पुनस्तानीत्याह। एहीत्यादि। वैश्यस्य हविष्कृदागहीति मन्त्रः। राजन्यबन्धोः क्षत्रियजातेर्हविष्कृदाद्रवेति। आपस्तम्बस्तु राजन्यवैश्ययोर्वैपरीत्येनासूत्रयत्। हविष्कृदेहीति ब्राह्मणस्य हविष्कृदागहीति राजन्यस्य हविष्कृदाद्रवेति वैश्यस्य हविष्कृदाधावेति शूद्रस्येति। एवं पूर्वपक्षतया ब्राह्मणक्षत्रादिप्रयुक्तं विशेषमुपन्यस्य स्वमतं निगमयति। सयदेव ब्राह्मणस्येति। एतद्धेति। एहीत्येतत् खलु यज्ञियतमम् अतिशयेन यज्ञार्हम्। इड एह्यदित एहीत्यादावन्यत्रापि यज्ञे प्रयोगात्। शान्ततममिति। आगह्याद्रवादेः सकाशादेहीत्येतदेवातिशयेन शान्तम्। प्रार्थनावाक्येष्वेहीत्येव सर्वत्र प्रयोगात्। आगह्यादीनां च निकृष्टप्रेषणरूपत्वाच्चेत्यर्थः ॥१२॥ कोऽसौ हविष्कृदिति तं दर्शयति। तद्धेति। पुरा खल्वेतदाह्वानानन्तरं जायैव हविष्कृदुपोत्तिष्ठति। अतस्तदानीं जायैव हविष्कृदभूत्। तत् तस्मादिदानीमप्येतदाह्वानानन्तरं जाया वा अन्यः कोऽपि ऋत्विग्वोपोत्तिष्ठति स एव हविष्कृदित्यर्थः। तदप्युक्तं सूत्रकृता। हविकृदेहीति त्रिराह्वयत्यतः पत्न्यवहन्त्यन्यो वेति। ( का० श्रौ० २-४ ) हविष्कृदाह्वानसमये दृषदुपलयोः शम्यया समाहननं विधत्ते। स यत्रैष हविष्कृतमुद्वादयतीति। समाहननजनितां वाचं प्रशंसितुमनुवदति। तद्यदिति ॥१३॥ अथ यज्ञायुधध्वनेर्यज्ञविघातकासुरराक्षसादिनिवृत्तिहेतुतामुपपादयितुमितिहासमुदाहरति। मनोर्हवा इति। पुरा खलु मनोः सम्बन्धिन ऋषभस्य प्रश्वासाद्वाच यज्ञविघातिनोऽसुरराक्षसादयो बाध्यमानतां गताः। ते च परस्परं संवादं कृतवन्तः। हेति खेदे। अयमृषभो नोऽस्माकं पापं निकर्षं पराजयं सचते प्रापयति कथं खलु इमं हिंस्म इति। एवं संवादे कृते किलातश्चाकुलिश्च द्वावसुरपुरोहितौ बभूवतुः ॥१४॥ तयोर्व्यापारमाह। तौ होचतुरिति। श्रद्धैव देवो यस्य स श्रद्धादेवः। श्रद्धालुरित्यर्थः। आवं नु वेदावेति। आवामस्य मनोरभिप्रायं जानावहा इत्यर्थः। प्रथमायाश्च द्विवचने भाषायामिति (पा० ७-२-८८) भाषायामेवात्वविधानादावमिति ह्रस्वोच्चारणम्। विद ज्ञाने इत्यस्माल्लोटि उत्तमद्विवचने वेदावेति रूपम्। मनो याजयावेत्यादि। हे मनो त्वामनेन ऋषभेण याजयावेति। श्रद्धालुं मनुं विप्रलभ्य तमृषभमवधिष्टामिति तात्पर्यार्थः ॥१५॥ सा मनोरेव जायां मनावीं प्रविवेशेति। मनोर्भार्या मनावी। मनोरौ वा (पा० ४-१-३८) इत्यौत्वम्। पुंयोगलक्षणो

ङीप् तस्यै ह स्म यत्र वदन्त्यै शृण्वन्तीति । तस्यै । षष्ठ्यर्थे चतुर्थी । यत्र यस्मिन्देशे वदन्त्यास्तस्याः शब्दं शृण्वन्ति ततस्तस्मात्स्थानादसुरादयो बाधिताः पलायन्ते इत्यर्थः । पापीयः सचत इति । तिर्यग्जातेर्ऋषभस्य ध्वनिश्रवणात्प्रागस्माकं निकर्षमात्रं प्राप्तमिदानीं तु मनुष्यशरीरान्निर्गतवाचः श्रवणादस्माकं पापीयोऽतिशयितं पापं पराजयः प्राप्नोति । इममेवातिशयमुपपादयति । भूयो हि मानुषी वाग्वदति इति । तिर्यग्वाचः सकाशाद्भूयो बहुतरं हि मानुषी वाग् वदति । वर्णपदवाक्यात्मना कस्यचिदर्थस्य प्रतिपादकत्वात् । एतदाकर्ण्य तावेव पुरोहितावस्यापि प्रतिक्रियां चक्रतुरित्याह किलाताकुली हैवोचतुरिति ॥१६॥ सा यज्ञमेवेति । असुरघ्नी या वाक् क्रमेण मनोर्ऋषभे जायायां चासीत् सा तयोर्हननान्निराश्रया सती यज्ञमेवाश्रयितुं यज्ञपात्राणि प्रविवेश । ततस्तेभ्यो यज्ञपात्रेभ्यः सकाशादेनां वाचं निर्हन्तुं निर्गमयितुं न शेकतुरसुरपुरोहितौ । सैषा यज्ञपात्रगताऽसुरघ्नी वाक् शम्यया समाहननादुद्गच्छति । यज्ञपात्रध्वनेरसुरराक्षसादिनिवृत्तिहेतुतां प्रतिपादितामुपसंहरति । सयस्येति ॥१७॥ विहितं समाहननमनूद्य मन्त्रं विधत्ते । समाहन्ति कुक्कुटोऽसीति । मधुजिह्व इति विशेषणस्याभिप्रायमाह सयोदेवेभ्य इति । स खलु ऋषभो देवानां मधुजिह्वो मधुरवागासीत् जयहेतुत्वात् । असुरेभ्यस्तु विषजिह्वो विषवागासीत् । पराजयहेतुत्वात् । एवञ्च मधुजिह्वविशेषणस्यायमभिप्रायो देवानां यादृश आसीस्तोऽस्माकं तादृशो भवेति । इषमूर्जमावहेत्यादिमन्त्रशेषस्य स्पष्टार्थतामाह । नात्रेति । अत्रास्मिन्मन्त्रे किमपि तिरोहितं नैवास्ति अतो न व्याख्यायत इत्यर्थः ॥१८॥ अथ समन्त्रकं शूर्पाधानं विधत्ते अथेति । शूर्पस्य वर्षवृद्धत्वमुपपादयति । यदि वेणूनां यदीषीकाणामिति । जलप्रान्ते वर्तमानास्तृणविशेषा नडाः । नडादीनि द्रव्याणि शूर्पस्योपादानभूतानि । वर्षमुदकवृष्टिरेव हि एता नडाद्या ओषधीर्वर्धयति अतो वर्षवृद्धत्वाच्छूर्पस्य वर्षवृद्धमसीति व्यपदेशः ॥१६॥

॥ २ ॥

१·२·५·१—७

इत्थं स्तम्बयजुर्हरणं विधाय वेदिपरिग्रहं वक्तुमितिहाससुपन्यस्यति । देवाश्चेति । पस्पृधिरे स्पर्धां कृतवन्तः । अपस्पृधेथामानृचुरानृहुः० (पा० ६-१-३६) इति सम्प्रसारणनिपातनस्योपलक्षणत्वमभिप्रेत्य लिट्यपि संप्रसारणं कृतम् । स्पर्धमानानां तेषां मध्ये देवास्ततस्तेभ्योऽसुरेभ्योऽनुव्यमनुगमनं न्यग्भूति प्राप्ता इव बभूवुः । अथ ह । अनन्तरमेव तेऽसुरा मन्यन्ते स्म । किमिति । इदं सर्वं जगदस्माकमेवेति ॥१॥ एवमुक्त्वा किमुक्तवन्त इति तद्दर्शयति ते हेति । हन्त हर्षे । यत एवं देवान्यग्भूता अतो निष्प्रत्यूहं वयमिमां पृथिवीं विभजा-

महै विभज्य च तां यथाभागमुपजीवामेति । एवमुक्त्वा किं कृतवन्त इति तदाह । तामिति । औक्षणैरानडुहैरुक्ष्णोऽनडुहः सम्बन्धिभिश्चर्मभिः । उक्षन्शब्दात्तस्येदम् (पा० ४-३-१२०) इत्यणि षपूर्वहन्धृतराज्ञामणि (पा० ६-४-१३५) इत्यलोपः । तैश्चर्मभिः पश्चात्प्रतीचीं दिशमारभ्य प्राञ्चः प्राङ्मुखा विभजमाना अभीयुरभिजग्मुरित्यर्थः ॥२॥ असुरेष्वेवं कृतवत्सु देवाः किं कृतवन्त इति ।तदाह । तद्वा इति । प्रेतेत्यादि । अस्माकं तूष्णीमवस्थानमनुचितम् । अस्माभिरपि तद्विषये प्रयतितव्यमिति परस्परमभिमुखीकृत्येत्यर्थः प्रतिपाद्यते । हे देवा यूयं प्रेत गच्छत । प्रोत्सहध्वमिति यावत् । यस्मिन् स्थाने असुराः पृथिवीं विभजन्ते तत्स्थानं गमिष्यामः । गत्वा च यत् यदि अस्यै । षष्ठ्यर्थे चतुर्थी । अस्याः पृथिव्याः सम्बन्धि स्थानं न प्राप्नुयामस्ततस्तर्हि वयमभागिनो भवेम । यदि तु प्राप्नुयामस्तदा भागिनः स्याम भवेमेत्यर्थः । एवमालोच्य देवैः कृतं दर्शयति । त इति । यज्ञात्मकमेव विष्णुं पुरतो धारयित्वा ईयुर्गतवन्त इत्यर्थः ॥३॥ गत्वा चासुरान् प्रति किमुक्तवन्त इति तदाह ते हेति । अस्यां पृथिव्यां नोऽस्मानन्वाभजत संयोजयत । नोऽस्माकमप्यस्यां भागो भवत्विति । असुरैः कृतं प्रतिवचनं दर्शयति ते हेति । असूयन्त इव असूयां कुर्वन्त इव । असहमाना इति यावत् । यावन्तं देशं विष्णुर्व्याप्य वर्तते तत्परिमाणं स्थानं युष्मभ्यं प्रयच्छाम इति ॥४॥ असुरैरभिहिते देवास्तदङ्गीचक्रुरित्याह । वामनो हेति । विष्णुर्हि तदानीं वामनः खर्वो बभूव । अत एवासुरास्तेनाक्रान्तं स्थानं प्रयच्छाम इत्यब्रुवन् । अथापि तदसुरैरुक्तं देवा न जिहीडिरे नह्यनादृतं चक्रुः । किन्तु आद्रियन्ते स्मेत्यर्थः । हेड् अनादरे इति धातुः । आदरणप्रकारमाह । महदिति । विष्णुर्हि यज्ञोऽतो यज्ञसम्मितं स्थानमस्मभ्यं दत्तवन्त इति यत् तन्नोऽस्माकं महदधिकम् ॥५॥ एवं विचार्य देवैः कृतं दर्शयति त इति । यज्ञात्मकं विष्णुं प्राञ्चं प्राक्शिरसं निपात्य दक्षिणतः पश्चादुत्तरतश्च गायत्र्यादिच्छन्दोभिः सर्वतः पर्यगृह्णन् ॥६॥ तमिति । तं विष्णुं गायत्र्यादिभिश्छन्दोभिः सर्वतः परिगृह्य पूर्वस्यां दिश्याहवनीयाख्यमग्निं प्रज्वाल्य तेन विष्ण्वात्मकेन यज्ञेनार्चन्तः पूजयन्तः श्राम्यन्तः कर्मानुष्ठानजनितं श्रमं प्राप्नुवन्तश्चेरुः पूर्ववद्ववर्तिरे । चरित्वा च तेन यज्ञात्मकस्य विष्णोराधारभूतेन स्थानेन देवाः सर्वामेवेमां पृथिवीं सम्यगलभन्त । अतो विद्यते लभ्यतेऽनेनेति यज्ञस्थानस्य वेदिनामधेयं निर्वक्ति । तद्यदिति । उक्तं वेद्याः सर्वपृथिवीलाभरूपत्वम् । इदानीं वेदिपृथिव्योस्तादात्म्यविषयामभियुक्तप्रसिद्धिमुदाहरति । तस्मादिति । यत्परिमाणविशिष्टा खलु वेदिस्तत्परिमाणैव पृथिवी कृत इत्याह एतयेति । हि यस्मादेतया वेद्येमां सर्वां पृथिवीमलभन्तातस्तल्लाभहेतुत्वात्ततोऽनन्येत्यर्थः । इत्थं पुरावृत्तमुदाहृत्य प्रकृते योजयति एवं हेति । यथैव हि वेदिपरिग्रहाद्देवा असुरसकाशात्कृत्स्नां

पृथिवीमपहृतवन्तः। एवमेवायं यजमानोऽपि शत्रुसम्बन्धिनीं सर्वां भूमिमपहरति। तांश्च शत्रूनस्याः पृथिव्या निर्भजति निर्भक्तान्निर्भागान्भागरहितान्करोतीत्यर्थः। तस्माद्वायलेषेत्या-दिमन्त्रैः स्फ्येन वेदिं दक्षिणतः पश्चादुत्तरतश्च रेखया परिगृह्णीयादित्यर्थः ॥७॥

॥ ३ ॥

१·४·१·१४—१९

तर्हीति। तस्मिन्समये माथवश्च तापशमनाय सरस्वत्यां नद्यां निमग्नोऽभूत्। सोऽग्नि-स्तस्मात्स्थानादारभ्य प्राङ् दहन्निमां सर्वां पृथिवीमभितो व्याप्नोत्। माथवगौतमावुभावपि दहन्तं तमग्निं पश्चादनुजग्मतुः। स च दहन्नग्निः पृथिव्यां यावत्यो नद्यः सन्ति ताः सर्वा-नदीरतिशयेन ददाह शोषयामास। प्राचीनं दहतोऽस्य पुरस्तात्सदानीरा नाम नदी उत्तरात् उदक्प्रवाहा एति गच्छति। तया च व्यवहितः सोऽग्निः। एनमग्निं सापि निःशेषेण धारयति इतस्ततो गमनं निवार्य धारितवतीत्यर्थः। सचाग्निस्तां नदीमितरनदीवन्नातिददाह। अत एव सदा सर्वदा नीरं जलमस्यामस्तीति व्युत्पत्त्या सदानीरेत्युच्यते। तथाच निघण्टुः। करतोया सदानीरा बाहुदा सैतवाहिनीति। तां ह नदीं पुरा तद्दहनोत्तरकाले ब्राह्मणा न तरन्ति न स्पृशन्ति। अग्निदाहाभावेनाविशुद्धत्वात्। इति हेतुमाह। अनतिदग्धेति ॥१४॥ तत एतर्हीति। ततस्तस्या नद्याः प्राचीनं प्राग्देशमेतर्हीदानीं बहवो ब्राह्मणा निव-सन्ति। अत्यन्तसंयोगे द्वितीया। प्राग्देशः सर्वोऽपि ब्राह्मणवास इत्यर्थः। तत्र स्थानम-क्षेत्रतरमिव अतिशयेन निवासायोग्यमिवास बभूव। तथा स्रावितरं भग्नभाण्डे निक्षिप्त-नीरवत्तद्देशेऽनुष्ठितं यज्ञदानादिकमतिशयेन स्रावि स्रवणशीलं फलप्रदानासमर्थं बभूवेत्यर्थः। तत्र हेतुमाह। अस्वदितमिति। यतो वैश्वानरेणाग्निनाऽस्वदितमनास्वादितम्। अत-स्तत्स्थानमपवित्रमित्यर्थः ॥१५॥ अस्य दोषस्य परिहारमाह तदुहेति। एतर्हि एतस्मि-न्समये तदपि स्थानं क्षेत्रतरं निवासयोग्यमेव भवति। कुत इत्यत आह ब्राह्मणा उहीति। नूनमिति। निश्चये। हि यस्मादेनत्स्थानं ब्राह्मणा यज्ञैरसिष्वदन् यज्ञानुष्ठानै-रग्निनाऽऽस्वादितमकुर्वत। तस्मादित्यर्थः। सा च नदी जघन्ये निकृष्टे सर्वरसवर्जिते नैदाघे ग्रीष्मसम्बन्धिकालेऽपि सम्यक् कोपयति बहुलया प्रकुपिता भवति। तावत्पर्यन्ते। हि काले वैश्वानरेणाग्निना दग्धा। तदा च तं निवारयितुं तस्याः प्रकोपो जात इत्यर्थः ॥१६॥ सहोवाचेति। एवं सर्वेषु देशेषु दग्धेषु स च माथवोऽग्निमेव प्रतीच्योवाच क्व कुत्र देशेऽहं भवानि निवसेयमिति पृष्टे सोऽप्यग्निरेनमुवाच। किमिति। अतोऽस्या नद्याः प्राचीनं यद्भुवनं भूमिः। एतदेव ते तव निवासोऽस्तु इति। अत एव कारणादेतस्मिन्नपि काले सैषा

सदानीरा नदी कोसलदेशस्य विदेहदेशस्य च मर्यादात्वेन दृश्यते। हि यस्मादेवं माथवा याग्निरदात्। तस्मात्ते विदेहदेशा अपि माथवा इत्युच्यन्ते ॥१७॥ उक्तं वृत्तान्तं गोतमेन पृष्टः सन्विदेहोऽनुवदति। अथ होवाचेत्यादिना। परोक्षत्वात्पूर्वं श्रुतिवाक्ये लिट्प्रयोगः। गोतममाथवयोः प्रश्नप्रतिवचनरूपवाक्ये तु भूतायतनत्वाल्लुङ्प्रयोगो विशेषः ॥१८-१९॥

॥ ४ ॥

१·६·३·१—१७

अग्नीषोमीयमेकादशकपालं विधातुमाख्यायिकामाह। त्वष्टुर्ह वै पुत्र इति। पुरा किल त्वष्टुशिरस्त्रयेण युक्तः कश्चित्पुत्रो बभूव। यतोऽयमुक्तरीत्या बहुरूपोऽतः स विश्वरूप इत्यन्वर्थनामाभूत् ॥१॥ तस्येति। तस्य शिरस्त्रयगते मुखत्रये मध्ये एकं मुखं सोमपानम्। सोमः पीयतेऽनेनेति करणे ल्युट्। सोमपानायाभूत्। अन्यन्मुखं सुरापाणं सुरापानसाधनम्। वा भावकरणयोः (पा०-८-४-१०) इति णत्वम्। अन्यस्मै पानव्यतिरिक्तायाशनाय भोजनायैकं मुखमासीत्। तं विश्वरूपं दृष्ट्वा इन्द्रो दिद्वेष द्वेषमकरोत्। द्वेषणं तैत्तिरीयके समाम्नातम्। स प्रत्यक्षं देवेभ्यो भागमवदत् परोऽक्षमसुरेभ्य इति। स क्रुद्ध इन्द्रस्तानि त्रीण्यपि शिरांसि प्रचिच्छेद ॥२॥ स यत्सोमपान इति। तेषु त्रिषु मुखेषु यत्सोमपानाय मुखं ततः कपिञ्जलः पक्षी समभवत्। कपिञ्जलः कपिरिव जीर्णः कपिरिव जवत ईषत्पिङ्गलो वेति (नि०३-१८) यास्कः। उक्तार्थविश्वासाय पक्षिणः सोमस्य च साम्यमाह तस्मात्सबभ्रु क इवेति ॥३॥ अथ यत्सुरा पाणमिति। तथा कलविङ्कोऽपि शब्दयति। अतस्तत्तदुत्पत्तिर्युक्ता ॥४॥ अथ यदन्यस्मा इति। अथ पानादन्यस्मा अशनाय यन्मुखं ततस्तित्तिरिः। यतो बहुरूपान्नभक्षकान्मुखात्सम्बभूवातः सोऽत्यन्तं बहुरूपवानिव दृश्यते। कथं तस्य तथात्वमिति दर्शयति। सन्त्येवेति। त्वच्छन्दस्त्वशब्दसमानार्थः सर्वनामसु विकल्पेन पठितः। त्वदेकस्मिन्नङ्गे घृतस्तोका इव घृतबिन्दव इव परिदृश्यन्ते। तथा त्वदेकत्र मधोर्बिन्दव इव। एतदपि कुत इत्यत आह। पर्णेषु चटकपक्षेषु आश्चुतिता आक्षरं प्राप्ता बहुरूपाणि दृश्यन्ते। कार्यगतं वैरूप्यं तत्कारणेऽपि सम्भवति। एवंरूपमिव। घृतस्तोकादिरूपमिव खलु सः। तेन मुखेनाशनं जठरमावयत्। अवतिरत्र गत्यर्थः। अगमयत् ॥५॥ सत्वष्टेति। एवं पुत्रशिरस्सु छिन्नेषु त्वष्टा असाविन्द्रो मे पुत्रं कुविद्बहुप्रकारमवधीदिति क्रुद्धो भूत्वाऽपेन्द्रमेव इन्द्रेण विरहितमेव सोममाजह्रे। सच सोमो यथाऽपेन्द्रः प्रसुत एवं प्रदानेऽप्यपेन्द्र एवाभूत् ॥६॥ इन्द्रोहवा इति। सचेन्द्र इदमेव सर्वेऽपि मा सोमाद् व्यवहितं कुर्वत इति विचार्य यथा प्रबलो दुर्बलस्य धनमननुज्ञात एवापहरति एवमनुपहूत एव द्रोणकलशे शोधितं सोममभक्षयत्। सच भक्षितः सोमः

सात्म्यमाप्नुवंस्तमेव जिहिंस हिंसितवान् पीडामकरोत्। ततः सर्वतो नासायमुख्यप्राणेभ्यो मुखव्यतिरिक्तेभ्यश्च्युतोऽभूत्। अथ कर्कन्ध्वादिपदार्थरूपेण स्रुतेभ्यस्तेभ्यः सकाशात्सौत्रामणी सुत्राम्णः सम्बन्धिनीष्टिर्निष्पन्ना। सोमे स्रुते येन प्रकारेण तमिन्द्रं स्रुतसोमं देवाश्चिकित्सितवन्तस्तत्सर्वं सौत्रामणीप्रकरणे विस्पष्टमाम्नायते ॥७॥ सत्वष्टेति। अथ स त्वष्टा मम सोममप्रसूतमनाकारितमेवापिबदिति क्रुद्धः सन्स्वयमेव नष्टस्य यज्ञस्य यज्ञवेशसं यज्ञहिंसापरिहारं कृतवान्। कथं यो द्रोणकलशे शुक्रः सोमः परिशिष्ट आसीत्तमादाय प्रवर्तयामासेन्द्रशत्रुर्वर्धस्वेत्युच्चार्य हुतवान्। स च हुतः सोमोऽग्निप्राप्तिसमकाल एव पुरुषरूपेण सम्बभूव। केचित्प्रवर्तनसामर्थ्यादग्निमस्पृशन्नेव मध्ये सम्बभूवेत्याहुः। स च सम्भवन्नग्नीषोमावेवाभिव्याप्नुवन्भक्षयन् बभूव। न केवलं जगत्कारणभूतौ तावेव किन्तु लोके या विद्या यद्यशो यदन्नीयमन्नं या च श्रीस्तानि सर्वाण्यभिलक्ष्य भक्षयन्बभूव ॥८॥ स यद्वर्तमान इति। तथा स सम्भवन्वर्तमानः सर्वं व्याप्नुवन्नेव यतः समभवत् तस्मात्तस्य नाम सर्वं व्याप्य वर्तत इति व्युत्पत्त्या वृत्र इति सम्पन्नम्। तथा यस्मादपात् अपादः सन् संभूतस्तस्मात्सर्पणसाम्यादहिरित्यपि तन्नामासीत्। तं दनुश्च दनायूश्च मातृपितृस्थानीयौ भूत्वा रक्षणाय परिजगृहतुः। यस्मात्तौ परिजगृहतुस्तस्माद्दानव इत्याहुः सर्वे जनाः ॥९॥ अथ यदब्रवीदिति। तथा स त्वष्टा प्रहप्रचारसमये इन्द्रशत्रुरिति पूर्वपदोदात्ततया इन्द्रः शत्रुर्यस्येति बहुव्रीहिसमासं कृत्वा मन्त्रं प्रयुक्तवानतस्तमिन्द्रो जघान। यद्यसावन्तोदात्ततया तत्पुरुषसमासेन वा इन्द्रस्य शत्रुरिति व्यस्तनिर्देशेन वा ब्रूयात्तदा निश्चितमेव स इन्द्रं हन्यात् ॥१०॥ अथ यदिति तथा वर्द्धस्वेति प्रयोगसामर्थ्यात् स वृत्र इषुमात्रमिषुमात्रं धनुषः सकाशाद्बलात्प्रमुक्तेषुर्यावद्दूरं गच्छति तावन्मात्रं प्रतिक्षणं तिर्यङ्ङुभयपार्श्वतो वर्धते। प्राङ् हि इषुमात्रमवर्धत एतत्पश्चाद्वृद्धेरप्युपलक्षणम्। अवरं पूर्वं च समुद्रं तथा प्राक्पश्चात्समुद्रावपि अवदधौ शरीरवृद्धया अवाक् चकारेत्यर्थः। यावद्यावत्प्रवृद्ध आस तावत्तावत्प्रवृद्धोऽन्नभक्षक एवाभूत् ॥११॥ तस्मै ह स्मेति। एवं बह्वाशिने तस्मै देवा मनुष्याः पितरश्च पूर्वमध्यन्दिनापराह्णेषु क्रमेण सर्वतोऽशनं प्रयच्छन्ति ॥१२॥ स वा इन्द्र इति। इन्द्रस्तु वृत्रशरीरवृद्धिक्रमानुसारेणैवेषदीषत्प्रणुन्नो दूर एव चरन्नोदनमसहमानो वृत्रमनुगतावग्नीषोमाविच्छन्नुपमन्त्रयामास। कथम्। हे अग्नीषोमौ युवां मम स्वं भवथः। युवयोरहं स्वं भवामि। यथाहं युवयोस्तथैव वृत्रो न किञ्चन किमपि न भवति अतः कं कीदृङ्महत्त्वोपेतं दस्युं वर्धयथ। अतोऽमुं परित्यज्य मां प्रत्युपावर्तेथाम्। इतिशब्द उपामन्त्रणप्रकारसमाप्त्यर्थः ॥१३॥ तौ हो चतुरिति। अथ ताविन्द्रमूचतुः। ततो वृत्रवदननिर्गमनादावयोः किं फलं स्यात् इति। स एवमुक्तस्ताभ्यामेतमिदानीं विधीयमानमेकादशकपालं पुरोडाशमग्नीषोमदेवताकं कृत्वा निरुप्तवान्। तयोरिदमिति कल्पितवानित्यर्थः।

इदानीं तं यागं विधत्ते । तस्मादिति । अग्नीषोमौ देवते यस्य सोऽग्नीषोमीयः । एकादशसु कपालेषु संस्कृतः पुरोडाश एकादशकपालः । स भवति भवेत् । पौर्णमास्यां कर्त्तव्यः ॥१४॥
तावेनमिति । अथ तौ एनमिन्द्रं प्रत्युपावृत्तावभूताम् । तावनु सर्वेऽपि वृत्रमुखान्तर्गता देवाः प्रेयुर्निरीयुः । तथा वृत्रेण भक्षिता वियायशोऽन्नश्रियः सर्वा अपीन्द्रं प्रति निर्गताः । यदिदानीं परिदृश्यमानप्रकारमिन्द्रस्य सर्वाधिपत्यमस्ति तत्तेनाग्नीषोमीयैकादशकपालयागेनेष्ट्वाऽभवत् । उक्तमर्थं निगमयति । एष उ इति । एष एव त्वष्टुर्ह वा इत्याद्युपक्रम्य तेनेष्ट्वेन्द्र एतदभवदित्यन्तेनोक्त एव पौर्णमासस्य पौर्णमास्यामसाधारण्येनानुष्ठेयस्य हविषो बन्धुर्बन्धकोऽर्थनियामक एतदेव ब्राह्मणमित्यर्थः । विहितमर्थमनूद्य प्रशंसति । यो हैवं विद्वानिति । अत्र यद्यपि पौर्णमासीशब्देन कालवाचिना तत्कालक्रियमाणं सर्वं कर्माश्रयणीयं तथाप्याग्नेयाष्टाकपालस्य साधारण्याद्वाक्यशेषे श्रीप्रभृतेरेव फलत्वेन श्रवणाच्च अग्नीषोमीय एकादशकपाल एव परिगृह्यते । यो यजमान एवमुक्तमर्थं विद्वाञ्जानन् पौर्णमासेन पौर्णमास्यां क्रियमाणेनाग्नीषोमीयेन यजतेऽनुतिष्ठति स एतामिन्द्रेणानुभूतां श्रियं तथाविधं यशोऽन्नं च प्राप्नोति ॥१५॥ तद्वै खल्विति । अथ तदानीमग्नीषोमादिनिर्गमनानन्तरमेव वृत्रो हतो निष्पीतो दृतिरिव चर्मनिर्मितपात्रमिव स यथा सँल्लीनः सङ्कुचितकुक्षिरिति एवं सँल्लीनो भूमावशयिष्ट । यथा निर्धूतसक्तुका भस्त्रा चर्ममयी सँल्लीना तद्वत् सँल्लीनः शेते । कुक्षिगतानां सक्तुस्थानीयानां देवानामुदकस्थानीयानामसृगादीनां च स्रावाद्दृष्टान्तद्वयाभिधानम् । अथ शयानं वृत्रं हननेच्छयेन्द्रः शीघ्रमाजगाम ॥१६॥
स होवाचेति । तं दृष्ट्वा वृत्रोऽब्रवीत् । इदानीमेतत्सर्वं त्वमेव भवसि पूर्वं यदहं सर्वमभवम् । अतो व्याकुर्वेव शरीरं विविधम् आ सर्वतो भग्नपर्यन्तं कुरु विदारयेत्यर्थः । अमुयेदानीमनुभूयमानप्रकारया स्थित्या मा भूवं सर्वदा न भवामि इति । स एवमुक्त इन्द्रस्तर्हि ममान्नं भवेत्युवाच । तथास्त्विति उक्तम् । तमिन्द्रो द्वेधाऽन्वभिनत् तदनुक्रमेण व्यदारयत् । तेन यत्सौम्यं श्रेष्ठं श्रुतमासीत्तं चन्द्रमसं चकार । प्रतिनिर्देशापेक्षया पुंल्लिङ्गता । यदसुर्यमसुरेभ्यो हितमुच्छिष्टमासीत्तेनेमाः सर्वा अपि प्रजा उदरप्रदेशेनाविध्यत् तद्रूपेणोपस्थापयामासेत्यर्थः । यस्मादेवं तस्माद्यः कश्चिद्यदि बह्वन्नं भक्षयेत् तर्हि तदा सर्वेऽपि जना इदानीं वृत्र एतर्ह्यन्नाद आसीदित्याहुः । प्रसिद्धेः सार्वत्रिकत्वप्रदर्शनाय दृष्टान्तः । उक्तमर्थं समर्थयते एतर्हीति । असौ चन्द्रः पूर्वपक्षे आपूर्यत इति यत्तदिदं हि । किमिदं तदाह अस्माल्लोकादेव चन्द्र आप्यायते । अस्माल्लोकाच्चन्द्रस्याप्यायनप्रकारश्चोपरिष्टाद्वक्ष्यते तदेनमद्भ्य ओषधीभ्यः सम्भृत्याहुतिभ्योऽधिजनयति स एष आहुतिभ्यो जातः पश्चाद्ददृश इति । यदेमा बुभुक्षिताः प्रजा अशनमिच्छन्ति तदा अस्मा एव वृत्राय । षष्ठ्यर्थे चतुर्थी । वृत्ररूपायोदरायैव बलिं हरन्ति । अतो वृत्रभागविशेषस्यान्नरूपेण स्थापनं युक्तमित्यर्थः । स यो हैवमिति । ज्ञानफलम् ॥१७॥

॥ ५ ॥

१·७·२·१·५

अवदानस्वरूपं विवक्षुराख्यायिकामाह ऋणं हेति। यो द्विजातिः स जायमान एव देवादिभ्यश्चतुर्भ्योऽपि ऋणवानाधमर्णिको जायते। ऋणित्वे जननमेव निमित्तमित्यर्थः ॥१॥ सङ्क्षेपोक्तं विवृणोति। स यदेवेति। यजेतेति यत्तेन कारणेन यागेन निमित्तेन देवेभ्यस्तदृणं जायते। हि यस्माद्यागकर्मभ्य एभ्यो देवेभ्य एतदिदानीं करोति। अतस्तेभ्यस्तदृणमित्यर्थः। तच्छब्दार्थमाह यदेनानिति। यागहोमावुभावपि नियमेन देवार्थमेव यतः क्रियेते अतस्तेषां तौ स्वम्। तस्यावश्यप्रदानत्वादृणी जायते इत्यर्थः। एवमुत्तरवाक्यान्यपि योजनीयानि ॥२॥ अथेति। अनुब्रुवीतानुवचनं कुर्यात्। अधीयीतेत्यर्थः। निधिगोप इतीति। उपभुज्यमानोऽपि यो न विनश्यति स निधिः। तादृश ऋषीणां सम्बन्धी यो वेदाख्यो निधिस्तस्य गोपायितेति वेदमनूच्यमानमाहुर्बुधाः। अतस्तेषां प्रवचनं धनमिति गम्यते ॥३॥४॥ अथ यदेवेति। वासयेत गृहेऽन्नादिप्रदानेनेदानीमवकाशं प्रयच्छेत्। यो जायमानो ब्राह्मण एतानि यागवचनादीनि सर्वाण्यपि करोति स कृतकर्मा कृतकृत्यः। तस्य आनृण्यं सर्वमाप्तं भवति देवादि सर्वस्थानं सर्वं जेतव्यं जितं भवति ॥५॥

॥ ६ ॥

१·८·१·१·६

मनवे ह वै। इडाब्राह्मणमेतत्। तत्रेडायां मानवीमिडां देवतां वक्तुं मानवी घृतपदी मैत्रावरुणीत्येतानि च निगदपदानि व्याख्यातुमितिहासः प्रवृत्तः। स चेतिहासः प्रसन्न एव। किञ्चित्तु दर्शयामः। मनवे वैवस्वताय। तादर्थ्ये चतुर्थी। अवनेज्यते हस्तायनेनेत्यवनेग्यम्। करणे कृत्यः। आजहुरानीतवन्तः परिचारकाः। यथेदमधुना पाणिभ्यां हस्तार्थं यदवनेजनं तस्मा आहरन्ति तथा आजह्रुः। तस्य मनोः प्रक्षालयतो मत्स्यः पाणी प्राप्तः। भाविनोऽर्थस्य सिद्ध्यर्थं देवतैव मत्स्यरूपेणाजगाम ॥१॥ स हास्मै। स मत्स्योऽस्मै मनवे वाचमुदितवान्। कीदृशीम्। बिभृहि पुष्णीहि मा माम्। किमर्थम्। पारयिष्यामि। पाल रक्षणे। रक्षिष्यामि त्वेति। कस्मादिति भयहेतुप्रश्नः। वहतोत्यौघ उदकसंघातः। स इमा भरतवर्षनिवासिनीः प्रजा निःशेषं वोढा देशान्तरं प्रापयिता। तस्माद्भयहेतोस्त्वा पालयितास्मि इति मत्स्यवचः। कथम् इति मनोः प्रश्नः। कथं तव भृतिर्भरणं पुष्टिरिति ॥२॥ स होवाच। क्षुल्लकाः क्षुद्रका अल्पकाः। नाष्ट्रा इति। गिलति। गॄ निगरणे। निगिरति। बिभरासि। अभ्येषणायां लिङर्थे लेट्। विभृयाः पुष्णीयाः। एवमेवाभ्यवहरासि उपासासै

आपयासै इति व्याख्येयानि । अतिवर्द्धे । अतिरिच्य वर्द्धितास्मीति प्राप्ते । यदाययोर्लिङ उपसंख्यानम् (पा० ३-३-१४७)। ततश्च लिङर्थे लेट् (पा० ३-४-७) इति यदायोगे लेट् । कर्षूः खातिकाः । अतीतो नाष्ट्राम्नाशयितॄनित्यतिनाष्ट्रः ॥३॥ शश्वद । शश्वच्छब्दोऽत्र सामर्थ्यात्क्षिप्रवचनः । झषो महामत्स्यः । क्षिप्रमेव महामत्स्योऽत्रावर्ततेत्यर्थः । अथ कस्मात्स शीघ्रमेव महामत्स्यः संवृत्तः । हि यस्मात्स ज्येष्ठं बृहत्तमं वर्द्धते। सर्वे एव हि जलचरा अतिशयेन वर्धन्ते । स तु मत्स्यत्वादनाष्ट्रत्वाच्च बृहत्तमं वर्द्धत इति श्रुतिवचनम् । अथेतिथीमिति मत्स्यवचनम् । अथ मयि समुद्रमभ्यवहृते इतिथीमिति अभिनयः । तेन सङ्ख्येयाः समा दर्शितवान् । इयतीनां दशानां द्वादशानां वा पूरणी इतिथी । इदम इशादेशश्छान्दसः । टित्त्वान्ङीप् । इयत्यस्तिथयो यस्यां सेतिथीति केषुचित्कोशेषु । तेष्वपि इयतिथीं यावतिथीं तावतिथीमिति प्राप्ते छान्दसो यशब्दवशब्दलोपः । समा संवत्सरः । तां समाम् । समायामित्यर्थः । तत् स इति लिङ्गव्यत्ययः । स पूर्वोक्त औघ आगन्ता । तत्तदा नावमुपकल्प्य मामुपासासै उपासीथाः । औघे चोत्थिते तां नावं त्वमापद्यासा आरोहेरित्यर्थः ॥४॥ तमेवं भृत्वा । यावतीनां पूरणीं यतिथीं परिदिदेश परिदिष्टवान् आख्यातवान् ततिथीं तावतीनां पूरणीं समाम् । नावमुपकल्प्य मत्स्यमुपासितवान् । औघे चोत्थिते नावमधिरूढः । तं च मनुं स मत्स्य उप समीपे नीः । एनमुपकर्णमिति सम्बन्धः । आपुप्लुवे आगतः । तस्य मत्स्यस्य शृङ्गे भवितव्यतयैव निष्पादिते नावः पाशं प्रतिबद्धवान् । तेन पाशेन सह मत्स्य एतमुत्तरं गिरिं हिमवन्तमधिजगाम ॥५॥ स होवाच । मत्स्यवचनम् । पारितवानस्मि त्वाम् । अधुनात्र वृक्षे नावं प्रतिबध्नीष्व । किञ्चापरम् । गिरौ सन्तं त्वा त्वामुदकमन्तश्छैत्सीत् तद्देशमध्यं भित्त्वा पृथगकार्षीदिदमस्माद्देशादित्यर्थः । कथं पुनस्तां नावं छिनत्सि । यावद्यावदुध्वन उदकं समवायात् एकीभावायावाधोऽयाद्गच्छेत् । अवतरेदित्यर्थः । तावत्तावत्त्वमपि तदेवोदकमनु अवसर्पासि । अवतरेः । स मनुः प्राप्ते काले तावत्तावदेवान्ववससृपः । येन च वर्त्मना मनुरवसृप्तः तदद्यत्वेऽपि एतदुत्तरगिरेर्मनोरवसर्पणमित्याहुरिति शेषः । अवसृप्तोऽनेनेत्यवसर्पणम् ॥६॥

॥ ७ ॥

२·१·२·१-१९

कर्मणः कालसापेक्षत्वादाधानस्य नक्षत्रं विधत्ते । कृत्तिकास्वित्यादिना । अग्नी गार्हपत्याहवनीयावित्यर्थः । अग्निदेवताकत्वादग्निनक्षत्रं कृत्तिकाख्यम् । श्रूयते हि कृत्तिकानक्षत्रमग्निर्देवतेति (तै० ब्रा० १-१-२-१)। तस्मिन्नग्निनक्षत्रेऽग्न्याधानं सलोम सदृशं योग्यमिति यावत् ॥१॥ अथैतदस्य नक्षत्रस्य बहुत्वोपजीवनेन प्रशंसति । एकमिति । कृत्तिकातोऽन्यानि नक्षत्राणि

एकद्वित्रिचतुःसङ्ख्याकाधिष्ठानान्यल्पीयांसि कृत्तिकास्तु षट्सङ्ख्याधिष्ठानयोगाद्भूयिष्ठा बहुतराः। तत्रार्द्रादीनामेकमधिष्ठानम्। फल्गुन्यादीनां द्वे अश्विन्यादीनां त्रीणि पुनर्वस्वादीनां चत्वारि। तत्तस्मादेभ्यो भूयिष्ठनक्षत्राधानाद्यजमानोऽपि भूमानं बहुत्वमेवोपगच्छतीत्यर्थः ॥२॥ नियतदिक्सम्बन्धवशेनैताः प्रशंसति। एता ह वा इति। प्राच्यै प्राच्या दिशः सकाशान्न च्यवन्ते दक्षिणत उत्तरतो वा विक्षेपवशान्न चलन्ति किन्तु नियमेन शुद्धप्राच्यामेवोद्यन्ति। अन्यानि तु नक्षत्राणि प्राचीदिग्भागाद्दक्षिणत उत्तरतो वा विक्षेपवशाच्चलन्ति। प्राचीदिग्भागाद्दक्षिणत उत्तरतश्च नियमेन परिवर्तन्ते। तत प्राच्यामित्यादि। निगदसिद्धम् ॥३॥ कृत्तिकास्वाधानपक्षं मिथुनव्यृद्धिहेतुत्वान्निषेधति। अथ यस्मादिति। यस्माद्वक्ष्यमाणदोषोऽस्ति तस्मात्कृत्तिकासु नादधीत। कोऽसौ दोषः। तमुपन्यस्यति। ऋक्षाणां हेति। ऋक्षशब्दार्थमाह। सप्तर्षीनिति। ऋक्षं नक्षत्रं तद्रूपेणावस्थानात्। इह ऋक्षशब्देन सप्तर्षयोऽभिधीयन्ते। पुरऋक्षा इति प्रकृतिभावो ह्रस्वश्च। व्यार्ध्यन्त। विगतऋद्धिका अभवन्। व्यृद्धिमेव देशभेदोदयेन स्पष्टयति। अमी होति। अमी खलु सप्तर्षय उत्तराहि। आहि च दूरे (पा० ५-३-३७) इत्याहिप्रत्ययः। दूरदेशे उत्तरभागे उद्यन्ति। एताः कृत्तिकाः पुरः पूर्वस्यां दिशि। अत एव तासां विभिन्नदेशावस्थानेन पुरुषसम्भोगविरहान्मिथुनव्यृद्धिः। तच्चासमोचीनमित्याह। अशमिव वै तदिति। अतः कृत्तिकास्वाधानं कुर्वन्नपि तद्वन्मिथुनेन व्यृध्यतेऽतो नेन्नैवाहं मिथुनेन व्यृध्यै व्यृद्धो भवानीत्यभिप्रेत्य तत्र नादधातीत्यर्थः ॥४॥ अथैतद्दोषं परिहरन्नाधानपक्षमेव निगमयति। तद्वेवेति। तद् उ आ एव। तस्मिन्नपि नक्षत्र आदधीतैव। अग्निर्वा इत्यादि स्पष्टम् ॥५॥ नक्षत्रान्तरं विधाय प्रशंसति। रोहिण्यामिति। आदधे। आधानं कृतवान्। उपस्तब्धाः प्रतिबद्धगतयो विनाशरहिताः पुत्रपौत्रादिरूपेणैकरूपा अविच्छिन्नप्रवाहास्तस्थुः। स्थितवन्तः। ताश्च रोहिण्यः स्वर्गादिलोकारोहणसाधनभूता इति स्थिताः। एतदुपजीवनेन नामनिर्वचनं करोति। तद्वा इति। स्पष्टार्थमन्यत् ॥६॥ रोहिण्याधानं प्रकारान्तरेण प्रशंसति। रोहिण्यामु हेति। मनुष्याणां कामं रोहेमेति। मनुष्याणां कामो भोग्यवस्तुविषयः। तत्पूरणसामर्थ्ययोगेन तं प्राप्नुयामेत्यर्थः। यमु हैवेति। रोहिण्याधानेन काम्यमानभोग्यवस्तुजातपूरणसामर्थ्ययोगान्मनुष्येष्ववस्थितं यमु यमेव कामं प्राप्नुवन् तमेव पशुषु अवस्थितं रोहिण्यामाधानेन प्राप्नोति। एतमेव सर्वे जना उपजीव्यत्वेन कामयन्त इति भावः ॥७॥ नक्षत्रान्तरं विधाय प्रशंसति। मृगशीर्ष इति। पुरा खलु प्रजापतिर्मृगरूपमास्थाय मृगीभूतां स्वदुहितरमप्यागमत्। एतद्वा इति। एतज्ज्ञात्वाऽकार्यकारिणः प्रजापतेः शिरश्छेत्तुं देवाः कश्चित्क्रोधमयं पुरुषं निर्माय प्रत्यतिष्ठन्। स चेषुणा तस्य शिरश्चिच्छेद। तच्च मृगशरीरमिषुश्छिन्नशिर-

श्चेत्येतदुभयमन्तरिक्षमुत्प्लुत्य नक्षत्रात्मनावस्थितं सन्दृश्यते। तथा चैतरेयकम् (ऐ० ब्रा० १३-९)। प्रजापतिर्वै स्वान्दुहितरमभ्यध्यायदित्युपक्रम्य सो एवेषुस्त्रिकाण्डा इत्यन्तेनायमर्थः प्रतिपादितः। ईदृशी श्रुत्यन्तरप्रसिद्धिर्वैशब्देन द्योत्यते। श्रीर्वै शिर इत्यादि व्याख्यातम्॥८॥ तदेतन्मृगशीर्षाधानं निषेधति। अथ यस्मान्नेति। मृगशीर्षाधानं न कार्यम्। अत्र हेतुः प्रतिपाद्यत इत्यर्थः। कोऽसौ हेतुः। तमाह। प्रजापतेरिति। मृगशीर्षाख्यस्य नक्षत्रस्य प्रजापतिशरीरत्वमाह। यत्र यस्मिन्समये एनं प्रजापतिं मृगरूपं तत्तेन स्वदुहितृगमनरूपेण दोषेण हेतुना देवा अविध्यन् तत्तदानीं पत्रदारुशल्यरूपावयवत्रयेणोपेतेनेषुणा खलु तच्छिरश्छिन्नम्। इत्याहुर्ब्रह्मवादिनः। स च प्रजापतिस्तदानीमेतच्छरीरं त्यक्तवान्। अतो निरात्मत्वाद् निर्वीर्यं नक्षत्रात्मनाऽवस्थितं मृगशिरो वास्तु शून्यस्थानम। यत एवात्मना त्यक्तम्। अत एव शरीरं विशरणशीलम्। अत एव चायज्ञियं यज्ञानर्हम्। नहि मृगशरीरस्य यज्ञात्मत्वं सम्भवति। तस्मात्तदात्मके मृग-शीर्षाख्ये नक्षत्रे आधानं न युक्तमित्यर्थः॥९॥ इमं दोषं परिहरन्प्रागुक्तमेव पक्षं निगमयति। तद्वैवेति। देवस्येति। मनुष्येण त्यक्तस्य वास्त्वादिरूपत्वम्। अयं हि प्रजापतिर्देवस्तेन त्यक्तस्य तत्त्वाभावाद्वास्त्वादिरूपो दोषो नास्ति। मृगरूपस्य शिरः स्वमहिम्नैव नक्षत्ररूपत्वं सम्पन्नम्। न खलु मानुषं शिरस्तथा भवितुमर्हति। तत्राधाने नोक्तदोष इत्यर्थः। पुनर्वस्वाख्यस्य नक्षत्रस्य लिङ्गवशात्पुनराधेयविषयतामाह। पुनर्वस्वोरिति। आहितानामप्यग्नीनां पुनर्वस्वभिज्ञत्ववशादा-धानं पुनराधेयम्। नक्षत्रं तन्नष्टस्य वसुनः पुनःप्राप्तिहेतुत्वात्पुनर्वस्वाख्यम्। तथा च तैत्तिरीयके (तै० ब्रा० १-१-२-३) स्पष्टमाम्नातम्। स पुनर्वस्वोरग्निमादधीत। पुनरेवैनं वामं वसूपावर्तत इति॥१०॥ फल्गुनीष्वग्नी इति। पूर्वोत्तरफल्गुन्योर्नक्षत्रयोः प्रत्येकमधिष्ठानद्वित्वयोगाद्द्वि-त्वम्। फल्गुनीनामोपजीवनेन प्रशंसति। एता वा इति। कथमस्य नक्षत्रस्येन्द्रसम्बन्ध इत्यत आह। अप्यस्येति। अस्येन्द्रस्य प्रतिनिधिभूताः फल्गुन्यः सम्भाव्यन्ते। अपिः सम्भावनार्थः। प्रतिनिधित्वं च समानशब्दाभिधेयत्वादित्याह। अर्जुनो हेति। अर्जुन इति हीन्द्रस्य रहस्यं नाम। अत एव खलु तत्पुत्रे पाण्डुमध्यमे प्रवृत्तिः। अर्जुनफल्गुनशब्दौ च पर्यायौ। अर्जुनः फल्गुनः पार्थ इति समानार्थपरिगणनात्। अर्जुन्य एवैताः परोक्षेण फल्गुन्य इत्युच्यन्ते। ननु किं पारोक्ष्येणेत्यत आह। कोऽर्हतीति। अतः फल्गुनीशब्दस्य परम्परयेन्द्रोपलक्षकत्वात्तन्नामकं नक्षत्रम्। इन्द्रो वा इत्यादि। स्पष्टम्। फल्गुनीषु पूर्वोत्तर-त्वमुपजीव्य हितमाधानं प्रशंसति। पूर्वयोरित्यादिना। पुरस्तात्क्रतुरिति। पूर्वस्मिन्नागा-मिनि कालेऽग्निष्टोमादिलक्षणः क्रतुः शीघ्रं सिध्यतीत्यर्थः। श्वःश्रेयसमित्यादि। उक्ता-र्थम्॥११॥ हस्तेऽग्नी इत्यादि। निगदसिद्धम्। स्वहस्तेन यत्खलु दानं तदेवानुष्ठ्या अनु-ष्ठानेन समीचीनम्। अतो हस्तनक्षत्रेऽग्न्याधानात्परकर्तृकं हस्तेन दानं प्राप्नोतीति तात्प-

र्योर्थः ॥१२॥ चित्रायामित्यादि । आरुरुक्षाञ्चक्रुरिति । आरोढुमिच्छां कृतवन्त इत्यर्थः । अमुमिति । अदःशब्देन परोक्षेण यो लोको निर्दिष्टस्तं विशिनष्टि । दिवमेवेति । ततोऽनन्तरमसुरा रौहिणमित्येतन्नामकं रोहणसाधनमग्निं चिक्ये । व्यत्ययेनैकवचनम् । चिक्यिरे चितवन्तः । अनेनेत्यादि । स्पष्टम् ॥१३॥ इन्द्रो हेति । इमं चेत्यादि । यमिममग्निं वयं चेष्याम इममेव चेदसुरा अपि चिन्वीरन् ततस्तस्मादेव साधनान्नोऽस्मानभिभवन्ति असुरा अभिभवितुं समर्था भवन्ति । इति विचार्य स इन्द्रो ब्राह्मणो भूत्वाऽसुरहितं ब्रुवाण एवैकामिष्टकां प्रबध्य गृहीत्वैयाय जगाम ॥१४॥ स होवाचेति । गत्वा च तानसुरानुवाचाहमपीमामिष्टकां भवदीयेऽग्नावुपदधै । उपधानं करवाणीति । तथेति तैरनुज्ञातस्तामिष्टकां तत्राधत्त । अन्यदीयचयनेऽन्यदीयेष्टकोपधानमशास्त्रीयमित्येतस्मादल्पकादेव भ्रेषात्तेषामसुराणामग्निरसम्यक्चितो विकलो बभूव ॥१५॥ अथ होवाचेति । अथ कालान्तरे स एव ब्राह्मणरूप इन्द्रस्तानसुरानुवाच । इहास्मिंश्चितप्रदेशे या ममेष्टका तामादास्य इत्युक्त्वा तत्समीपमभिप्राप्य तामिष्टकामाबवर्ह उद्ययाम । तस्मात्स्थानादचालयदित्यर्थः । बृहू उद्यमने इति धातुः । तस्यां चेष्टकायां चित्याग्नेस्सकाशाच्चालितायां सत्यां सोऽग्निर्व्यवशाद विशीर्णो बभूव । तदनन्तरं तच्चेतारोऽसुराश्च व्यवशेदुः । व्यवसन्नाः शिथिला बभूवुः । स ता इत्यादि । स्पष्टम् । ग्रीवा इति । असुरसम्बन्धिनीः ॥१६॥ ते ह देवा इति । चित्राख्येष्टका । अस्या एवं चित्रहेतुत्वाच्चित्रानाम सम्पन्नमित्यर्थः । चित्रं हेत्यादि । निगदसिद्धम् । तस्मादेतदित्यादि । यस्मादुक्तरीत्या चित्रानक्षत्रस्य शत्रुहननसाधनत्वं तस्मादाधाने क्षत्रिय एवैतन्नक्षत्रमुपेप्सेत्स्वीकुर्यात् । तत्र कारणमाह । जिघांसतीवेति । एष खलु क्षत्रियोऽन्यान्छत्रूञ्जिघांसति हन्तुमिच्छतीव । तथा विजिगीषत इव विजेतुमिच्छतीव । तस्माच्छत्रुहननकामस्य क्षत्रियस्यैतन्नक्षत्रं नान्यस्येत्यर्थः ॥१७॥ सूर्येणापहतवीर्याणि कृत्तिकादिनक्षत्राण्ययनादत्य तेजस्विनि सूर्यात्मके नक्षत्रे उद्यति सत्याधानं कार्यमित्याह । नाना ह वा इति । पुरा खलु कृत्तिकादिनक्षत्रमण्डलानि सूर्यमण्डलवत्तेजस्वीन्येव बभूवुः । एष खलु सूर्य उद्यन्नेषां तेजः सामर्थ्यं च उदयमाप्नुवन्नेव तेषां वीर्यमादत्त स्वीकृतवान् । तस्मादादानादादित्य इत्युच्यते ॥१८॥ नक्षत्रनामधेयं निर्वक्ति । ते हेति । यानि खलु पुरा क्षत्राणि अभूवन् तानीदानीं सूर्येण क्षत्रगुणस्यापहतत्वान्न विद्यते क्षत्रमेषामिति व्युत्पत्त्या नक्षत्राणि सम्पन्नानीत्यर्थः । यस्मादेवं कृत्तिकादीन्यपहतवीर्याणि तस्मादेव कारणात्सूर्यात्मक एव तेजस्विनि नक्षत्रे आधानं स्यात् । तत्र हेतुमाह । एष हीति । हि यस्मादेष सूर्य एषां नक्षत्राणां वीर्यादिकमादत्ते तस्मात्सवीर्ये तस्मिन्नाधानं युज्यत इत्यर्थः । यदि च यजमानस्तत्तत्पूजार्थं नक्षत्रकामः स्यात्तदानीमपि सूर्यात्मकमेव नक्षत्रमुपाददीतेत्याह । एतद्वा इति । अनपराद्धमिति हेतुगर्भविशेषणम् । यत

स्तेजोवियोगोपलक्षणापराधरहितमतस्तदेव सूर्यात्मकं नक्षत्रं कामयेतेत्यर्थः। तेन कृत्स्ननक्षत्राणां प्राप्तिमाह। स एतेनैवेति। एतेनैव सूर्येणोद्यता पुण्यकालात्मना कृत्स्ननक्षत्रेऽप्याधानफलमुपगच्छेत्। तस्मात्सूर्यात्मक एव नक्षत्रे उद्यति सत्याधानं स्यान्न रात्राविलर्थः ॥१६॥

माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे प्रथमाध्याये द्वितीयं ब्राह्मणम्

॥८॥

२·५·१·१-१७

अथ चातुर्मास्यानि विधित्सुस्तत्र वैश्वदेवस्य प्रजासृष्टिहेतुतामाख्यायिकया प्रतिपादयति। प्रजापतिर्ह वा इति। इदं दृश्यमानं चराचरात्मकं जगत्तत्समग्रं सृष्टेः प्राक्काले प्रजापतिरेक एवासीत्। कार्यस्य जगतः कारणभुते प्रजापतौ लीनत्वात् सोऽसहाय एक एवासीदित्यर्थः। ततः सकाशात्प्रजासृष्टिं दर्शयति। स ऐक्षतेत्यादिना। अश्राम्यदिति। प्रजोत्पत्तिकारणपर्यालोचनया श्रान्तः खिन्नोऽभवदित्यर्थः। श्रमु तपसि खेदे च। शमामष्टानाम्० (पा० ७-३-७४) इति दीर्घः। सच श्रान्तः सन्प्रजोत्पत्तिकारणं तपस्तप्तवान्। स प्रजा इत्यादि। निगदसिद्धम्। तानीमानीति। याः खलु सृष्टेः पराभुतास्तानीमानि वयांसि जातानि। पक्षिरूपेणाभवन्नित्यर्थः। एतदुपपादयति। पुरुषो वा इति। पुरुषो मनुष्यः खलु सृष्टानां प्रजानां मध्ये प्रजापतेर्नेदिष्ठमन्तिकतमं कार्यम्। स च पादद्वयोपेतः। तत्परिणामरूपत्वात् पक्षिणोऽपि पादद्वयोपेता दृश्यन्ते। तस्माद्वयसां पुरुषसाधर्म्यात्तेषां पुरुषरूपत्वमवसेयमित्यर्थः ॥१॥ पुनरन्यथा प्रजासृष्टिमाह। स ऐक्षतेति। यथा न्वेवेति। यथा खलु पुरा प्रजासृष्टेः पूर्वमेकोऽसहायोऽभूवमप्येतर्हि इदानीं प्रजासृष्ट्युत्तरकालेऽपि तथैवैक एवास्मीति। एवमीक्षित्वा स पुनरन्याः प्रजाः ससृजे। पूर्वसृष्टप्रजापेक्षयाऽऽसां द्वितीयत्वम्। परैवेति। अस्य ता अपि प्रजाः पराभुता एवाभवन्। तदिति विधेयापेक्षया नपुंसकत्वम्। ताः पराभुता द्वितीयसृष्ट्युत्पन्नाः प्रजा यत इदं क्षुद्रमल्पशरीरं सरीसृपं सर्पणशीलं सर्पव्यतिरिक्तं प्राणिजातं दृश्यते। तदात्मना परिणता इत्यर्थः। तृतीयाः ससृज इत्याहुरिति। पुनरपि स प्रजापतिः सृष्टिद्वयापेक्षया तृतीया अन्याः प्रजाः ससृजे सृष्टवानित्याहुरभिज्ञाः कथयन्ति। ता अपि अस्य पराभुता अभवन्। ता इमाः सर्परूपेण दृश्यन्ते। तृतीयसृष्टावाहुरिति यः परोक्षनिर्देशस्तदभिप्रायमाह। एता हेति। एताः पूर्वोक्ता द्वयीर्द्विविधा एव प्रजाः प्रजापतिना सृष्टा इति याज्ञवल्क्यमहर्षिरुवाचोक्तवान् न तृतीयानां प्रजानां सृष्टिः। ऋचा ऋङ्मन्त्रेण पुनस्त्रयीस्त्रिविधा अपि प्रजाः सृष्टा इति प्रतिपाद्यते ॥२॥ स चोदाहरिष्यते। सोऽर्चन्नित्यादि। त्रिवारं सृष्टानां प्रजानां पराभवकारणं किमिति विचार्य स खल्वेतदेव कारणं ददर्श। एत-

च्छब्दनिर्दिष्टं दर्शयति। अनशनतयेति। उत्पन्नानां प्रजानामशनराहित्यं पराभवकारण-मित्यर्थः। उत्पत्स्यमानानामनशनत्वं मा भूदिति प्रजापतिना कल्पितमशनमाह। स आत्मन एवेति। अग्रे सृष्टेः प्रागेव प्रजापतिरात्मनः स्वशरीरस्य सम्बन्धिनोः स्तनयोः पय आप्याययांचक्रे। आप्यायितं पूरितं कृतवान्। एवमशनं प्रकल्प्यानन्तरं याः प्रजा असृजतास्य प्रजापतेस्ताः सृष्टाः प्रजाः पयसा पूर्णौ स्तनौ अभिपद्य जीवनवत्योऽभवन्। ततो-ऽनन्तरं ताः प्रजाः सम्बभुवुः। सम्यगुत्पन्ना लब्धात्मानोऽभवन्। पराभवं न प्राप्ता इत्यर्थः ॥३॥ उक्तेऽर्थे ऋङ्मन्त्रं संवादयति। तस्मादिति। यस्मादग्रे एवमासीत्तस्मात्कारणात्तदुक्तमर्थ-जातमृषिणा मन्त्रेणाभ्यनूक्तम्। प्रतिपादितम् ( ऋ० सं० ८-१०१-१४ )। तत्र प्रथम-पादमनूद्योक्तार्थपरत्वमाह। प्रजा हेति। तिस्रस्त्रिविधाः प्रजा अत्यायमत्ययं विनाशमीयु-र्जग्मुः। हशब्द एतद्ब्राह्मणप्रसिद्धिं द्योतयति। तथा इति। याः खलु प्रजास्त्रिधा सृष्टा अन्ना-भावहेतुना पराभूता एतदेतेन मन्त्रपादेन ता एवाभिलक्ष्याभ्यनूक्तम्। प्रतिपादितम्। द्वितीय-पादमनूद्य व्याचष्टे। न्यन्या इति। पयोरूपमशनं प्राप्यान्याः प्रजा अर्कमर्चनीयमग्निमभितः सर्वतो निविविश्रे निविविशिरे। नेर्विशः ( पा० १-३-१७ ) इत्यात्मनेपदमिरयो रे ( पा० ६-४-७६ ) इति रे आदेशः। तद्या इत्यादि। तत्तत्र या इमाः प्रजा अपराभूता ता एव जाठररूपेण लौकिकवैदिकभेदेन वाऽवस्थितमग्निं स्वव्यापाराय पर्युपविष्टा वर्तन्ते। एतदेतेन पादेन प्रतिपादितम् ॥४॥ तृतीयपादमनूद्य व्याचष्टे महद्ध तस्थाविति। इत्थं देवमनुष्यादि-रूपासु प्रजासु सतीषु तत्स्रष्टा प्रजापतिर्भुवनेष्वन्तर्मध्ये महदधिकं तस्थौ सर्वोत्कर्षेणावस्थितः। गतमन्यत्। चतुर्थपादमनूद्य व्याचष्टे। पवमान इति। दिशो वै हरितो दिशो हि हरिच्छ-ब्दवाच्या अतस्ता अयं पुरोवर्ती पवमानो वायुराविष्टो दृश्यते। अतस्तुरीयपादेनायमर्थः प्रति-पाद्यत इति। ता एवेति। उक्तार्थनिगमनम्। ता उक्ताः प्रजा एवाभिलक्ष्येत्यर्थः। प्रजापतिकृतायाः सृष्टेरविच्छेदेनानुवृत्तिं दर्शयति। ता इमा इति। यथैव येन हि प्रकारेण पुरा प्रजापतिः प्रजा असृजत तथैव तेनैव प्रकारेण ता इमा मनुष्याद्याः प्रजाः प्रजायन्त उत्प-द्यन्ते। एतदेवोपपादयति। इदं हीति। इदानीं स हि यदैव खलु लोके स्त्रियै स्त्रियाः। षष्ठ्यर्थे चतुर्थी। स्तनावाप्यायेते पयसा पूरितौ भवतः। व्यत्ययेनैकवचनम्। गवादिपशू-नामूधश्च पयसा पूर्णं भवति अथानन्तरमेव यज्जायते तदेव जायते। अन्यज्जायमानं विपद्यत इत्यर्थः। तास्तत इति। ता उत्पन्नाः प्रजास्ततो जननानन्तरं पयोधरौ स्तनावेवाभिपद्याभि-प्राप्य स्तन्यपानेन सम्भवन्ति प्रवर्द्धन्ते न विपद्यन्ते ॥५॥ पयसोऽन्नरूपतामाह। तद्वै पय इति। तत्तत्र खलु जन्मान्तरकाले पय एव प्रजानामन्नं भवति। हि यस्मादग्रे इतरान्न-सृष्टेः प्रागेतदेवान्नं प्रजापतिरजनयत्तोत्पादितवान्। तस्मादिदमेव मुख्यमन्नमित्यर्थः। तस्य

चान्नस्य कार्यकारणयोरभेदोपचारेण प्रजारूपतामुपपादयति। अन्नमेवेति। हि यस्मात्प्रजा अन्नात्सम्भवन्ति प्रवर्धन्ते तस्मात्तदात्मिका इत्यर्थः। इदं हि इदानीं हीत्यर्थः। जातमेवेति। स्तन्याभावे जातस्य शिशोर्जीवनासम्भवात्तज्जीवनार्थं जननानन्तरमेव ताः प्रजाः स्तन्यमेवादयन्ति भोजयन्ति। स्पष्टमन्यत्। इत्थमन्नहेतुकं प्रजापतेः प्रजासर्जनमुपोद्घातत्वेनोपन्यस्तम् ॥६॥ अथोपोद्घातिकेषु वैश्वदेवहविरुत्पादयंस्तद्दर्शयिष्यंस्तावद्वैश्वदेवयागं विधत्ते। स यः प्रजाकाम इति। यो यजमानः प्रजाकामः स एतेन वैश्वदेवाख्यपर्वरूपेण हविषा यजेत। तस्य प्रजाफलसाधनत्वमुपपादयति। आत्मानमेवेति। स यजमान आत्मानमेव प्रजापतिरूपमापन्नमेतद्वैश्वदेवाख्यं यज्ञं विधत्ते। वैश्वदेवयज्ञमात्मना करोतीत्यर्थः। अतो वैश्वदेवेनेष्टवतः प्रजापतेः प्रजोत्पत्तिसाधनत्वमुन्नीतमित्यर्थः ॥७॥ तत्र प्रथमं हविर्विधाय प्रशंसति। स वा इति। आग्नेयोऽग्निर्देवता अस्य। सास्य देवता (पा० ४·२·२४) इत्यर्थेऽग्नेर्ढक् (पा० ४·२·३३) इति ढक्। अष्टसु कपालेषु संस्कृतोऽष्टाकपालः। अग्निः प्रजनयिता मातापितृभ्यां भुक्तस्यान्नस्य जाठराग्निपरिपाकवशेन शुक्रशोणितात्मना परिणामादग्नेः प्रजनयितृत्वम्। अत एव प्रजापतिः सोऽग्निरित्यर्थः ॥८॥ द्वितीयं हविर्विधाय प्रशंसति। अथ सौम्य इति। सोमो देवताऽस्य सौम्यः। सोमाट्ट्यण् (पा० ४·२·३०) इति ट्यण्। प्रजनयितर्युत्पादयितर्यग्नौ सोमात्मकं रेतः सिञ्चति। तदेव तत्प्रजोत्पत्तिसाधनं पुरस्तात्कयमाणमेकं मिथुनं सम्पद्यमानं भवतीत्यर्थः ॥९॥ अथ द्वितीयं हविर्विधाय प्रशंसति। अथ सावित्र इति। सौम्ययागानन्तर्यमथशब्दार्थः। सविता देवताऽस्य सावित्रः। प्रसविता प्रेरयिता स एव प्रजापतिर्वैश्वदेवादिः। आग्नेयादीनां पञ्चानां यागानां मध्ये इज्यमानः सन्सविता मध्यतः प्रजानां प्रजनयिता भवति ॥१०॥ चतुर्थपञ्चमे हविषी विधाय संभूय प्रशंसति। अथ सारस्वत इति। सरस्वती देवताऽस्य सारस्वतः। तत्पुनर्मिथुनमित्यादि। आदावनुष्ठितादग्रे क्रियमाणादित्यर्थः। इतश्चोर्ध्वा इत्यादि। इतोऽस्माद्भूलोकादारभ्योपरितनलोकवर्तिनीः प्रजा उभयतोऽवस्थितान्मिथुनात्प्रजापतिः सृष्टवानित्यर्थः। इदानीन्तनयजमानोऽपि एवमेव मिथुनद्वयानुष्ठानेन द्विविधाः प्रजाः सृजतीत्याह। तथो एवेति। तस्मादित्यादि। विहितानां हविषां निगमनम् ॥११॥ एवञ्च पञ्चभिर्हविर्भिरुत्पादितानां प्रजानां स्थित्यर्थं प्रजापतिना कल्पितं पयस्यारूपमन्नं दर्शयितव्यमिति पयस्यायागस्य स्थानं प्रतिजानीते। अथात इति। अथैवं प्रजासृष्टेरनन्तरं यतः सृष्टानां प्रजानामन्नमपेक्षितमतः पयस्याया एव पयोविकारद्रव्यसाध्यस्य यागस्यैतदायतनं स्थानमित्यर्थः। अथैवं पयस्यायाग एव षष्ठोऽनुष्ठेय इति नेत्याह। मारुतस्त्विति। तुशब्दः पयस्यायागस्य न्यायप्राप्तं षष्ठस्थानत्वं व्यावर्तयति। मारुतः सप्तकपाल एव षष्ठोऽनुष्ठेय इत्यर्थः। एतदाख्यायिकयोपपादयति। विशो वै मरुत इत्या-

दिना। वैश्यजातयो हि मरुतः। ते च देवतारूपत्वाद्देवविशः खलु। अनिषेध्रा इवानिषेधुका नियन्तृरहिता इव स्वतन्त्राश्चेरुः। ताः स्वातन्त्र्ये वर्तमाना आद्यैः पञ्चभिर्हविर्भिः प्रजा उत्पादितवन्तं प्रजापतिं यजमानमुपेत्योपागत्योचुः। ते त्वदीया इमा उत्पन्नाः प्रजा वयं विमथिष्यामो हिंसिष्यामो याः प्रजा एतेन वैश्वदेवपर्वात्मना हविषा त्वं स्रक्ष्यसे सृष्टाः करिष्यसि ॥१२॥ एवं मरुद्भिरुक्ते सति स प्रजापतिरैक्षत पर्यालोचितवान्। मे मदीयाः पूर्वाः पूर्वसृष्टाः प्रजाः पराभूवन्। इमाः प्रजा इमे मरुतो विमथ्नन्ते बाधन्ते चेत्ततोऽनन्तरं किमपि सृष्टं न परिशेक्ष्यते परिशेषितं न भविष्यति। इत्येवं मरुद्भ्यो भीतः संस्तेभ्य एतं सप्तदशकपालरूपं यागं कल्पितवान्। अतः प्राप्तस्थानमपि पयस्यायागं परित्यज्य स एष मारुतो याग इदानीमपि षष्ठत्वेनानुष्ठीयते। सप्तसंख्यामनूद्य प्रशंसति। तद्यदिति। मरुतो हि सप्तगणाः। तेष्वेकैकस्मिन्गणे सप्त सप्त मरुतः। ते चैकोनपञ्चाशत्सङ्ख्याका अग्निस्थापनप्रकरणे ईदृङ् चान्यादृङ् चेत्यादिभिर्मन्त्रैस्तत्तन्नाम्ना प्रतिपादिताः ॥१३॥ तेषां किञ्चिद्विशेषणमुपक्षिपति। तं वै स्वतवोभ्य इतीति। तं खलु सप्तकपालं पुरोडाशं स्वतवोभ्य इति विशेषणविशिष्टेभ्यो मरुद्भ्यः कुर्यात्। तव इति बलनाम। स्वायत्तं तवो बलं येषां ते स्वतवसः। अस्य विशेषणस्यान्वर्थतामाह। स्वयं हीति। ते मरुतः स्वयं हि स्वपौरुषेणैव हि एतं भागमकुर्वन्स्वीकृतवन्तः। अतस्ते स्वतवसः सम्पन्ना इत्यर्थः। प्रागुक्तमेव पक्षं निगमयितुं कारणमुपन्यस्यति। अत इति। यदि तु स्वतवोभ्यः प्रतिपादिके याज्यानुवाक्ये न लभ्येते तदा स एव प्रागुक्तः केवलो मारुत एव यागो भवति। एतच्च पक्षद्वयं कात्यायनोऽप्यसूत्रयत्। (का० श्रौ० ५·१·११·१) मरुद्भ्यः स्वतवोभ्यः सप्तकपालो मारुतो वेति। स वा एष इति। स खल्वेष मारुतो यागः प्रजाभ्यः प्रजानाम्। षष्ठ्यर्थे चतुर्थी। अहिंसायै मरुत्कृतबाधराहित्यायैव क्रियते। तस्मादिति। मारुतयागस्य निगमनम् ॥१४॥ पयस्यायागं विधत्ते। अथात इति। अथशब्दो मारुतयागानन्तर्यार्थे। यतः सृष्टाः प्रजा मारुतयागेन तत्कृतहिंसायाः परिहृतत्वात्सुखेनावस्थिता अन्नमाकाङ्क्षन्तेऽतः पयोरूपमन्नं ताभ्यो जनयितुं पयस्यायागः कर्तव्य इत्यर्थः। तस्य प्रजावृद्धिहेतुत्वमाह। पयसो वा इत्यादि। सृष्ट्यादौ प्रजापतिना सृज्यमानास्ताः प्रजास्तदीयस्तन्यरूपात्पयसः सकाशात्सम्भूताः प्रवर्द्धिता यत एवमिदानीमपि सर्वाः प्रजाः पयस एव सम्भवन्ति जन्मानन्तरं तत्क्षण एव पयोलक्षणमन्नं प्राप्य वर्धन्ते। पयोरूपस्य तस्यान्नस्य सम्पत्तिमल दर्शयितुमुक्तमर्थमनुवदति। तद्यत एवेति। तत्तथा सतीत्यर्थः। एतदेतेन पयस्यायागेन तदेव प्रजावृद्धिहेतुभूतं पय आभ्यः प्रजाभ्यः करोति संपादयति। अत एवेदानीं पूर्वसृष्टानां प्रजानामभिवृद्धिर्दृश्यत इत्याह। तथा इति। पूर्वैः प्रागुक्तैराग्नेयादिभिः पञ्चभिर्हविर्भिः। एतस्मात्पयस इति। दध्ना संस्कृतः पयोविकारः पयस्या। असौ चामिक्षाशब्देनान्यत्राम्न

यते। तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति ( तै० स० १·१०·१० )। कात्यायनोऽपि पयस्यां प्रकृत्य सूत्रयामास। शृते वा दध्यानयति। वाजिनं निषिच्योत्करे करोति ( का० श्रौ० ४·४·७·८ ) इति। षष्ठ्यर्थे चतुर्थी। एतस्याः पयस्यायाः प्रकृतिभूतं पयः। एतस्मादुत्पन्नाः प्रजा वर्द्धन्त इत्यर्थः ॥१५॥ एवं यागोपयुक्तं द्रव्यं प्रशस्य तस्य वैश्वदेवत्वं प्रतिपादयति। तस्यामित्यादिना। तस्यां पयस्यायां प्रजननसाधनं मिथुनं विद्यते। पयस्याशब्दस्य स्त्रीलिङ्गत्वाद्योषात्वं तस्यास्तदनुनिष्पादि वाजिनं रेतः पुंसो वीर्यम्। तस्मान्मिथुनादसम्मितमपरिमितमिदं विश्वं देवमनुष्याद्यात्मकमनुप्राजायतानुक्रमेण प्रजायते। प्रजातमभूत। तद्यदेतस्मादिति प्रतिपादितार्थस्य हेतुत्वाभिधानम्। तस्मादिति। यस्माद्विश्वोत्पत्तिहेतुः पयस्या तस्माद्विश्वदेवदेवत्या कार्येत्यर्थः ॥१६॥ अन्तिमं हविर्विधत्ते। अथेति। द्यावापृथिव्यौ देवते अस्येति द्यावापृथिव्यः। द्यावापृथिवीशुनासीरमरुत्वद्० ( पा० ४·२·३२ ) इति सूत्रेण यत्। तत्र हि चकारेण यदित्यनुकृष्यते। तदेतत्पुराकृतिमुदाहृतदृष्टान्तेनोपपादयति। एतैर्वा इत्यादिना। द्यावापृथिवीभ्यां पर्यगृह्णादिति। अधस्तात्पृथिव्योपरिष्टाद् द्युलोकेन। तदुभयलोकवर्तिनीः सृष्टाः प्रजाः पर्यगृह्णात्परितो वेष्टितवान्। यास्चेमाः प्रजा आभ्यां द्यावापृथिवीभ्यां परिगृहीताः परिवेष्टिता एव वर्तन्ते न पुनः स्वतो निर्गच्छन्ति। तथो एवेति। यथा प्रजापतिस्तथो तथैवैष इदानीन्तनो यजमानोऽपि य एतैर्हविर्भिः प्रजाः सृजते सृष्ट्वा च पयस्यायागेन तासां पयोरूपमन्नं परिकल्प्य द्यावापृथिव्ययागेन द्यावापृथिवीभ्यां ताः परिगृह्णाति परिवेष्टयतीत्यर्थः। एवं वैश्वदेवपर्वण्यष्टौ प्रधानयागा विहिताः। तद्धितनिर्देशौषधिद्रव्यत्वाल्लिङ्गसामान्याद्दर्शपूर्णमासविध्यन्तस्तत्रातिदिष्टः। प्रकृतिवद्विकृतिः कर्तव्येति ॥१७॥

॥ ९ ॥

३·५·१·१-३६

आतिथ्यातानूनप्त्रे च सोमाप्यायननिह्नवौ। उपसच्चेति पञ्चार्थाश्चतुर्थेऽत्र निरूपिताः ॥ अथ पञ्चमे सौमिकवेदिकरणादिकं निरूप्यते। अथ यदुक्तं कात्यायनेन। औपवसथ्यात्पूर्वेऽहनि पौर्वाह्णिक्या प्रचर्य वेदिं मिमीते (का० श्रौ० ८·३·६)इत्यादि। तदेतदाह। तद्य एष पूर्वार्द्ध्यो वर्षिष्ठः स्थूणाराजो भवति तस्मात्प्राङ् प्रक्रामति त्रीन्विक्रमांस्तच्छङ्कुं निहन्तीति। य एष स्थूणाराजः पूर्वार्द्ध्यः पूर्वार्द्धमर्हतीति पूर्वार्द्ध्यः। प्राचीनवंशस्य पूर्वभागे आहवनीयपुरोदेशे वर्तमानः पृथुः स्तम्भोऽस्ति सोऽन्तःपातः। ऐष्टिकवेदेर्महावेदेश्चान्तरालसञ्चरः। तस्मात्स्तम्भात्प्राङ् प्रक्रमान्प्रकामति त्रीन्। तत्तत्र तृतीयप्रक्रमावसाने शङ्कुं निहन्यात्स्थापयेत् ॥१॥ दक्षिणश्रोणिप्रमाणमाह। तस्माच्छङ्कोर्दक्षिणेति। मध्यमशङ्कोर्दक्षिणतः पञ्चदशविक्रमावसाने शङ्कुं स्थापयेत्। सा

दक्षिणा श्रोणिमर्यादा भवति ॥२॥ एवमुत्तरश्रोणिवाक्यमपि तस्माच्छङ्कोरुदङित्यादि ॥३॥ आयामस्य पश्चाद्भागावधिं प्रदर्श्य प्राचीनावधिमाह । तस्मान्मध्यमाच्छङ्कोः षट्त्रिंशतं विक्रमान्प्रक्रामतीति ॥४॥ अथ दक्षिणोत्तरावंसौ दर्शयति । तस्मान्मध्यमाच्छङ्कोरिति । तस्मात्पुरोदेशस्थान्मध्यमाच्छङ्कोः श्रोणितः सकाशादंसयोरीषन्न्यूनत्वादुभयतो द्वादशप्रक्रमाभिधानम् । इत्थं सर्वतो मितायां वेदिमात्रायां न्यूनाधिकत्वशङ्कामाशङ्क्य स्वयमेव व्यवच्छिनत्ति । एषा मात्रा वेदेरिति ॥५॥६॥ अथ विहितं वेदिमानं क्रमेण प्रशिशंसिषुरादौ पश्चान्मानं प्रशंसति । अथ यत्त्रिंशद्विक्रमा पश्चाद्भवतीति । त्रिंशत्पक्षे विराजः प्रतिपादं दशाक्षरत्वात्त्रिंशदक्षराणि । स्पष्टमन्यत् ॥७॥ पश्चान्माने पक्षान्तरमाह । अथो अपि त्रयस्त्रिंशत् स्युरिति । अथोशब्दः पक्षं व्यावर्तयति । न वा एकेनाक्षरेण छन्दांसि वियन्तीति (ऐ० ब्रा० १·६) न्यायात् प्रतिपादमेकैकाक्षराधिक्येन विराजस्त्रयस्त्रिंशदक्षरकत्वम् ॥८॥ अथ प्रागायामस्येयत्तां प्रशंसति । अथ यत्षट्त्रिंशद्विक्रमा प्राची भवतीति । चतुर्विंशत्यक्षरगायत्र्याश्चतुरक्षराधिक्येनोष्णिगादिक्रमेण बृहत्याः षट्त्रिंशदक्षराणि भवन्ति । स्पष्टमन्यत् ॥९॥ प्राग्दिगवस्थितयोरंसयोः प्रमाणं मिलित्वा प्रशंसति । अथ यच्चतुर्विंशतिविक्रमा पुरस्ताद्भवतीति । पुरस्तात्पूर्वस्यां दिशि विस्तारेण चतुर्विंशतिविक्रमा भवति । पूर्वार्द्धो वै यज्ञस्येति । यज्ञस्य यज्ञाङ्गस्य वेदिस्वरूपस्य एष पूर्वार्द्धः । गायत्र्याः पूर्वार्द्धत्वम् । गायत्रं वै प्रातःसवनमिति श्रुतेः (ऐ०ब्रा०२६·३) सिद्धम् ॥१०॥ श्रोणिभागस्योरुत्वमंसभागस्य ह्रस्वत्वं यदस्ति तत्प्रशंसति अथ यत्पश्चाद्वरीयसी भवतीति । श्रोणिभागस्य त्रिंशत्प्रक्रमोक्तेरंसभागस्य चतुर्विंशत्यभिधानात्पश्चाद्वरीयस्त्वम् । यस्माल्लोके पृथुश्रोणिर्योषा प्रशस्ता तस्माद्वेद्याः पश्चाद्भागस्यापि श्रोणित्वात्तत्पृथुत्वं युक्तमित्यर्थः । श्रोणिपृथुत्वं कुत्रोपयुज्यते इति । तदुपयोगमाह । तस्मात्पश्चाद्वरीयस इति । प्रजायन्तेऽत्रेति प्रजननम् । पश्चाद्भागे उरुतरं यत्तत्पश्चाद्वरीयस्तादृक्प्रजननात्प्रजायन्तेऽतः प्रजननहेतुत्वात्पश्चाद्वरीयस्त्वं प्रशस्तम् ॥११॥ सार्थवादमुत्तरवेदिनिर्माणं विधत्ते । नासिका ह वा एषा यज्ञस्येति । नासिकाया मुखप्रदेशादपि समुच्छ्रितत्वादुत्तरवेदेर्मृदोच्छ्रितता कर्तव्या । उन्नतत्वमुत्तरवेदिनामनिर्वचनेन प्रशंसति । अथ यदेनामुत्तरं वेदेरुपकिरतीति । यस्माद्वेदेः सौमिक्याः उत्तरमत्युन्नतमुपकिरति मृदं क्षिपति तस्माद्वेदेः प्रागवयवभूतस्य प्रदेशस्योन्नततरत्वादुत्तरवेदिरिति नाम सम्पन्नम् ॥१२॥ अथोत्तरवेदिव्याघारणविधानार्थमाख्यायिकामाह । द्वय्यो ह वा इदमग्रे प्रजा आसुरिति । अग्रे सृष्टेः पूर्वं द्वय्यो द्विविधा एव प्रजा आसुरभवन् । कास्ता आदित्याश्चैवाङ्गिरसश्च । तेऽङ्गिरसः पूर्वं आदित्येभ्यः पूर्वभाविनः सन्तो यज्ञं संभृतवन्तः । सम्भृतयज्ञास्तेऽग्निमित्थमूचुर्हेऽग्ने त्वं नोऽस्माकमिमां श्वःसुत्यां परेद्युः क्रियमाणमभिषवमादित्येभ्यः प्रब्रूहि । त्वमप्यनेन सोमयागेन नोऽस्मान्याजयेति । एवमुक्तोऽग्निरादित्येभ्यः पूर्वभाविनो वृत्तान्त-

मुवाच ॥१३॥ ते हादित्या ऊचुरिति । त इत्थं व्यचारयन् । कथम् । यथा येन प्रकारेणास्मानेवाङ्गिरसो याजयान्याजयेयुर्वयं तु न तान्याजयामः । तत्प्रकारश्चिन्त्यतामिति ॥१४॥ ते होचुरिति । विचार्येत्थमूचुः । न वा अन्येन यज्ञादपक्रमणमस्तीति । अन्येन वक्ष्यमाणात्साद्यस्कानुष्ठानादन्येन यज्ञादङ्गिरोभिरनुष्ठीयमानादस्मादपक्रमणमस्ति । अतः सुत्यामन्तरामेव अङ्गिरसां सुत्यातः पूर्वमेवास्माकं सुत्यां ध्रियामहे व्यवस्थापयिष्याम इति विचारितवन्तः । ते यज्ञं सुत्यालक्षणं सम्भृत्याग्निमूचुः । त्वमस्मभ्यं श्वःसुत्यामग्ने प्रावोचः । अथशब्दस्त्वर्थे । वयं तु तुभ्यमङ्गिरोभ्यश्चाद्यसुत्याम् । अद्य क्रियमाणा सुत्याऽद्यसुत्या ताम् । प्रब्रूमः । तेषां तथाकुर्वतामस्माकं त्वं होता भव ॥१५॥ तेऽन्यमेव प्रतिप्रजिघ्युरिति । एवमुक्तवन्तस्त्वङ्गिरसामेतद्वृत्तान्तावबोधनायाग्निप्रतिनिधिमन्यं प्रजिघ्युः । हि गतौ वृद्धौ च । प्रैरयन् । तेऽङ्गिरसोऽग्नयेऽन्वागत्य चुकुधुः । क्रुधद्रुहेर्ष्यादिना (पा० १-४-३७) क्रुधियोगे चतुर्थी । कथं नु नो दूत इति । क्रोधप्रकार उक्तः । न प्रत्यादथाः । आदरस्य प्रत्यादरं न कृतवानसि ॥१६॥ अग्नेरुत्तरम् । स होवाचानिन्द्या वै माऽवृषतेत्यादि । प्रासङ्गिकं कञ्चिद्धर्मविशेषं विधत्ते । तस्मादु हानिन्द्यस्य वृतो नापकामेदिति । स सद्यस्क्रोः । एकाहः सोमयागः । एतेनाङ्गिरस आदित्यानयाजयन् । दीक्षासोमक्रयादीनां सद्य एव क्रियमाणत्वात्सद्यस्क्रीरिति नाम ॥१७॥ तेभ्यो वाचं दक्षिणामिति । तेभ्यः साद्यस्कयाजकेभ्यो वाचमेव दक्षिणात्वेन प्रादुरित्यर्थः । वाग्दक्षिणाया निराकरणाभिप्रायमाह । हास्यामहे यदि प्रतिग्रहीष्याम इति । यदि स्वीकरिष्यामस्तर्हि हास्यामहे त्यक्ष्यामहे दक्षिणोत्तरकालमपि वाचोऽपेक्षितत्वात् । तथा सति यज्ञोऽदक्षिणः स्यात् । अस्तु को दोष इत्यत आह । यद्दाक्षिणमासीदिति । दक्षिणासम्बन्धि दाक्षिणं कर्म । तद्यज्ञस्य सम्बन्धि कर्म न व्यमुच्यत विमुक्तं नासीत् । सम्पूर्णं नाभवदित्यर्थः ॥१८॥ अथैभ्यः सूर्यमित्यादि । तस्मादु ह स्माहुरिति । अङ्गिरसः स्वयं ब्रुवते आर्त्विजीनाः स्मः सम्यगृत्विक्त्वयोग्याः स्मः । तथा दक्षिणीया दक्षिणायोग्याः । आर्त्विजीनत्वदक्षिणीयत्वयोरुभयोरपि हेतुरुच्यते । अस्माभिरेष प्रतिगृहीत इति । एतच्छब्दार्थमाह । य एष तपतीति । प्रसङ्गात्साद्यस्कस्य दक्षिणामाह । तस्मात्सद्यस्क्रियोऽश्वः श्वेत इति । अश्वः सूर्यप्रतिनिधित्वेन दीयते । सूर्यस्याश्वत्वेनोपस्थानविधानात् । अश्वाशनसाम्याच्च सूर्यस्याश्वस्थानीयत्वम् । सोऽपि वर्णसाम्याय श्वेतो भवेत् ॥१९॥ तस्य रुक्मः पुरस्ताद्भवतीति । तस्य पुरोदेशे रुक्मो हिरण्यफलको वर्तुलाकारो भवेत् । यद्यश्वमित्यादि । स्पष्टम् ॥२०॥ तेभ्यो ह वागित्यादि । तेभ्योऽङ्गिरोभ्यो वाक्कुपितवत्यासीत् । केन मदेष श्रेयान्बन्धुना३ इति । केनेति । असूयार्थे प्लुतिः । मन्मत्तः सकाशात्केन बन्धुना । बध्नातीति बन्धुर्विशेषगुणः । केन

विशेषगुणेनैष सूर्यः श्रेयानतिशयेन प्रशस्तः। प्रशस्यहेतुभूतानां सर्वगुणानामभिधानाय पुनः केनेति ग्रहणम्। यदेतं प्रत्यग्रहीष्टेति। यथेनातिशयेनैतमादित्यं प्रत्यग्रहीष्ट न माम्। मय्यविद्यमानः कोऽतिशयस्तत्र दृष्टः। न कोऽप्यस्तीत्यर्थः। उभयान्संयत्तान्देवासुरान्परस्परकलहायोद्युक्तान्देवासुरांश्चान्तरेण मध्ये साङ्गिरोभ्योऽपक्रान्ता वाक् सिंही भूत्वाऽऽददाना जिघत्सया समीपस्थं सर्वं स्वीकुर्वती चचार। तदानीमग्निरेव देवानां दूतोऽभवत्। असुराणांह्वानाय सहरक्षोनामक आसुरो दूतोऽभवदित्यर्थः ॥२१॥ सा देवानिति। उभयैरप्याहूता सती पूर्वं देवान्प्रत्येवोपावर्तमानाऽऽगमनोत्कोचरूपं किञ्चिदर्शयामास। ते च देवा अग्नेः पूर्वभाविनीमाज्याहुतिमागमनोपाधिना प्राहुः। सा देवानिदमुवाच। हे देवा यां काञ्चनाशिषमाशासिष्यध्व इच्छथ सा सर्वाप्याशीर्वो युष्माकं समर्द्धिष्यते समृद्धा भविष्यतीति। ततः सा प्रतिनिवृत्ताऽऽसीत् ॥२२॥ इदानीमुत्तरवेदिव्याघारणं विधत्ते स यद्धार्यमाणेऽग्नावुत्तरवेदिं व्याघारयतीति। अग्नावुत्तरवेदेरुपरि धार्यमाणे सति तामुत्तरवेदिं व्याघारयेदित्याहुः। यदेवैनामित्यादि। एतद्व्याघारणेन याऽऽहुतिरपवृत्तायै वेदिरूपायै वाचे देवैः कल्पिता सा कृता भवति। अतो व्याघारयेदित्यर्थः। उत्तरवेद्यामाघारणेन वाचः किमायातमित्यत आह। वाग्घ्येषा निदानेनेति। अत एव वागात्मकत्वादुत्तरवेदिप्रक्षेपस्यैवापगताया वाचो वरघनरूपत्वादुत्तरवेद्युपतापेन यज्ञः सफलो भवतीत्यर्थः ॥२३॥ उत्तरवेद्या मानादिसाधनं द्रव्यं विधत्ते। तां वै युगशम्येनेति। युगेन शम्यया चेत्यर्थः। युगवच्छम्याया अपि साधनत्वमस्तीत्याह। युगेन यत्र हरन्तीति। यत्र यस्मिन्देशे युगेन हरन्ति यतो यस्मात्तत्र शम्ययाऽपि हरन्ति। अतो युगवच्छम्याया अपि हरणक्रियासम्बन्धोऽस्त्येवेत्यर्थः। तत्कुत इत्यत आह। युगशम्येन वा इति। योग्यं योजनार्हमश्वम्। आदौ विप्रकृष्टकाले देवासुरयोर्युद्धकाले सा यज्ञस्य सम्बन्धिनी वाक् सिंही भूत्वाऽशान्ता क्रूरा सती अचरत्। तद्यत्र युगेन शम्यया च मानेनैनां वाचमेतदिदानीं यज्ञे योजितवान्भवति ॥२४॥ प्रासङ्गिकं कञ्चिन्नियमं विधत्ते। तस्मान्निवृत्तदक्षिणां न प्रतिगृह्णीयात् इति। अन्येन परित्यक्ता दक्षिणा। नो ह अमा कुर्वीतेति। अमा सह। स्वात्मनेत्यर्थः। नो ह नैव कुर्वीत। क्षिणोति हिनस्ति। क्षिणु हिंसायाम्। नो ह्यन्यस्मा इत्यादि। स्पष्टम्। अस्य यजमानस्य। समानबन्धुरेकविधिनिबन्धनः। एकविषय इत्यर्थः। तादृशोऽन्यः पाप इवापि स्यात्। पापी यदि भवेत् तस्मै दद्यात्। तादृग्विधाय दाने उक्तदोषद्वयराहित्यं दर्शयति। स यद्ददाति तदेनमित्यादिना। एषा उ निवृत्तदक्षिणायै प्रतिष्ठा' निवृत्तदक्षिणाया गतिरित्यर्थः। अथवा यजमानबन्धुरेव तदास्पदमित्यर्थः ॥२५॥ अथ शम्याञ्चेत्यादि। एष शङ्कुः पूर्वार्द्धयः सन्नपि उत्तरार्द्धयो भवति। सौमिकवेदेरुत्तरांसस्य शङ्कुरित्यर्थः। तस्मा-

च्छ्रोः सकाशात्प्रत्यङ् प्रत्यङ्मुखस्त्रीन्विक्रमान्प्रक्रमान्प्रकामति। तत्र चात्वालार्थं परितो लेखनं कुर्यात्। सा चात्वालस्य मात्रा। यैवोत्तरवेदेरुक्ता सैवेत्यर्थः। चात्वालखननोत्पन्नयैव मृदोत्तरवेदिकरणात्। तदेवाह नात्र मात्रास्तीति। उत्तरार्द्धयशङ्कोः प्रत्यक् प्रक्रमे चात्वाल इति यः पक्ष उक्तस्तेन सह विकल्पितं पक्षमाह। यत्रैव स्वयं मनसा मन्येतामेणोत्करमिति ॥२६॥ चात्वालस्य सर्वतो लेखनप्रकारं तन्मन्त्रांश्च दर्शयति। स वेदन्तादुदीचीं शम्यामिति। दक्षिणश्रोणिरूपवेदन्तादित्यर्थः। स परिलिखति। शम्यानुगुण्येन लेखनं कुर्यात्। अनेनैव पश्चादवधिनिर्देशः कृतो भवति। तस्य मन्त्रस्तप्तायनी मेऽसीति। हे भूमे तप्तायन्यसि। तप्तः पुमान्यस्यामिति तप्तायनी तद्रूपा भवसि। मन्त्रं व्याचष्टे। इमामेवैतदाहेति। हि यस्मात्तप्तः पुरुषो दारिद्र्येण दुःखितः सन्धनादिसाधनेच्छयैति तस्मादित्यर्थः ॥२७॥ अथ पुरस्तादित्यादि। स्पष्टम्। अस्यां हि विविदान एतीति। विविदानो धनादिकं लब्धवान्पुरुषः पुनरस्यामेव खल्वेति गच्छति। अतो वित्तायनीति भूम्यभिधानं युक्तमित्यर्थः ॥२८॥ अथानुवेदन्तमिति। अनुवेदन्तं प्राचीं शम्यां निदधाति। अनेन चात्वालस्य दक्षिणसीमोच्यते। तत्र खननमन्त्रस्यायमर्थः। मा मां नाथितान्याचिताद्धिरण्यादिरूपादर्थाद्भूमेऽवताद्रक्ष। यत्र नाथे तन्मावतादितीति। यत्र यस्मिन्विषये नाथे याचे धनादिकं तत्तस्मात्त्वं मावतादव रक्षेत्यर्थः ॥२९॥ अथोत्तरत इति। चात्वालस्योत्तरावधिपरिलेखनस्य अवतान्मा व्यथितादितिमन्त्रः। तस्य व्याख्यानं यत्र व्यथै तन्मावतादिति। यत्र यस्मिन्विषये व्यथै लाभोपायमजानानो व्यथितः स्यां तत्तस्मात्सकाशादवतादव ॥३०॥ खातायां मृदश्चात्वालादुत्तरवेदिं प्रति हरणं विधत्ते। अथ हरतीति। यत्र हरति तत्रोत्तरवेदिप्रदेशेऽग्नीदुपसीदत्युपविशत्याग्नीध्रः। अग्नीनां नामानि वक्ष्यमाणानि गृह्णन्नेव हरेत्। सत्स्वग्निषु चात्वालप्रदेशे तन्नामग्रहणमुपपद्यते। त एवात्र कुत इत्याह। यान्वा अमून्देवा अग्रेऽग्नीनिति। होत्राय होमनिष्पादनाय हविर्वहनाय प्रावृणत प्रावृणवन्। ते प्राधन्वन्। धन्वतिर्गतिकर्मा। इमामहैव। अहेति विनिग्रहार्थीयः। इमां पृथिवीं प्रति विद्विष्योऽसुरादयोऽपि उपासर्पन्। तेनैवैतदेतेन निदानेन मूलकारणेनैव हरणं कृतवान्भवति ॥३१॥ स प्रहरतीति। स मृदो हर्ताऽध्वर्युः सत्येन प्रहरति खनेत्। मन्त्रस्यायमर्थः। हेऽङ्गिरोनामकमहर्षिरूपाग्ने त्वम्। येऽङ्गारा आसंस्तेऽङ्गिरसो भवन्निति श्रुतिः (ऐ० ब्रा० १३-१०)। आहुत्याधारभूतः। नभो नाम विदेत्। न भातीति नभः। एतन्नाम विदेरित्यर्थः। यद्वा नभोनामाग्निरिति। विदेर्ज्ञानीया इत्यर्थः। त्वमायुना एतदात्मना नाम्नाऽभिधानेन युक्त एह्यागच्छ। स यदित्यादि। आयुर्दधातीति। आयुःशब्दः सामान्येन श्रुतिः।

तदवदारितं समीरयति उत्तरवेदिं प्रति सम्यक् प्रेरयति। तत्र मन्त्रः। योऽस्यां पृथिव्यामसीति। यस्त्वमस्यां खातायां भूम्यां भवसि तं त्वां समीरयामीत्यर्थः। आनीताया मृदो वेद्याकारेण स्थापनं समन्त्रकं विधत्ते। हृत्वा निदधाति यत्तेऽनाधृष्टमिति। मृदेकीभूत यत्ते यद्वा हे तिरोहिताग्निविशिष्टे मृत् यत्तेऽनाधृष्टं रजोभिरहिंस्यं यज्ञियं यज्ञार्हं नाम तेन नाम्ना त्वा त्वामादधे स्थापयामि। योऽस्यामितिमन्त्रेण त्रिवारं हरेत्। चतुर्थवारहरणमन्त्रस्यायमर्थः। हे आह्रियमाणपदार्थ त्वा त्वामनु पूर्वं हरणत्रयमनुसृत्याहरामीति शेषः। किमर्थम्। देववीतये देवा व्यन्ति हविर्भक्षयन्ति अत्रेति देववीतिर्यज्ञस्तदर्थम्। अर्थसिद्धमनूद्य प्रशंसति। तां वै चतुःस्रक्तेरिति। चतस्रः स्रक्तयो यस्य चात्वालस्य स तथोक्तः। चतुःस्रक्तात्साकल्येन हरतीत्यर्थः ॥३२॥ अथानुव्यूहतीति। अनुक्रमेण व्यूहनं मृत्प्रसारणं कुर्यात्। सिंहीरसीति व्यूहनमन्त्रः। हे अनुव्यूह्यमाने वेदे त्वं सिंहीरसि प्रागुक्तप्रकारेण सिंही भवसि। कीदृशी। सपत्नसाही शत्रूणामभिभवित्री। तादृशी त्वं देवेभ्यस्तेषामर्थाय कल्पस्व योषारूपा सती भोगसाधनं भवेत्यर्थः। सिंहीरसीति मन्त्रभागस्य तात्पर्यमाह। सा यदेवादः सिंही भूत्वेति। उक्तः सिंहीभावः। सपत्नसाहीत्यस्य तात्पर्यमाह त्वया वयं सपत्नानिति। देवेभ्यः कल्पस्वेत्यस्य तात्पर्याभिधानं योषा वेत्यादि ॥३३॥ तां वै युगमात्रीं वेत्यादि। षडशीत्यङ्गुलपरिमिता युगमात्री। दिक्चतुष्टयापेक्षया दशदशेति वीप्सा। युगमात्रस्य पूर्वमभिहितत्वात्तत्परित्यज्य दशपदपक्षं प्रशंसति। दशाक्षरा वै विराडिति। सर्वत्र विराजमानत्वाद्वाचोच्चार्यमाणत्वाच्च विराड्वाक्। मन्त्रादिरूपतया निष्पाद्यमानत्वाद्वाग्यज्ञः। अतो द्वारद्वारितया यज्ञसम्बन्धाद्दशसङ्ख्या युज्यत इति स्तुतिः। मध्ये नाभिकामिव करोतीति। अल्पा नाभिर्नाभिका। तस्या निर्माणप्रयोजनमाह। समानत्रेति। एकत्र स्थित्वा सर्वत्रोत्तरवेद्यां व्याघारणस्याशक्यत्वात्तत्सिद्धये मध्ये नाभिकरणमित्यर्थः ॥३४॥ वेद्या अद्भिरभ्युक्षणं विधत्ते। तामद्भिरभ्युक्षतीति। अभ्युक्षणस्य प्रयोजनद्वयम्। सिंहीभूत्वाऽशान्तायाः शान्तिरेकं प्रयोजनम्। स्निग्धभावेन रमणीयत्वमपरम्। तदुभयमुच्यते। सा यदेवाद इत्यादिना। तामेवैतद्देवेभ्योहिन्वतीति। हिन्वतिः प्रीणनकर्मा। तस्या अभ्युक्षणेन प्रीणनं देवेभ्योऽर्थाय भवति। योषात्वेनाभिधानात्। योषाया अलङ्करणेन पत्युः प्रीतिर्भवतीति सुप्रसिद्धम् ॥३५॥ सोऽभ्युक्षतीति। अभ्युक्षणमन्त्रः। सिंहीरसीति। अयं स्पष्टार्थः। सिकतानां प्रक्षेपस्योक्तमलङ्कारत्वं समर्थयते। भ्राजन्त इव हि सिकता इति। अतिधवलत्वाद्भ्राजमाना भवन्ति। वेद्यलङ्कारत्वेन प्रशस्ताग्निसंयोगकृतसन्तापनिवर्तकत्वेन प्रशंसति। अग्नेर्वा एतद्वैश्वानरस्य भस्मेत्यादिना। अग्न्यवयवभूतानामेव सिकतानामुत्तरवेद्यवयवत्वसम्पादनेन भूमेः

स्वाङ्गस्य स्वात्मदाहृत्कल्वाभावाद्धिंसापरिहार इत्यभिप्रायः । सिकताप्रकिरणमन्त्रार्थस्तु स्पष्ट एव । अथोत्तरवेदेर्यज्ञियवृक्षशाखया प्रच्छादनं विधत्ते । अथैनां छादयतीति ॥३६॥

माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे पञ्चमाध्याये प्रथमं ब्राह्मणम् ।

॥ ६० ॥

३·६·२·२·८

सूत्रत्वेनोक्तं विशदयितुमाह दिवि वै सोम आसीदथेह देवा इत्यादिना । इह भूलोके ते एते माये वस्तुतोऽतथाभूते । सुपर्णीकद्र्वोस्तयोः किं वास्तवं रूपमिति तद्दर्शयति । वागेव सुपर्णीयं कद्रूरिति । समदं समयं चक्रुः परस्परं कलहमुदपादयन् ॥२॥ ते ह ऋतीयमाने इति ऋतीयमाने कलहायमाने । ऋतिः सौत्रो धातुः । ऊचतुः । कथं नावावयोर्मध्ये यतरा दवीयोऽत्यन्तं दूरं परापश्यात्पश्येत् । सा दूरदर्शिनी विजयं लभेत । सा कद्रूः सुपर्णीं दूरमीक्षस्वेत्युवाच ॥३॥ सा हेति । सा दूरं पश्यन्ती सुपर्णी उवाच । किमिति । उच्यते । अस्य सलिलस्य पारेऽश्वः श्वेतः स्थाणौ सेवते तमहं पश्यामीति । अस्यार्थं श्रुतिरेवाविष्करिष्यति । तमेव मया दृष्टं श्वेताश्वमेव हे कद्रु त्वमपि पश्यसीति । नतु ततोऽतिरिक्तम् । सा कद्रूर्दूरं विलोक्य । तं हीत्युवाच । तमश्वं खलु त्वं पश्यसीत्यर्थः । ततोऽधिकमपि दृष्ट्वा कद्रूः पुनर्ब्रूते । किमिति । उच्यते । तस्य बालो न्यषञ्जि तममुं वातो धूनोति तमहं पश्यामीति । बालः पुच्छं न्यषञ्जि स्थाणौ निषक्तमभूत्तं वालं वातो वायुर्धूनोति कम्पयति ॥४॥ सुपर्ण्यभिहितस्यास्य सलिलस्येत्यादेस्तात्पर्यं श्रुतिरेवाह । सा यत्सुपर्ण्युवाचेति । अस्य सलिलस्येत्यादि । सलिलं सागरादिसम्बद्धं यथाऽनतिलङ्घ्यं भवति तथा वेदिरपीति सा सलिलत्वेन निरूप्यते । अग्नेः शुक्रभास्वरत्वात्सर्वाशनत्वाच्च श्वेताश्वरूपत्वम् । यूपस्य स्थाणुत्वं तु साक्षादेव । कद्र्वा यदुक्तं तस्य बाल इत्यादिकं तदभिप्रायं दर्शयति । अथ यत् कद्रूरित्यादिना । रशना हैव सेति । बालवदतिदैर्घ्याद्यूपवेष्टिता रशना बालमित्युच्यते ॥५॥ सा ह सुपर्ण्युवाचेति । सा ह कद्रूरित्यादि । सुपर्ण्या श्वेताश्वादेर्दर्शनार्थमाहृता कद्रूः सुपर्णीं स्वदृष्टस्य बालस्य प्रसिद्धत्वात्त्वमेव दृष्ट्वाऽऽवयोः कस्या जय इति ब्रूहीत्यर्थः ॥६॥ सा ह सुपर्णी पपातेति । एवमुक्ता सुपर्णी गत्वा कद्रूक्तं वास्तवमवगत्य पुनरागतां तां सुपर्णीं कद्रूरुवाद । त्वमजैषी३रह३मिति । प्रश्ने प्लुतिः । तया पृष्टा सुपर्णी त्वमजैषीरित्युवाच । विहितस्याख्यानस्य प्रसिद्धत्वाविष्करणाय नाम करोति । एतद्व्याख्यानमिति । एतद्दिवि वै सोम आसीदित्यादि होवाचेत्येतदन्तमित्यर्थः ॥७॥ सा ह कद्रूरुवाचेति । पराजितया सुपर्ण्या गायत्र्यादिच्छन्दांसि सृष्ट्वा गायत्र्या दिवि स्थितं सोममाहृत्य देवेभ्यः सकाशादात्मनिष्क्रयणं कृतमित्यर्थः सा ह कद्रूरुवाचात्मानं वै त्वा जैषमित्यादिनोक्तः ॥८॥

माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे षष्ठाध्याये द्वितीयब्राह्मणेऽष्टमकण्डिका ।

# ४ । तैत्तिरीयब्राह्मणभाष्यम्

॥ १ ॥

१·४·१·१-५

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
तृतीये बाजपेयो यः स प्राधान्येन वर्णितः ।
पुनराधेयकं पिण्डपितृयज्ञश्च वर्णितः ॥
सोमादिब्राह्मणे पूर्वं यन्नोक्तं तच्चतुर्थके ।
प्रवक्ष्यते ग्रहाश्चास्मिन्ननुवाके समीरिताः ॥

तत्रादौ ग्रहाणां ग्रहणं विधत्ते । उभये वा एते प्रजापतेरध्यसृज्यन्त । देवाश्चासुराश्च । तान्न व्यजानात् । इमेऽन्य इमेऽन्य इति । स देवानꣳशूनकरोत् । तानभ्यषुणोत् । तान् पवित्रेणापुनात् । तान् परस्तात्पवित्रस्य व्यगृह्णात् । ते ग्रहा अभवन् । एतद्ग्रहाणां ग्रहत्वम् । देवता वा एता यजमानस्य गृहे गृह्यन्ते । यद्ग्रहाः । विदुरेनं देवाः । यस्यैवंविदुष एते ग्रहा गृह्यन्त इति । देवा असुराश्चेत्येते द्विविधा अपत्यविशेषाः प्रजापतेः सकाशादधिकत्वेनासृज्यन्त । सृष्टानां च तेषामतिबहुलत्वेन सङ्कीर्णत्वादिमेऽन्ये पृथग्भूता देवा इमे चान्ये पृथग्भूता असुरा इति प्रजापतिस्तद्विभागं न ज्ञातवान् । अतो विभागज्ञानाय देवान्सर्वानंशूनकरोत् । सोमलतावयवरूपाणि शरीराणि देवानां कृतवान् । तानि लताशरीराणि स्वचिह्नत्वेन धृत्वा देवा व्यावृत्तत्वेन प्रजापतिना विज्ञाताः । तांश्च लतादेहानभिषुत्य दशापवित्राख्येन वस्त्रखण्डेन ऋजीषं यथा न संकीर्यते तथा रसं शोधयित्वा पवित्रस्य परस्तादूर्ध्वमवस्थितस्याधोभागे विविधमिन्द्रवाय्वादिदेवार्थं गृहीतवान् । ते च रसा ग्रहा अभवन् । तस्माद् गृह्यन्त इति व्युत्पत्त्या रसानां ग्रहत्वं संपन्नम् । य एते ग्रहास्ता एता देवता भूत्वा ता एव यजमानस्य गृहे हविर्धाने गृह्यन्तेऽत एते ग्रहीतव्या इत्यर्थः । एवं महिमानं जानतो यस्य यजमानस्य ग्रहा एते गृह्यन्ते तमेनं यजमानं देवा विदुः । सम्यगनुष्ठितवानित्येवं देवलोके प्रसिद्धिं गच्छतीत्यर्थः । सौमिकमन्त्रव्याख्यानरूपे षष्ठकाण्डे ऐन्द्रवायवादिग्रहविशेषा एव विहिता न तु ग्रहसामान्यम् । इह तु तद्विधीयत इत्ययमनुवाकस्तत्काण्डशेषः ॥१॥ ग्रहग्रहणं विधायोपांशुग्रहस्य होमं विधत्ते । एषा वै सोमस्याहुतिः । यदुपांशुः । सोमेन देवांस्तर्पयामीति खलु वै सोमेन यजते । यदुपांशुं जुहोति । सोमेनैव तद्देवांस्तर्पयति । इति । वाचस्पतये पवस्व वाजिन्नित्यनुवाकेन सिद्धो योऽयमुपांशुग्रहः । एषैव सोमस्य समन्ताद्धुतिः । अत्र हि पात्रस्थः सर्वोऽपि

सोमो हूयते। ननु ग्रहान्तरवत्क्रियानप्यवशेष्यते। यजमानोऽपि देवांस्तृप्तान्करोमीत्यभिप्रेत्य सोमयागे प्रवृत्तः। तस्मादुपांशुं जुहुयात्। तेन संपूर्णसोमेनैव देवांस्तर्पयति ॥२॥ अथेतरग्रहहोमं विधत्ते। यद्ग्रहाञ्जुहोति। देवा एव तद्देवान् गच्छन्तीति। तेन ग्रहहोमेन लताशरीरधारिणो देवा एव दिव्यविग्रहधारिण इन्द्रवाय्वादीन् देवान्गच्छन्ति। ऊर्ध्वपात्रस्थाः सोमरसा ये ग्रहास्तेषां होमं विधायानूर्ध्वचतुरस्रपात्रस्थिताः सोमरसात्मका ये चमसास्तेषां होमं विधत्ते यच्चमसाञ्जुहोति। तेनैवानुरूपेण यजमानः सुवर्गं लोकमेति। इति। ग्रहैरेव देवानां तुष्टत्वाद्यजमानस्य स्वर्गार्थत्वेनानुरूपश्चमसहोमः। अतस्तेनैवानुरूपेण यजमानः स्वर्गं लोकं प्राप्नोतीति। अथ प्रश्नोत्तराभ्यां रसग्रहणाधाररूपाणि पात्राणि विधत्ते। किं न्वेतदग्र आसीदित्याहुः। यत्पात्राणीति। इयं वा एतदग्र आसीत्। मृन्मयानि वा एतान्यासन्। तान्यकुर्वत। तैर्देवा न व्यावृतमगच्छन्। यद्दारुमयाणि पात्राणि भवन्ति। व्यावृतमेव तैर्यजमानो गच्छति। इति। यज्ञशालायां दृश्यमानानि पात्राणीति यत्तदेतत् पात्रनिष्पत्तेः पुरा किन्नु नाम वस्त्वासीत् इति। एवं पात्रोपादानभूतवस्तुप्रश्नः। एतानि पात्राणि मृन्मयान्येव दृष्टानि तस्मात्पात्रोत्पत्तेः पूर्वं तदुपादानं भूमिरासीदित्युत्तरम्। मनुष्यार्थपाकशालायामपि मृन्मयपात्राणां विद्यमानत्वात्तैः पात्रैर्देवा मनुष्येभ्यो व्यावृतं व्यावृत्तिं न प्राप्ता इति पुनः प्रश्नवादिनां वचनम्। ते देवाः क्वचिदवस्थितान्येव दारुमयाणि पात्राणि दृष्ट्वा तानि स्वार्थं स्वीकृत्य तैर्दारुमयैर्मनुष्येभ्यो व्यावृत्तिं प्राप्ता इत्युत्तरवादिनां वचनम् ॥३॥ तस्माद्दारुमयाणि पात्राणि कर्तव्यानि। तैर्यजमान इतरेभ्यो व्यावृत्तिं प्राप्नोति। तत्र देवार्थानि दारुमयाणि पात्राणि यानि सन्ति यानि चान्यद्रव्यसङ्ग्रहार्थानि मृन्मयानि तदुभयं प्रशंसति। यानि दारुमयाणि पात्राणि भवन्ति। अमुमेव तैर्लोकमभिजयति। यानि मृन्मयानि। इममेव तैर्लोकमभिजयति। इति। अथ प्रश्नोत्तराभ्यां स्थालीं निरूप्य मृन्मयानां दारुमयाणां ग्रहाणां होमयोर्व्यवस्थां विधत्ते। ब्रह्मवादिनो वदन्ति। कस्मात्सत्यात् स्थालीर्वायव्याः सोमग्रहणीरिति। देवा वै पृश्निमदुहन् ॥४॥ तस्या एते स्तना आसन्। इयं वै पृश्निः। तामादित्या आदित्यस्थाल्या चतुष्पदः पशूनदुहन्। यदादित्यस्थाली भवति। चतुष्पद एव तया पशून्यजमान इमां दुहे। तामिन्द्र उक्थ्यस्थाल्येन्द्रियमदुहत्। यदुक्थ्यस्थाली भवति। इन्द्रियमेव तया यजमान इमां दुहे। तां विश्वे देवा आग्रयणस्थाल्योर्जमदुहन्। यदाग्रयणस्थाली भवति। ऊर्जमेव तया यजमान इमां दुहे। तां मनुष्या ध्रुवस्थाल्यायुरदुहन्। यद् ध्रुवस्थाली भवति। आयुरेव तया यजमान इमां दुहे। स्थाल्या गृह्णाति। वायव्येन जुहोति। तस्मादन्येन पात्रेण पशून्दुहन्ति। अन्येन प्रतिगृह्णन्ति। अथो व्यावृतमेव तद्यजमानो गच्छति। इति। वायुः स्वामी येषां दारुमयाणां पात्रविशेषाणां ते वायव्याः।

यद्यप्येकैकस्य पात्रस्यैकैको देवस्तथापि वायुना वरस्य वृतत्वाद्वायव्यशब्देनैव तेषां व्यवहारः। तथा चैन्द्रवायवग्रहब्राह्मणे समाम्नायते। ते वायुमब्रुवन्। इमं नः स्वदयेति। सोऽब्रवीद्वरं वृणै मद्देवत्यान्येव वः पात्राण्युच्यान्त इति। तस्मान्नानादेवत्यानि सन्ति वायव्यान्युच्यन्त इति (तै० सं० ६-४-७-२)। तेच वायव्याः पात्रविशेषाः सोमग्रहणार्था ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णातीत्यादिश्रवणात्। तद्वन्मृन्मयस्थाल्योऽपि चतस्रः सोमग्रहण्य इत्येवमत्र प्रसिद्धिः। ताश्च स्थाल्यः किंविधा इति प्रश्नः। तस्योत्तरमुच्यते। पुरा कदाचिद्भूमिः पृश्निः श्वेतगोरूपाभूत्। भूविकारभूतादित्यस्थाल्युक्थ्यस्थाल्याग्रयणस्थालीध्रुवस्थालीत्येते चत्वारः स्थालीविशेषास्तस्या गोः स्तना आसन्। तांश्च स्तनानादित्यादयो दुग्ध्वा पश्वादीनि फलानि प्राप्तवन्तः। एवं यजमानोऽपि तानि प्राप्तुं स्थालीचतुष्टयं कुर्यात्। कृत्वा च मृन्मयस्थाल्या तत्तद्देवतासम्बन्धिन्या तत्तद्देवार्थं सोमरसं गृह्णीयात्। तं च सोमरसं होमकाले दारुमये वायव्यपात्रेऽवनीय तेन पात्रेण जुहुयात्। यस्मादेवं तस्माल्लोकेऽपि दोहपात्रमन्यत् क्षीरग्रहणपात्रं चान्यत्। अपि चैवं कुर्वाणो यजमान इतरेभ्यो व्यावृत्तिं प्राप्नोति ॥५॥

कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे चतुर्थप्रपाठके प्रथमानुवाके पञ्चमं ब्राह्मणम् ॥

॥ २ ॥

१·५·१·१-५

सोमग्रहाद्या विहिताश्चतुर्थे हि प्रपाठके।
नक्षत्रात्म्येष्टकामन्त्रप्रमुखाः पञ्चमे श्रुताः॥
अनारभ्योक्तितस्तेषां लिङ्गवाक्यानुसारतः।
योजनीयास्तत्र तत्र न्यायाद्वा सम्प्रदायतः॥

तत्र तु प्रथमानुवाके प्रोक्ता नक्षत्रेष्टकामन्त्राः कचिद्विकृतिरूपे चयने द्रष्टव्याः। यथाऽनारभ्याधीतं सामिधेनीसप्तदश्यं प्रकृतेः प्रत्यक्षश्रुतेन पाञ्चदश्येनावरुद्धत्वादवकाशमलभमानं विकृतौ निविशते। एवमेतेऽपि मन्त्राः प्रत्यक्षश्रुतैः कृत्तिका नक्षत्रमग्निर्देवतेत्यादिमन्त्रैः (तै० सं० ४-४-१०-१-३) अवरुद्धायां प्रकृतावकाशाभावाद्विकृतौ निविशन्ते। तत्र प्रथमं मन्त्रमाह। अग्नेः कृत्तिकाः। शुक्रं परस्ताज्ज्योतिरवस्तात् इति। अग्निर्नक्षत्रस्य स्वामी तस्य स्वभूताः सप्त कृत्तिका अबहुलादयः। ताश्च मध्ये वर्तन्ते शुक्रं तेजः परस्ताद्वर्तते। ज्योतिर्ज्वाला सा चावस्तादवरपार्श्वे वर्तते। तासामुभयपार्श्वयोः शुक्रज्योतिषोरभिमानिदेवते अत्यन्तदीप्तिमत्यौ परं दीपयन्त्यौ वर्तेते। एवमुत्तरेष्वपि मन्त्रेषु योज्यम्। द्वितीयं मन्त्रमाह प्रजापते रोहिणी। आपः परस्ता-

दोषधयोऽवस्तात् इति। प्रजापतिर्नक्षत्रस्वामी देवः। तस्य स्वभूता रोहिणी मध्ये वर्तते। आप ओषधयश्च पार्श्वद्वये वर्तन्ते। तृतीयं मन्त्रमाह। सोमस्येन्वकाः। विततानि परस्ताद्वयन्तोऽवस्तात् इति। इन्वका मृगशीर्षसङ्गतास्तारकाः। विततानि विस्तीर्णाः। वयन्तः पटस्य निर्मातारो देवताविशेषाः। चतुर्थं मन्त्रमाह। रुद्रस्य बाहू। मृगयवः परस्ताद्विक्षारोऽवस्तात् इति। बाहुशब्देन द्विवचनान्तेन आर्द्रानक्षत्रमुपलक्ष्यते। बाहुवत्प्रयत्नहेतुत्वात्। मृगयवो व्याधविशेषा देवाः। विक्षारो विशिष्टो लक्ष्यवेधः। पञ्चमं मन्त्रमाह। अदित्यै पुनर्वसू। वातः परस्तादार्द्रमवस्तात् इति। वातो वृष्टेः पूर्वभावी वायुः। आर्द्रं वृष्टिजन्यं द्रवत्वम् ॥१॥ षष्ठं मन्त्रमाह। बृहस्पतेस्तिष्यः। जुह्वतः परस्ताद्यजमाना अवस्तात्। इति। जुह्वतो होमकर्तार ऋत्विजः। यजमानाः स्वामिनः। सप्तमं मन्त्रमाह। सर्पाणामाश्लेषाः। अभ्यागच्छन्तः परस्तादभ्यानृत्यन्तोऽवस्तात् इति। अभ्यागच्छन्तः सर्पनृत्तदर्शनार्थमुत्सुका अभिमुखमागच्छन्तः पुरुषाः। अभ्यानृत्यन्तः। फणानां प्रसारणेनाभिमुखं नृत्यं कुर्वन्तः सर्पाः। अष्टमं मन्त्रमाह। पितॄणां मघाः। रुदन्तः परस्तादपभ्रंशोऽवस्तात् इति। रुदन्तो रोदनं कुर्वन्तो बन्धवः। अपभ्रंशो देहपातः। नवमं मन्त्रमाह। अर्यम्णः पूर्वे फल्गुनी। जाया परस्तादृषभोऽवस्तात् इति। जाया प्रसिद्धा। ऋषभः सेक्ता पुरुषः। दशमं मन्त्रमाह। भगस्योत्तरे। वहतवः परस्ताद्वहमाना अवस्तात् इति। उत्तरे इत्यत्र फल्गुनो इत्यनुवर्तते। पितृगृहात्कन्यया नीयमाना धनविशेषा वहतवः। तेषां वोढारो वहमानाः ॥२॥ एकादशं मन्त्रमाह। देवस्य सवितुर्हस्तः। प्रसवः परस्तात्सनिरवस्तात् इति। प्रसवः कार्येषु प्रेरणम्। सनिर्धनदानम्। द्वादशं मन्त्रमाह। इन्द्रस्य चित्रा। ऋतं परस्तात्सत्यमवस्तात् इति। चिन्त्यमानं वस्तुतत्त्वमृतमुच्यते। वाच्यमानं वस्तुतत्त्वं सत्यम्। त्रयोदशं मन्त्रमाह। वायोर्निष्ट्या। व्रततिः परस्तादसिद्धिरवस्तात् इति। निष्ट्या स्वातिः। व्रततिर्वायुना चालयितुं शक्या वल्ली। असिद्धिर्वल्ल्या अधःपातः। चतुर्दशं मन्त्रमाह। इन्द्राग्नियोर्विशाखे। युगानि परस्तात्कृषमाणा अवस्तात्। इति। कर्षकेण बलीवर्दगले स्थाप्यमानं काष्ठं युगम्। कृषमाणाः कृषिकर्तारः। पञ्चदशं मन्त्रमाह। मित्रस्यानुराधाः। अभ्यारोहत्परस्तादभ्यारूढमवस्तात् इति। सम्मुखत्वेनावस्थितमुन्नतं देशमारोढुमुद्यतं पदमभ्यारोहत्। पूर्ववत्कृतारोहणं पदमभ्यारूढम् ॥३॥ षोडशं मन्त्रमाह। इन्द्रस्य रोहिणी। शृणत्परस्तात्प्रतिशृणदवस्तात्। इति। रोहिणीशब्देन ज्येष्ठोच्यते। सङ्ग्रामारोहणहेतुत्वात्। शृणद्धिंसनोद्यतं स्वकीयं बलम्। प्रतिशृणत् प्रतिकूलत्वेन हिंसोद्युक्तं परकीयं बलम्। सप्तदशं मन्त्रमाह। निर्ऋत्यै मूलबर्हणी। प्रतिभञ्जन्तः परस्तात्प्रतिशृणन्तोऽवस्तात् इति। यन्मूलनक्षत्रं तदेव विरोधिपदार्थ-

निबर्हणशक्तत्वाद्बर्हणीत्युच्यते। प्रतिकूलां सेनां भग्नां कुर्वन्तः पुरुषाः प्रतिभञ्जन्तः। स्वात्मानं प्रातिकूल्येन हिंसन्तः पुरुषाः प्रतिश्रृणवन्तः। अष्टादशं मन्त्रमाह। अपां पूर्वा अषाढाः। वर्चः परस्तात्समितिरवस्तात् इति। परसैन्याभिभवक्षमं बलं वर्चः। समितिर्युद्धम्। एकोनविंशं मन्त्रमाह। विश्वेषां देवानामुत्तराः। अभिजयत्परस्तादभिजितमवस्तात् इति। जयाभिमुखं सैन्यमभिजयत्। लब्धजयमभिजितम्। अस्मिन्मन्त्रे अषाढा इत्यनुवर्तते। विंशं मन्त्रमाह। विष्णोः श्रोणा। पृच्छमानाः परस्तात्पन्था अवस्तात् इति। श्रवणनक्षत्रं श्रोणा। तल्लोकजिज्ञासवः पुरुषाः पृच्छमानाः। तल्लोकप्राप्त्युपायः पन्थाः ॥४॥ एकविंशं मन्त्रमाह। वसूनां श्रविष्ठाः। भूतं परस्ताद्भूतिरवस्तात् इति। धनिष्ठानक्षत्रं श्रविष्ठाः। पूर्वमनुभूतमैश्वर्यं भूतम्। अनुभूयमानमनुभविष्यमाणं चैश्वर्यं भूतिः। द्वाविंशं मन्त्रमाह। इन्द्रस्य शतभिषक्। विश्वव्यचाः परस्ताद्विश्वक्षितिरवस्तात्। इति। पूर्वं चित्रानक्षत्रस्वामी योऽयमिन्द्र उक्तः सोऽयं त्वष्टा परमैश्वर्ययोगादिन्द्र उच्यते। अन्यत्र त्वष्टा नक्षत्रमभ्येति चित्रामिति मन्त्राम्नानात्। यत्त्विन्द्रस्य रोहिणीत्युक्तं तत्र ज्येष्ठानक्षत्राधिपतिः प्रसिद्ध एवेन्द्रः। इन्द्रो ज्येष्ठामनु नक्षत्रमेतीत्येवाम्नानात्। अत्र त्विन्द्रशब्देन परमैश्वर्ययोगाद्वरुणो गृह्यते। क्षत्रस्य राजा वरुणोऽधिराजः। नक्षत्राणां शतभिषा वसिष्ठ इति मन्त्राम्नानात्। विश्वं व्यचति व्याप्नोतीति विश्वव्यचा वृष्टिः। विश्वेषां शस्यानामाधारभूतः क्षेत्रविशेषो विश्वक्षितिः। त्रयोविंशं मन्त्रमाह। अजस्यैकपदः पूर्वे प्रोष्ठपदाः। वैश्वानरं परस्ताद्वैश्वावसवमवस्तात् इति। अजशब्देनैकपाच्छब्देन च सूर्योऽभिधीयते। तं सूर्यं देवमज एकपादमित्याम्नानात्। जगदनुग्रहाय स्वेच्छागृहीतं शरीरं मुक्त्वा मनुष्यवत्कर्मपारतन्त्र्येण जन्माभावादजत्वम्। एक एव पद्यते सञ्चरतीति एकपाद्। सूर्य एकाकी चरतीति मन्त्रान्तरे विशेषात्। विश्वेषां नराणां हितं जगत्प्रकाशनं वैश्वानरम्। आदित्याज्जायते वृष्टिरिति स्मृत्यभिहितवृष्टिद्वारा विश्वेषां निवासहेतुत्वं वैश्वावसवम्। चतुर्विंशं मन्त्रमाह। अहेर्बुध्नियस्योत्तरे। अभिषिञ्चन्तः परस्तादभिषुण्वन्तोऽवस्ताद् इति। अहिशब्देन बुध्नियशब्देन चावसथः पञ्चमोऽग्निरुच्यते। अत एवाधानप्रकरणे अहे बुध्नियमन्त्रं मे गोपायेत्याम्नातम्। सोऽयमहिंसकत्वादन्येन हिंसितुमशक्यत्वाच्चाहिः। बुध्ने मूले जगदादावुत्पन्नत्वाद्बुध्नियः। उत्तर इत्यत्र प्रोष्ठपदा इत्यनुवर्तते। राजसूयादियागविशेषेष्वभिषेककर्तार ऋत्विजोऽभिषिञ्चन्तः। सोमयागेष्वभिषवं कुर्वन्तोऽभिषुण्वन्तः। पञ्चविंशं मन्त्रमाह। पूष्णो रेवती। गावः परस्ताद्वत्सा अवस्तात् इति। गावः प्रसिद्धाः वत्साः पशवः पोषणीयाः। षड्विंशं मन्त्रमाह। अश्विनोरश्वयुजौ। ग्रामः परस्तात्सेनावस्तात् इति। देवभिषग्भ्यामश्विभ्यां चिकित्सनीय एकस्थाननिवासी जनसङ्घो ग्रामः। परराष्ट्रे

गच्छज्जनसङ्घः सेना। साप्यश्विभ्यां चिकित्सनीयैव। सप्तविंशं मन्त्रमाह। यमस्यापभरणी। अपकर्षन्तः परस्तादपवहन्तोऽवस्तात् इति। पापिजनान्घातयितुं बलादानयन्तो दूता अपकर्षन्तः। आनीतानां यातनां कुर्वन्तोऽपवहन्तः। एतेषु सर्वेष्वपि मन्त्रेषु नक्षत्राधिपतिदेवताया अनुकूलौ पार्श्वद्वयवर्तिनावर्थौ योजनीयौ। अष्टाविंशैकोनत्रिंशमन्त्रयोः प्रतीके दर्शयति। पूर्णा पश्चाद्यत्ते देवा अदधुरिति। पूर्णा पश्चादुत पूर्णा पुरस्तादित्यृगेका (तै० सं० ३-५-१-१)। यत्ते देवा अदधुर्नामधेयमित्यृगन्या (तै० सं० ३-५-१-२)। एतच्चोभयं संहितायां तृतीयकाण्डे व्याख्यातम्। एतैरेकोनत्रिंशन्मन्त्रैः क्वचिद्विकृतिविशेषे चयने प्रकृतिमन्त्रान्बाधित्वा नक्षत्रेष्टका उपदध्यात् ॥५॥ इति प्रथमोऽनुवाकः ॥१-५॥

कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे पञ्चमप्रपाठके प्रथमानुवाके पञ्चमं ब्राह्मणम्।

॥ २ ॥

१·५·१०·१-२

नवमे दीक्षणीयादीनि बहिष्पवमानोपक्रमान्तानि सोमाङ्गान्युक्तानि। दशमे त्रिवृदादिस्तोमरूपाणि सोमाङ्गान्युच्यन्ते। तत्रादौ चात्वालखननं सप्रमाणं विधत्ते। स समुद्र उत्तरतः प्राज्वलद्भूम्यन्तेन। एष वाव स समुद्रः। यच्चात्वालः। एष उ वेव स भूम्यन्तः। यद्वेद्यन्तः। तदेतत्त्रिशलं त्रिपूरुषम्। तस्मात्तं त्रिवितस्तं खनन्ति। इति। योऽयं प्रसिद्धो लवणसमुद्रः सोऽयमुत्तरस्यां दिशि भूम्यन्तेन भूमेरन्तिमभागेन सह कदाचित्प्रज्वलितोऽभूत्। सोऽयमत्र देवयजनभूमौ सम्पाद्यते। योऽयं चात्वालाख्यो गर्तोऽस्ति स एष एवात्र समुद्रस्थानीयः। योऽयं वेदेरवसानदेशः सोऽयं भूमेरवसानभागः। एतावती वै पृथिवी यावती वेदिरिति भूमित्वं वेदेराम्नातम्। यत्समुद्रस्य पुरुषत्रयपरिमाणमूर्ध्वज्वलनं तदेवात्र चात्वाले त्रिशलं शललोमृगसम्बन्धिरोमत्रयपरिमितं भवति। तस्य च रोम्णो वितस्तिः परिमाणम्। तद्रोमत्रयमत्र पुरुषत्रयरूपेणोपचर्यते। तस्मात्तं चात्वालं वितस्तित्रयपरिमितं खनेयुः। तमेतं चात्वालमादित्यरूपेण प्रशंसति। स सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत आसीत्। तं यदस्या अध्यजनयन्। तस्मादादित्यः। अथ यत्सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत आसीत्। साऽस्य कौशिकता। इति। स चात्वालः परितः सुवर्णरजतनिर्मिताभ्यां शकलाभ्यां गृहीतोऽभवत्। स्तोत्रं कुर्वाणाः सामगाः स्तोत्रावृत्तिगणनार्थं यां काष्ठशलाकां प्रादेशमात्रपरिमितां भूमौ स्थापयन्ति सेयं कुशीत्युच्यते। तादृशं सुवर्णरजतनिर्मितं कुशीद्वयं चात्वालस्यान्तिके स्थापयित्वा तस्य चात्वालस्याहोरात्रनिष्पादकेनादित्येन साम्यं संपादितवन्तः। यस्मादस्या

भूमेरप्युपरि तं चात्वालमजनयन् । तस्मादयमदितेः सम्बन्धित्वादादित्य इत्युच्यते ॥१॥ कुशीद्वयपरिगृहीतत्वाच्च कौशिक इत्यपि नाम । इत्थं चात्वालं विधाय त्रिवृदादिस्तोमान्विधातुमादौ त्रिवृत्स्तोमं प्रशंसति । तं त्रिवृताभिप्रास्तुवत । तं त्रिवृताददत । तं त्रिवृताहरन् । यावती त्रिवृतो मात्रा । इति । त्रिवृतत्तृचरूपा अवयवा यस्य स्तोमस्यायं स्तोमस्त्रिवृत । तेन स्तोमेन देवास्तमादित्यं स्तुत्वा तं स्वाधीनत्वेन समादाय स्वापेक्षिते स्थाने समाहरन् । ततस्त्रिवृत्स्तोमस्य सम्बन्धिनी मीयतेऽवगम्यत इति मात्रा धनादिसम्पाद्या यावती विद्यते तावती देवैर्लब्धेति शेषः । एवमन्यानपि त्रीन्स्तोमान् प्रशंसति । तं पञ्चदशेनाभिप्रास्तुवत । तं पञ्चदशेनाददत । तं पञ्चदशेनाहरन् । यावती पञ्चदशस्य मात्रा । इति । एकस्मिंस्तृचे वर्तमानास्तिस्र ऋचो ब्राह्मणोक्तेनावृत्तिविशेषेण पञ्चदशसङ्ख्याका यस्मिन्सम्पाद्यन्ते स्तोमे सोऽयं स्तोमः पञ्चदशः । एवं सप्तदशैकविंशावपि । तत्र सप्तदशस्तोमेन स्तुत्वा यदादित्य आह्रियते तदानीं तस्य तेजः कियदप्यधोऽपतत् । यद्यपि हरःशब्देनापि तेज एवाभिधीयते तथापि पौनरुक्त्यपरिहाराय क्लेशो लक्ष्यते । अतः कियदपोति व्याख्यातम् । अन्यत्पूर्ववद्व्याख्येयम् ॥२॥

कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे पञ्चमप्रपाठके दशमानुवाके द्वितीयं ब्राह्मणम् ।

॥ ४ ॥

३·१०·११·१-५

दशमे सावित्राग्न्यवयवानां नामवेदनमुक्तम् । एकादशेऽन्वयव्यतिरेकाभ्यां विद्या प्रशस्यते । तत्रादावन्वयव्यतिरेकोपयुक्तं पुरुषद्वयमुपन्यस्यति । कश्चिद्ध वा अस्माल्लोकात्प्रेत्य । आत्मानं वेद । अयमहमस्मीति । कश्चित्स्वं लोकं न प्रतिप्रजानाति । इति । लोके विवेकी विवेकरहितश्चेति द्वौ पुरुषौ । तत्र कश्चिद्विवेकी पुमानस्माल्लोकात्प्रत्यक्षतो दृश्यमानाद्देहादिसङ्घातात्प्रेत्य विवेकेन स्वयं पृथग्भूत्वाऽऽत्मानं स्वस्वरूपं वेद । केन प्रकारेणेति तदुच्यते । अयं सावित्रोऽग्निरादित्यरूपः सर्वात्मकः सोऽहमस्मीति वेत्ति । अन्यस्तु कश्चिदविवेकी स्वं लोकं देहेन्द्रियादिव्यतिरिक्तं विवेकिदृष्ट्याऽऽलोकयितुं शक्यं स्वमात्मानं न वेद । तावुभौ पुरुषौ पुनर्विविच्य दर्शयति । अग्निमुग्धो हैव धूमतान्तः । स्वं लोकं न प्रतिप्रजानाति । अथ यो हैवेतमग्निं सावित्रं वेद । अयमहमस्मीति । स स्वं लोकं प्रति प्रजानाति । इति । यः पुमानग्निमुग्धो विद्यारहितः केवल एवाग्निः क्रतुनिष्पत्तिद्वारा पुरुषार्थं प्रयच्छतीत्येवं मूढो धूमतान्तः पुनः पुनः कर्मस्वेव प्रवृत्तो धूमोपलक्षितकर्मव्यापारेण ग्लानिं प्राप्तो भवति स

पुमान्वर्णाश्रमाधारमानुषदेहरहितं देवतारूपं स्वमात्मानं न जानाति। अथ तस्माद्विलक्षणो यः पुमानेतं ध्यातव्यं सावित्रमग्निं वेद स एव पुमानस्माद्वर्णाश्रमाधारत्वेनावलोक्यमानाद्देहाद्विवेकेन पृथग्भूत्वा स्वात्मानमयं सावित्रोऽग्निरहमस्मीत्येवं वेद ॥१॥ स एव स्वं लोकं विवेकिभिरवलोकयितुं योग्यं निजस्वरूपं प्रतिविविच्य सम्यग्जानाति। उभयोर्मध्ये विवेकिन एव पुरुषार्थं दर्शयति। एष उ चैवैनं तत्सावित्रः। स्वर्गं लोकमभिवहति। तत्तदा देहपातादूर्ध्वमेष एवोपासितः सावित्रोऽग्निरेनमुपासकमादित्यसायुज्यरूपं स्वर्गलोकं प्रापयति। अथ विद्यारहितस्य समृद्धफलाभावलक्षणं व्यतिरेकं दर्शयति। अहोरात्रैर्वा इदं सयुग्भिः क्रियते। इतिरात्रायादीक्षिषत। इतिरात्राय व्रतमुपागुरिति। तानिहानेवंविदुषः। अमुष्मिँल्लोके शेवधिं धयन्ति। धीतं हैव स शेवधिमनुपरैति। इति। सयुग्भिर्यजमानेन सहावस्थितैरहोरात्रदेवैरेवेदं कर्म क्रियते। नह्यहोरात्राभिमानिनो देवान्वर्जयित्वा किंचिदपि कर्म कर्तुं शक्यम्। अहोरात्रव्यतिरिक्तस्य कालविशेषस्याभावात्। इतिरात्रायेत्येतादृशी विद्यासंयुक्ता रात्रिर्यस्मिन्कर्मणि तदर्थमेते यजमाना अदीक्षिषत नियमं स्वीकृतवन्तः। इतिरात्रायेत्येतादृशी विद्यारहिता रात्रिर्यस्मिन्कर्मणि तदर्थमेते यजमाना व्रतमुपागुर्नियमविशेषं प्राप्ता इत्येवं ये यजमाना विद्यासंयुक्ता ये च विद्यारहितास्तान्सर्वानहोरात्रदेवता जानन्तीति शेषः। एतेषु द्विविधेषु मध्ये यः पुमानेवं पूर्वोक्तरूपं सावित्रमग्निं न वेत्ति तस्यानेवंविदुषो यजमानस्य शेवधिं निधिसमानं फलं स्वर्गलोके धयन्त्यहोरात्रदेवताः प्रथमं तत्सारं पिबन्ति। स विद्यारहितो यजमानो धीतमहोरात्रैः पीतं शेवधिं कर्मफलमनु पश्चान्निष्पीडितरसेक्षुवन्निःसारं परैति प्राप्नोति ॥२॥ विद्यारहितस्य संपूर्णफलाभावं व्यतिरेकमुक्त्वा विद्यासंयुक्तस्य तत्सद्भावरूपमन्वयं दर्शयति। अथ यो हैवैतमग्निं सावित्रं वेद। तस्यैवाहोरात्राणि अमुष्मिँल्लोके शेवधिं न धयन्ति। अधीतं हैव स शेवधिमनुपरैति। इति। विद्याहीनाद्वैलक्षण्यार्थोऽथशब्दः। यः पुमानेतं सावित्रमग्निं यथोक्तप्रकारेण वेद तस्यैव शेवधिं निधिसमानं फलमहोरात्रदेवताः स्वर्गलोके न धयन्ति। स्वयं न पिबन्ति। किन्तु तस्यैव सर्वं प्रयच्छन्ति। अधीतं तैर्देवैरपीतं शेवधिं निधिसदृशं संपूर्णं कर्मफलं स विद्वाननुक्रमेण प्राप्नोति। इत्थमन्वयव्यतिरेकाभ्यां विदुषः फलबाहुल्यं दर्शितम्। अथ तां विद्यां प्रशंसितुमुपाख्यानं दर्शयति। भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास। तं ह जीर्णिं स्थविरं शयानम्। इन्द्र उपव्रज्योवाच। भरद्वाज। यत्ते चतुर्थमायुर्दद्याम्। किमेतेन कुर्या इति। ब्रह्मचर्यमेवैनेन चरेयमिति होवाच। तं ह त्रीन्गिरिरूपानविज्ञातानिव दर्शयांचकार। तेषां हैकैकस्मान्मुष्टिमाददे। स होवाच भरद्वाजेत्यामन्त्र्य। वेदा वा एते। अनन्ता वै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः। अथ त इतरदननुक्तमेव। एहीमं विद्धि। अयं वै

सर्वविद्येति। तस्मै हैतमग्निं सावित्रमुवाच। तं स विदित्वा। अमृतो भूत्वा स्वर्गलोक-मियाय। आदित्यस्य सायुज्यम्। इति। पुरा कदाचिद्भरद्वाजाख्यो महर्षिः सर्वेषां वेदाना-मध्ययने कृतप्रयत्न इन्द्रं प्रसाद्य तत्प्रसादाच्छतसंवत्सरपरिमितानि त्रीणि आयूंषि लब्ध्वा तैरायुर्भिर्ब्रह्मचर्यमुवास। वेदाध्ययनमुद्दिश्य गुरुकुले वासं कृतवान्। शतत्रयस्यान्ते जीर्णशरीरं वृद्धमशक्तत्वेन शयानं भरद्वाजं प्रतीन्द्र उपेत्योवाच। यच्चतुर्थमायुस्तुभ्यं दद्या-मेतेनायुषा किं कुर्याः कं पुरुषार्थं साधयसीति। स च वेदाध्ययनमेव करिष्यामीत्युवाच ॥३॥ ततः सर्ववेदाध्ययनकृतयत्नं तं भरद्वाजमुद्दिश्य सर्वाध्ययनस्याशक्यत्वं बोधयितुमृग्यजुःसाम-वेदानां त्रयाणां स्वकीययोगसामर्थ्येन पर्वताकारत्वं संपाद्य गिरित्रयरूपान्पूर्वमविज्ञातानेव वेदा-नस्मै दर्शयामास। ततस्तेषां पर्वतानां मध्य एकैकस्मात्पर्वतान्मुष्टिना पांसूनाददे। आदायैवमुवाच। हे भरद्वाज एते त्रयः पर्वता वेदा एव। तत्रैकैकः पांसुरेकैको वेदस्तस्मा-दनन्ता वेदास्तन्मध्ये त्वमेतैस्त्रिभिरायुर्भिरेतन्मुष्टित्रयपरिमितं वेदजातं गुरूपदेशमन्वधीतवानसि। अथानन्तरं तवेतरद्वेदजातमनधीतमेव। तस्मात्सर्ववेदाध्ययनमशक्यमेव। यदि सर्ववेदा-ध्ययनफलमपेक्षितं तर्ह्यागच्छेमं सावित्रमग्निं विद्धि ध्यानेन साक्षात्कुरु। अयमेव सावित्रोऽग्निः सर्ववेदविषया विद्येति ॥४॥ एवं बोधयित्वा तस्मै भरद्वाजायैतं सावित्रमग्निं पूर्वोक्तप्रकारेणोवाच। ततः स भरद्वाजस्तं सावित्रमग्निं ध्यानेन स्वात्मतया साक्षात्कृत्य तदग्निरूपः स्वयममृतो देवो भूत्वा वर्तमानदेहादूर्ध्वं स्वर्गं प्राप्य तत्रादित्यसायुज्यं प्राप्तवान्। इत्थमुपाख्यानेन विद्या-महिमानं दर्शयित्वा भरद्वाजवदन्यस्यापि वेदितुस्तत्फलं दर्शयति। अमृतो हैव भूत्वा। स्वर्गं लोकमेति। आदित्यस्य सायुज्यम्। य एवं वेद। इति। इतोऽप्यधिकस्य फलस्य शङ्कां वेदत्रयेऽपि वारयितुमाह। एषो एव त्रयी विद्या। यावन्तꣳ ह वै त्रय्या विद्यया लोकं जयति। तावन्तं लोकं जयति। य एवं वेद इति। येयं सावित्राग्निविद्या। एषैव वेदत्रयीविद्यासमाना। वेदत्रयोक्तसर्वकर्मानुष्ठानेन यावत्फलं तावदनेन सावित्रज्ञानेनैव प्राप्यते। न ह्यादित्योपाधिकहिरण्यगर्भप्राप्तेरधिकं फलं कर्मकाण्डे किंचित्सम्भवति ॥५॥

कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे तृतीयकाण्डे दशमप्रपाठके एकादशानुवाके पञ्चमं ब्राह्मणम्।

---

# ५। ताण्ड्यमहाब्राह्मणभाष्यम्

॥ १ ॥

१·१·८

अत्र सूत्रम्। सर्वासां देवस्येति पुरस्ताज्जप इति (ला० श्रौ० २-७)। सर्वासां दक्षिणानां प्रतिग्रहे प्रथमतो देवस्य त्वेति मन्त्रं जपेत्। सवितुः प्रेरकस्य देवस्य प्रसवे प्रेरणेऽनुज्ञायां सत्यां त्वा त्वां दक्षिणां प्रतिगृह्णामि तत्र बाहू च हस्तौ च साधनम्। अंसमणिबन्धयो र्मध्यवर्ती दीर्घो भागो बाहुः। मणिबन्धस्याग्रेऽवस्थितः साङ्गुलिर्भागो हस्तः। अश्विनौ बाह्वोरभिमानिदेवौ हस्तयोस्तु पूषा। ततस्तयोस्तत्सम्बन्धोऽभिधीयते। अत्र सूत्रम्। (ला० श्रौ० २-७) वरुणस्त्वेति यथादेवतं प्रतिगृह्णीयादिति। यस्य द्रव्यस्य या देवता प्रतिग्रहमन्त्रे पठिता तामादिश्य तद्द्रव्यं प्रतिगृह्णीयात् वरुणायाश्वमग्नये हिरण्यं वायवे मृग इत्यादि। हे दक्षिणे एतत्सञ्ज्ञके देवि त्वा त्वां वरुणो देवो गृहं नयतु वरुणप्रीत्यर्थमश्वमहं प्रतिगृह्णामि तेनानुगृहीतेनाश्वेन देवत्वमहमशीय प्राप्नवानि। दात्रे यजमानाय वयोऽन्नं भूयात् मह्यं प्रतिग्रहीत्रे मयः सुखं भूयात्। यद्वै शिवं तन्मय इति श्रुत्यन्तरम्। अश्वप्रतिग्रहे मन्त्र उक्तः। गोप्रतिग्रहे मन्त्रमाह। रुद्रप्रीत्यर्थं गां प्रतिगृह्णामि तया रुद्रानुगृहीतया गवा। रुद्रस्य पशुपतित्वाद्गोस्तत्सम्बन्धः। अन्यत्पूर्ववत्। अथ अजप्रतिग्रहे मन्त्रमाह। अस्मिन्मन्त्रे तेनामृतत्वमित्यादिभागस्यानुषङ्गः। प्रजापतिमुखादग्नेरजस्य च सहोत्पत्तेस्तत्सम्बन्धः। अन्यत्पूर्ववत्। हिरण्यप्रतिग्रहे मन्त्रमाह। अस्मिन्मन्त्रे वरुणस्त्वेत्यादेः पूर्वभागस्य तेनेत्यादेरुत्तरभागस्य चानुषङ्गः कार्यः। हिरण्यस्याग्निरेतोरूपत्वात्सम्बन्धः। अजायाः प्रतिग्रहे मन्त्रमाह। अस्मिन्मन्त्रे वरुणस्त्वेत्यादेः पूर्वभागस्यैव अनुषङ्गः। आग्नेयी वा एषा यदजेति श्रुत्यन्तरादजाया अग्नेः सम्बन्धः। लताभूतस्य सोमस्य ओषधिषु सारभूतत्वेनाजयोपजीव्यत्वात्तत्सम्बन्धः। तथा चोक्तम्। श्यामलास्तास्तु निष्पन्नाः सोमाख्याश्छागभोजनमिति। अन्नस्येति मन्त्रो लिङ्गादन्नप्रतिग्रहे विनियोज्यः। सूत्रकारस्तु अवेः प्रतिग्रहेऽयं मन्त्रोऽधिक इति दर्शयति। (ला० श्रौ० २-८) अन्नस्येति प्राग् वारुणादवेः प्रतिग्रहेऽयं मन्त्रोऽधिक इति। अन्नस्येति प्राग्वारुणादवेः प्रतिग्रहे वरुणस्त्वेत्यतः पूर्वं वा अयं मन्त्रो जप्यः। अन्नस्येति कर्मणि शेषविवक्षायां षष्ठी। अन्नस्य पतिरन्नानां पालयिता अन्नस्यान्नं मह्यं प्रादाद्दत्तवान्। अन्नं विशेष्यते। अनमीवस्य। अमीवा रोगस्तद्रहितस्य। आरोग्यकरस्य। शुष्मिणो बलवतो बलहेतुभूतस्य। इमे अपि कर्मणि षष्ठ्यौ। तस्मा

अन्नपतये अग्नये नमोऽस्तु । कथंभूताय । विश्वजनस्य सर्वजनस्य सर्वप्राणिजातस्य । क्षामाय क्षयकारिणे । षै जै क्षै क्षये । तस्मात् क्तोऽधिकरणे च० ( पा० ३-४-७६ ) इति कर्तरि निष्ठा । क्षायो मः ( पा० ८-२-४३ ) इति तकारस्य मकारः । ईदृशाग्नय इत्यर्थः । हे भुञ्जति उपभोग्यत्वेन पालयित्रि त्वदुपभोक्तारं मां मा हिंसीः । अवेः पश्वन्तरभोगसाधनत्वेनाग्नत्वेन संस्तावकं तत्प्रतिग्रहमन्त्रैकदेशमुक्त्वा तच्छेषमन्त्रमाह । त्वष्टा हि रूपाणां कर्ता । त्वष्टा वै पशूनां मिथुनानां रूपकृदिति (तै० स० २-१-८-३) श्रुत्यन्तरात् । नानारूपा अवयो भवन्तीति त्वष्टुरवेश्च सम्बन्धः । शिष्टं पूर्ववत् । अत्र सूत्रं (ला० श्रौ० २-८) ग्नास्त्वा कृन्तन्निति वसनस्येति । वस्त्रप्रतिग्रहे ग्नास्त्वा कृन्तन्निति प्राग्वारुणात्पुरस्ताज्जपाद्वा जपेत् । यदि तद्वस्त्रमतन्तुनिर्मितं वल्कलादिजं स्यात्तत्रायं न प्रयोज्यः । तत्र सूत्रं (ला० श्रौ० २-८) तदुदस्येदतान्तव इति । गच्छन्ति पुमांस एना इति ग्नाः स्त्रियः । हे वस्त्र त्वा त्वामकृन्तन् । निष्पादनानन्तरं कर्तनेन छेदनेन संपादितवन्तोऽपसः । अपः कर्म तद्वन्तो वा तन्तुग्रथनकुशलाः पुरुषा अतन्वत । पटस्य दीर्घाणि सूत्राणि । तान्यकुर्वन्नित्यर्थः । ता वयित्र्यः । वेञ् तन्तुसन्ताने । वयनकर्त्र्यो योषितोऽवयन् । तिरश्चीनानि सूत्राणि समयोजयन् । अथ वस्त्रप्रतिग्रहमन्त्रमिति शेषः । स्पष्टोऽर्थः । आसनशय्यादेरचेतनवस्तुनः प्रतिग्रहे मन्त्रमाह । इयं वा उत्तान आङ्गिरस इति श्रुत्यन्तरादुत्तानाङ्गिरसशब्दाभ्यामुच्यते । ऊर्ध्वमुखत्वादुत्तानः । अङ्गिरसा तपसा लब्धत्वादाङ्गिरसः । लोकाभिप्रायेण पुल्लिङ्गता । अप्राणतो भूमेश्च निष्कम्पत्वसाम्यात्सम्बन्धः । अन्यत्पूर्ववत् । उष्ट्रप्रतिग्रहमन्त्रमाह । तेनेत्यादेर्वाक्यशेषस्यानुषङ्गः । मृगप्रतिग्रहमन्त्रमाह । वरुणस्त्वेतिपूर्वभागस्यानुषङ्गः । मृगस्य शीघ्रगामित्वेन तद्वाहनत्वाद्वायुसम्बन्धः । उष्ट्रादीन्यपि सर्वदक्षिणे देयानि । पुरुषहस्तिवराहव्रीहीणां प्रतिग्रहे चतुरो मन्त्रानाह । अत्र पुरुषमन्त्रे तेनेत्याद्युत्तरभागानुषङ्गः । हस्तिमन्त्रे पूर्वोत्तरयोर्द्वयोरप्यनुषङ्गः । तथा वराहमन्त्रे । व्रीहियवमन्त्रे तु पूर्वभागस्यैवानुषङ्गः । यत्र पुनर्व्रीहियवयोरेक एव दीयते तत्र मन्त्रो विभज्य प्रयोक्तव्यः । प्रजापतये व्रीहीन् । प्रजापतये यवानिति । प्रजापतिना सृष्टत्वात्पुरुषादीनां सम्बन्धः । तिलमाषप्रतिग्रहे मन्त्रमाह । तिलमाषादीनां क्षेत्रजन्यत्वात्तत्स्वामिना सम्बन्धः । अश्वगर्दभसङ्करजस्य प्रतिग्रहे मन्त्रमाह । प्रेरकस्य सवितुः प्रेरणाद्विलक्षणमातापितृभ्यां विजातीयस्याश्वतरस्योत्पत्तिः । अत्र सूत्रम् । तेन क इदमित्युपरिष्टाज्जप इति ( ला० श्रौ० २-८ ) । यस्मिन्मन्त्रे तेनामृतत्वमित्यादिप्रतिग्रहीत्र इत्यन्त उत्तरभागो नाम्नातस्तस्मिन्मन्त्रे तं भागमनुषज्य तमिमं च जपेत् । कशब्दाभिधेयः प्रजापतिरिदं दक्षिणाद्रव्यं कस्मै प्रजापतयेऽदाद्दत्तवान् । प्रजापतिरेव तयोर्दानप्रतिग्रहयोः कर्तेति भावः । एवमनेन मन्त्रेण स्मृते सति दातृग्रहीत्रोः

फलं पापराहित्यं च भवति। तथा कामः कामाय दाता। स्वर्गादिफलकामनया यजमानो ददाति ऋत्विजश्च धनकामनया प्रतिगृह्णन्ति अत उभयत्र कामस्यैव प्रयोजकत्वम्। दातृत्वं प्रतिग्रहीतृत्वं च कामस्यैवेत्येतल्लोके प्रसिद्धमिति कामो दाता कामः प्रतिग्रहीतेत्युच्यते। नहि निष्कामे परिव्राजकादौ तदस्ति। स च कामः समुद्रमाविशत्। मां परित्यज्य यत्र कुत्रापि गच्छत्वित्यर्थः। तस्यावस्थितौ तेन कामेन हेतुना त्वां प्रतिगृह्णामि ततो हे काम एतद्धनं तवैव तिष्ठतु नात्मानं मे स्पृशत्वित्यर्थः। सोऽयं मन्त्रोऽध्वर्युशाखायामाम्नातस्तदीय-ब्राह्मणान्नीत्वा व्याख्यातश्च क इदं कस्मा इत्याह। प्रजापतिर्वै कः स प्रजापतये ददाति। कामः कामायेत्याह। कामेन हि ददाति कामेन हि प्रतिगृह्णाति। कामो दाता कामः प्रतिग्रहीतेत्याह। कामो हि दाता कामः प्रतिग्रहीता। कामः समुद्रमाविशदित्याह। समुद्र इव कामयते। नहि कामस्यान्तोऽस्ति न समुद्रस्य। कामेन त्वा प्रतिगृह्णामीत्याह। येन कामः प्रतिगृह्णाति स एवैनममुष्मिँल्लोके दक्षिणामिच्छति न प्रतिग्रहीतुरिच्छति ॥८॥

ताण्ड्यमहाब्राह्मणे प्रथमपञ्चिकायां प्रथमाध्यायेऽष्टमो कण्डिका।

॥ २ ॥

१-२-१

अस्मिन्ब्राह्मणे प्राधान्येन गवामयनं प्रतिपाद्यते। तच्च प्रायणीयादिमहाव्रतान्तैः पञ्च-विंशतिसङ्ख्यैरहोभिर्निष्पद्यते प्रायेण। एतान्येवाहान्यन्येषामप्येकाहाहीनसत्रात्मकानां सोमया-गानां प्रकृतयः। द्वादशाहश्चाहर्गणानां प्रकृतिः। अतः प्राधान्यात्प्रायणीयोदयनीयौ मुक्त्वा मध्ये यानि दशाहानि तेषां विष्टुतयः। एवं च सति गावामयनिकानामपि त्रिवृदादयः स्तोमाः प्रदर्शिताः। ये स्तोमास्त्रिवृदादयस्ते क्रमेण द्वितीयतृतीयाभ्यामध्यायाभ्यां प्रदर्श्यन्ते। तत्र बहिष्पवमानसाधनस्य त्रिवृत्स्तोमस्य तिस्रो विष्टुतय उद्यती परिवर्तिनी कुलायिनीति। आदितस्त्रिभिरनुवाकैस्ताः प्रदर्श्यन्ते। तत्र तावदुद्यत्याः स्वरूपमाह। एकैकस्य साम्नः पञ्च विभक्तयः हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनाख्याः। तत्र हिङ्कारस्त्रिभि-रुद्गातृभिः कर्तव्यः। अत एव सूत्रकृतोच्यते साम्ने साम्ने हिङ्कुर्युरिति (ला० श्रौ० २-१)। तिसृभ्य इति क्रियार्थोपपदस्य च कर्मणि स्थानिनः ( पा० २-३-१४ ) इति कर्मणि चतुर्थी। तिस्र ऋचो गातुं हिङ्कुर्यात्। एकवचनमतन्त्रम्। उक्तादेव हेतोः। अतस्त्रयोऽप्युद्गातारो हिङ्कुर्युरित्यर्थः। एव-मुत्तरत्रापि हिङ्कारविधायकवाक्येषु योजना। स हिङ्करोति स हिङ्कर्ता प्रथमया तिरुक्तया गायेदयं प्रथमः पर्यायः। तिसृभ्यो हिङ्करोति स हिङ्कर्ता मध्यमया तिरुक्तया गायेदयं द्वितीयः पर्यायः। पुनरपि तिसृभ्यो हिङ्करोति स हिङ्कर्ता तृचस्योत्तमयाऽन्त्यया तिरुक्तया गायेत्। एष तृतीयः

पर्यायः। अनेन पर्यायत्रयेण त्रिवृत्स्तोमः संपद्यते। उक्तप्रकारेण त्रिधा वर्तत इति त्रिवृत्स्तोमस्य विष्टुतिरेषोद्यती ऊर्ध्वं गच्छन्ती उक्तेषु पर्यायेषु प्रथममध्यमोत्तमक्रमेणोर्ध्वगमनादन्वर्थसञ्ज्ञेयमेषा त्रिवृतस्त्रिवृत्स्तोमस्य प्रथमा विष्टुतिः। एतस्यां विष्टुतावधिकारिणमाह। यो यजमानो भ्रातॄणां मध्ये स्वयं ज्येष्ठो भवति सपत्नीनां मध्ये या ज्येष्ठा तस्याः पुत्रश्च भवति। स यजमान एतया विष्टुत्या स्तुवीत स्तौति। तत्रान्तर्णीतण्यर्थः। स्तावयेत्। तस्य यजमानस्यैतया विष्टुत्या स्तुयुरित्यर्थः। एतां विष्टुतिमग्रप्राप्त्यादिफलसाधनतया प्रशंसति। अग्रादग्रमुत्कर्षादूर्ध्वं पुनरप्युत्कर्षं रोहति प्राप्नोति। उत्तरोत्तराभिवृद्धिर्भवति तस्य यस्यैतया विष्टुत्या स्तुवते। तथेयं विष्टुतिरभिक्रामन्ती त्रिषु पर्यायेषु प्रथममध्यमोत्तमानुपूर्व्येणाभिमुखमाक्रामन्ती उपर्युपरि गन्त्री अत एषा प्रयुज्यमाना यज्ञस्याभिक्रमणायैव उपर्युपरिप्राप्तय एव भवति। ततश्च किमित्यत आह यज्ञस्याभिक्रान्तेन। भावे निष्ठा। अभिक्रमणेन। आरोहणेन परिसमापनेन। ऋध्नोति यजमानः समृद्धो भवति। हिशब्दो हेतौ। तस्मादेतया विष्टुत्या स्तोतव्यम्। ऋद्ध्या एव तत्स्तवनं यजमानस्य समृद्ध्या एव भवति। पुनरपि नानाविधफलसाधनत्वेन प्रशंसति। पापं निकृष्टं वसीय उत्तमं पापञ्च वसीयश्च पापवसीयसी तयोरुभयोर्विधरणी असाङ्कर्यकरणी इयं विष्टुतिः। एवं जानन् य एतया विष्टुत्या स्तुते स्तौति स पाप्मना पापेन निवर्तते। पाप्मनः पृथग्भवतीत्यर्थः। यत्र देशे विधरणी एषा विष्टुतिः प्रयुक्ता तत्रावगतः। कर्तरि निष्ठायाम्। अवगन्ता ज्ञाता नापरुध्यते अज्ञानेनानपरुद्धोऽनाक्रान्तो भवति। यस्त्वपरुद्धोऽज्ञानेनावृतः स नावगच्छति न जानाति ज्ञानाज्ञाने न तस्मिन्नधिकरणे सह तिष्ठत इत्यर्थः। तथा श्रेयांसं प्रशस्यतममुत्तमजातिं ब्राह्मणादिकं पापीयान्निकृष्टतमः शूद्रादिर्नाभ्यारोहति नाभिक्रामति। श्रेयांसः पापीयांसश्च विभक्ता एव वर्तन्त इत्यर्थः। तथा जनता जनसमूहो जनतामन्यजनसमूहं नाभ्येति नाधिगच्छति जनपदतो जनपदान्तरं दौर्भिक्ष्यादिकारणेन न प्रविशतीत्यर्थः। प्रजाश्चान्योन्यस्य धनादिकं नाददते न स्वीकुर्वन्ति अपि तु यथाचेतम् स्वं स्वं चेतमनतिक्रम्य। स्वस्वचेते कल्पन्ते। इत्थमस्या विष्टुतेर्बहूनि फलानि दर्शितानि। एकस्तु दोषो भवति। कोऽसौ दोषः। उच्यते। पर्जन्यो वृष्ट्यभिमानी देवोऽवर्षुकोऽवर्षणशीलो भवति। तस्मिन्देशे वृष्टिर्न स्यादित्यर्थः। यस्मिन्देशे एतया विष्टुत्या स्तुवते। कुत इत्यत आह इमे भूरादयस्त्रयो लोकास्तृचस्त्रिस्र ऋचः। भूरादिलोकस्थानीयाः। तान् लोकान् हिङ्कारेण प्रत्यृचं कृतेन व्येति विगमयति वियुक्तान्करोति। वयतिरत्रान्तर्णीतण्यर्थः। परस्परोपकार्योपकारकभावं विश्लेषयतीत्यर्थः। सति हि तस्मिन्नन्तरिक्षात्पृथिव्या उपकारात्मिका वृष्टिर्भवति नान्यथा। हि यस्मादेवं तस्मादवर्षुकः पर्जन्यो

भवति। अथैतां प्रतिष्ठाफलतया प्रशंसति। एषा वै एषा खलु उद्यती त्रिवृतो विष्टुतिः प्रतिष्ठिता। एकैकस्यामृचि एकैकस्य पर्यायस्य परिसमापनात् अस्यां प्रतिष्ठितो भवति। अन्नादिभिः समृद्धो भवतीत्यर्थः ॥१॥

ताण्ड्यमहाब्राह्मणे प्रथमपञ्चिकायां द्वितीयाध्याये प्रथमा कण्डिका।

॥ ३ ॥

१.२.२

अथ परिवर्तिनीं विष्टुतिं दर्शयति। तिसृभ्यस्तिस्र ऋचो गातुं हिङ्कुर्यात्। स हिङ्कर्ता पराचीभिरनावृत्ताभिस्तिसृभिर्ऋग्भिर्गायेत्। एवमुत्तरयोरपि पर्याययोर्योजना। एषा त्रिवृत्स्तोमस्य विष्टुतिः परिवर्तिनी आवर्तिनी यथा प्रथमे पर्यायेऽनावृत्ताभिर्गानं तथोत्तरयोरपीति अस्या आवृत्तिः। अथैतां बहुविधफलसाधनत्वेन प्रशंसति। यो यजमान एतया विष्टुत्या स्तुते स परीवर्तं परिवृत्य पुनः पुनर्धनादिकं प्राप्नोति। परिपूर्वाद्वृतेराभीक्ष्ण्येऽर्थे णमुल्वेति णमुल्प्रत्ययः। परिवर्तत इति परिवर्तं धनम्। पचाद्यच्। तथेयं विष्टुतिः सन्तता पूर्ववदत्र मध्ये हिङ्काराभावेनाविच्छिन्ना मुख्यप्राणस्य मुखप्रदेशवर्तिनी या प्राणनरूपा वृत्तिः स प्राणः। अपानरूपाधोगामिनी सोऽपानः। तयोरुभयोर्मध्यवर्तिनी विविधं सर्वं शरीरं व्याप्य वर्तमाना या वृत्तिः स व्यानः। तदेतत्त्रितयं तृचः। एतास्तिस्र ऋचः प्राणादिस्थानीया इत्यर्थः। तथा सति ऋचो हिङ्कारेण सन्तन्वन् तान्प्राणादीनेव सकृत्प्रयुक्तेन सन्तनोति सन्ततानविच्छिन्नान् करोति। व्यवच्छेदकस्य हिङ्कारस्य मध्ये प्रयोगाभावात्। अत एव प्राणवृत्तीनामविच्छेदात्सर्वं शतवर्षलक्षणमायुरेति प्राप्नोति। एतदेव व्यतिरेकेणाह आयुषः कमाच्छतवर्षलक्षणादेव पुरा च न प्रमीयते न म्रियते य एतया विष्टुत्या स्तुते स यजमान उक्तविध इत्यर्थः। किञ्चास्य पर्जन्यो वर्षुको वर्षणशीलो भवति। य इमे त्रयो लोकास्ते तृचः। ऋक्त्रयस्थानीयास्त्रित्वसाम्यात्। तथा सति आदौ प्रयुक्तेन हिङ्कारेणाविच्छेदेन तिस्र ऋचः सन्तन्वन्निमानेव लोकान्सन्दधातीति। उपकार्योपकारकभावेन संयुक्तान्करोति। अथास्यामपि विष्टुतावेको दोषो विद्यत इत्याह। एषा परिवर्तिनी विष्टुतिः। श्लक्ष्णेव तु वै। वैशब्दावधारणे। तुशब्दो वैलक्षण्यद्योतकः। श्लक्ष्णा मध्ये हिङ्काराभावेन सुश्लिष्टैव खलु। ततः किम्। पशून्यजमानसम्बन्धिनो गवादीन्निर्मृजो निर्मार्ष्टुमपगमयितुं विनाशयितुम्। ईश्वरा समर्था भवति। ईश्वरे तोसुन्कसुनौ ( पा० ३-४-१३ ) इति मृजेस्तुमुनर्थे कसुन्प्रत्ययः। अयमेको दोषः। किञ्च सैषा विष्टुतिरा च परा चाभिमुखी पराङ्मुखीयं भवति। कथम्। यथैकस्मिन्पर्याये तथैवोत्तरयोरपि पर्याययोरावर्तत

इत्यभिमुखीत्युच्यते। तथैकस्मिन्पर्याये पराचीभिस्तिसृभिर्ऋग्भिः स्तवात् पराङ्मुखीति च। अस्त्वेवमुभयरूपता किं तत इत्यत आह उतेति। उतशब्दो वाशब्दस्यार्थे। ईदृशीं विष्टुतिं प्रयुञ्जानः श्रेयान्यज्ञफलप्राप्त्या वा प्रशस्ततमो वा भवति। उताथवा। यादृङेव तादृक्। एवकारो भिन्नक्रमः। यागानुष्ठानात्पूर्वं यादृग्रूपो भवति अनुष्ठितेऽपि यागे तादृगेव तादृश एव भवति। प्रयोगकृतोऽतिशयस्तस्यात न भवतीत्यर्थः। नेत्तु। इच्छब्दोऽवधारणे। नैव तु पापीयान् पूर्वरूपान्निकृष्टो भवति। एषा विष्टुतिर्भाल्लविशाखिनां नित्येति दर्शयति। तामेतां परिवर्तिनीं विष्टुतिं भाल्लविशाखिन उपासते त्रिवृत्स्तोमे प्रयुञ्जते। अतस्ते धनादिकं प्रतिगृह्णन्तः परीवर्तात परिवर्तमानात्तस्माद्धनान्न च्यवन्ते न वियुज्यन्ते ॥२॥

ताण्ड्यमहाब्राह्मणे प्रथमपञ्चिकायां द्वितीयाध्याये द्वितीया कण्डिका।

॥ ४ ॥

१·२·३

अथ कुलायिनीं विष्टुतिं दर्शयति। परिवर्तिनो प्रथमः पर्यायः। द्वितीये पर्याये पराचीभिः प्रयुक्तस्य तृचस्य या मध्यमा प्राक् सा प्रथमा कार्या। योत्तमा च सा मध्यमा कार्या। या प्रथमा सोत्तमा कार्या। तृतीयपर्यायो निगदसिद्धः। कुलायिनी। कुलायो नीडं पक्षिणां निवासस्थानं तद्यथा व्यस्ततृणादिनिर्मितम् एवं व्यत्यासयुक्ता ऋचः कुलाया-स्तैस्तद्वती कुलायिनी एतत्सञ्ज्ञा त्रिवृत्स्तोमस्य विष्टुतिरियम्। अस्यां विष्टुतौ कोऽधि-कारीत्यत आह। प्रजानां पशूनाञ्च कुलायवदवस्थितिहेतुत्वात्कुलायत्वेन स्तुतिः। कुलायिन्या स्तुवानोऽपि प्रजानां पशूनां च कुलायमेव आश्रयभूतो भवत्येव। पुनरप्यधिकारिविशेषं दर्शयति। अनु पश्चाज्जायत इत्यनुजः कनीयान्। स हि निकृष्टस्तस्मादप्यवरो निकृष्टो-ऽनुजावरः। तादृशाय यजमानायेति। अग्रं परियतीनाम्। लोके याः प्रजा अग्रं वयोगुणादिभिः श्रेष्ठपदं परियन्ति परितो गच्छन्ति। एतासाम। एतासामेव श्रैष्ठ्यम्। परिगच्छन्तीनां प्रजानां मध्ये स यजमानोऽग्रं श्रेष्ठं पदं पर्येति परिगच्छति। सर्वोत्कृष्टो भवतीत्यर्थः। स तेष्वहीनेषु च बहूनां फलसाम्यात्कुलायिनीं विधत्ते। एतामेव कुलायिनीं त्रिवृतो विष्टुतिं बहुभ्यो यजमानेभ्य उद्गाता कुर्यात्। यत् यस्माद्धेतोस्तृचगताः सर्वा ऋचो-ऽग्रिया मुख्याः प्रथमा भवन्ति। सर्वास्तु मध्ये वर्तमाना भवन्ति सर्वाश्चोत्तमा भवन्ति। तद्यथा प्रथमे पर्याये प्रथमैव प्रथमा भवति। मध्ये तु मध्यमा प्रथमा भवति। उत्तमे उत्तमा प्रथमा भवति। एवं सर्वासां प्राथम्यं जातम्। तथा प्रथमपर्याये मध्यमैव मध्यमा। द्वितीये पर्याये उत्तमैव मध्यमा। तृतीये पर्याये प्रथमैव मध्यमा। एवं सति तिस्रोऽपि

मध्यमाः सम्पन्नाः। तथा प्रथमे पर्याये उत्तमोत्तमा भवति। द्वितीये पर्याये प्रथमैवोत्तमा भवति। तृतीये पर्याये मध्यमैवोत्तमा भवति। एवं सर्वा अप्युत्तमाः सम्पन्नाः। यस्मादेताः सर्वा ऋचः समानरूपा अतो हेतोरनया विष्टुत्या सर्वानेवैनान्यजमानानुद्गाता समावद्भाजः। समावच्छब्दः समपर्यायः। समं फलं भजन्त इति समावद्भाजः। साम्येन फलभाजः करोति। अत एव नान्योन्यमपघ्नते परस्परं न हिंसन्ति। तथा सर्वे यजमानाः समावदिन्द्रियाः समावद्वीर्याः समानसामर्थ्या भवन्ति। फलान्तरमाह। लोकस्थानीयानां तिसृणामृचामादौ प्रयुक्तेनैकेनैव हिङ्कारेण व्यतिषञ्जनात्संयोजनात् त्रयाणां लोकानां परस्परमुपकार्योपकारकभावो न बाधित इति पर्जन्यो वर्षुको वर्षणशीलो भवतीत्यर्थः। अस्यामपि विष्टुतौ बहुदोषाः सम्भवन्तीत्याह। तुशब्दः फलवैलक्षण्यद्योतनार्थः। पापं प्रसिद्धं वसीयः पुण्यम्। तदुभयमेकाश्रयं भवति। इतरदुद्यतीवाक्यशेषवद्व्याख्येयम्। नवभावोऽत्र विशेषः। इत्थं विष्टुतयस्तिस्रो विहिताः। तिसृष्वपि तासु फलविशेषश्रवणान्निन्दादर्शनाच्च समानफलत्वात्सर्वा नित्याः। यत्र विशेषादेशः क्रियते निमित्तं वा कामो वा श्रूयते ततोऽन्यत्र नित्यप्रयोगे आद्याभिरेताभिरेव विष्टुतिभिः स्तोमसंपादनं कार्यम्। तदाह सूत्रकृत्। प्रथमाभिर्विष्टुतिभिः स्तोमविधानमनादेशे ताः पथ्याः सर्वाभिप्रायाश्चेति (ला० श्रौ० ६-२)। पुनरपि यथाशिषं वा विदध्यादित्यादिना खण्डशेषेण बहवः पक्षाः सूत्रकृतोपन्यस्तास्ते तत्रैव बोद्धव्याः। नन्वेतास्वपि प्रत्येकं निन्दादर्शनात्कथमासां नित्यत्वम्। नैष दोषः। उद्यत्यां तावद्यो दोष उक्तोऽवर्षुकः पर्जन्यो भवतीति स कुलायिनीपरिग्रहे परिह्रियते। तत्र हि वर्षुकः पर्जन्यो भवतीत्याम्नातम्। यत्तु कुलायिन्यां दोषदर्शनं पापवसीयसं तु भवत्यधरोत्तरमित्यादि तदुद्यतीप्रयोगेण परिहृतम्। तत्र हि पापवसीयसो विधृतिरिति सा श्रूयते श्लक्ष्णेव तु पापवसीयं तु भवतीति। प्रथमाया मध्यमायाश्चान्ते प्रयोग इति यदस्ति तदेतदधरोत्तरमनुष्ठानं यस्मिन्देशे क्रियते तत्रैव। ईश्वरा पशून्निर्मृज इति परिवर्तिन्यां यदपशुलक्षणं दोषदर्शनं तदुद्यत्यां परिहृतं भवति एषा वै प्रतिष्ठिता विष्टुतिरिति। तत्र हि वाक्यशेषः प्रजापशुसमृद्धया हि प्रतिष्ठितो भवतीति ॥३॥

ताण्ड्यमहाब्राह्मणे प्रथमपञ्चिकायां द्वितीयाध्याये तृतीया कण्डिका।

॥ ५ ॥

१·५·५

एवं महाव्रतस्तोत्रस्याङ्गभूता लोमनखस्थानीयास्त्रयोदश परिमादो गताः। एतेषाञ्च लोमनखस्थानीयत्वं तैत्तिरीये समाम्नातम् यदितर इतो लोमानि इतरे नखान्परिमादः क्रियन्ते

तान्येव तेन प्रत्युप्यन्त इति। अथ महाव्रतस्तोत्रं पञ्चविधम्। अत्राध्वर्युः शिरसोद्गायेत् मैत्रावरुणो दक्षिणेन पक्षेण ब्राह्मणाच्छंस्युत्तरेण पक्षेण गृहपतिः पुच्छेनोद्गातात्मनेत्येवं कर्तृविशेषसम्बन्धं वक्ष्यति। तत्रोद्गातुरुद्गानकाले कश्चिद्विशेषं विधत्ते। उद्गाता आसन्दी-मारुह्यात्मना राजनेन साम्नोद्गायति। तत्तेन भूमिं परित्यज्य आसन्द्या उपर्यारोहणेन देवसाक्ष्ये देवानां दर्शन एव उपरिषद्यमुपरिसदनमुच्छ्रिते स्वर्गादाववस्थानं जयति लभते। आसन्द्या औदुम्बरीत्वं विधाय प्रशंसति। औदुम्बरी। उदुम्बरकाष्ठविकारः। औदुम्बरैः काष्ठै-र्निर्मिता भवति। योऽयमुदुम्बरः स ऊर्ग्वै बलकरमन्नमेव। ऊर्ग्विभागसमये तस्योत्पत्तेः। तथा च तैत्तिरीयकम्। देवा वा ऊर्जं व्यभजन्त तत उदुम्बर उदतिष्ठदिति। अत औदुम्बर्यासन्द्युपवेशनेन ऊर्जमेव साक्षात्प्राप्नोति। यदेतदुक्तं सूत्रकारेण प्रादेशमात्राः पादा अर-त्निमात्राणीतराण्यङ्गानीति (ला० श्रौ० ३-१२)। तदेतद्विधाय प्रशंसति। प्रादेशमात्रपादत्वा-त्प्रादेशमात्री आसन्दी। एवं पादानां ह्रसीयस्त्वमस्य लोकस्य अस्माल्लोकादनुद्धाराय भवति। अथ तस्यामारोहणं विधाय प्रशंसति। गायत्रेण त्वा छन्दसा रोहामि त्रैष्टुभेन त्वा छन्दसा रोहामि जागतेन त्वा छन्दसा रोहामि आनुष्टुभेन त्वा छन्दसा रोहामि वैराजेन त्वा छन्दसा रोहामि इति वैराजपञ्चमैर्गायत्र्यादिभिश्छन्दोभिरासन्दीमारोहति। छन्दोविकल्पश्च सूत्रकारेणोक्तः। (ला० श्रौ० ४-४) चतुर्भिरिति धानञ्जप्यः। त्रिभिरिति शाण्डिल्य इति। तत्तेन रोहणेन स्वर्गं लोकमारोहति। उपावरोहणकाले एतैरेव प्रतिलोमैश्छन्दोभिरुपावरोहणं विधत्ते। एतेषामेव छन्दसां प्रतिलोममुपावरोहति। आरोहणे गायत्रेणेति गायत्रस्य प्रथमत्वेन भूलोकात्मकत्वात् अस्मिँल्लोके पुनः प्रतितिष्ठतीति। तदुक्तं सूत्रकृता आह्रियमाणे भक्षे प्रतिलोमैरारोहणीयैरव-रुह्य जपेन्मही द्यौः पृथिवी चनेति सर्वे सह स्तुवीरन्निति (ला० श्रौ० ४-४)। यद्यध्वर्युप्रभृतयः शिरःप्रभृतिभिरुद्गानं कुर्युस्तदा एकैकया स्तोत्रीययान्त्ययाऽस्तुतयोद्गातारमभिसमेयुरिति वक्ष्यति। उद्गातुस्तासामुद्गानं विधत्ते। अध्वर्युप्रभृतिभिः परिशेषिताः स्तोत्रीयाः समुद्धृत्य सङ्गृह्य सर्वेण स्तोत्रीयेणात्मनाऽऽत्मभूतेन राजनेनोद्गेयमुद्गानं कार्यम्। एषु लोकेषु स्थानेषु शिरः-प्रभृतिषु नेन्नैव व्याहितोऽन्तरितोऽसानि भवानीति बुद्धया। अतःप्रभृतिषु सर्वेषूद्गातृषु स्तुतं भवतीत्यर्थः। अथोद्गातुरासन्द्याः सकाशतः पादयोरवरोहणं विधत्ते। पञ्चविंशस्तो-मस्य राजनस्यैकस्यां स्तोत्रीयायामन्त्यायामस्तुतायां प्रस्तूयमानायामुद्गाता पादावुपावरोहति भूमेरासन्नौ स्थापयति। अथ त्रयाणामप्युद्गातॄणां भूमौ पादस्थापनकालं विधत्ते। उत्तमे निधने राजनस्य वाजीडासु बृहद्भा३४५ इत्यन्तेन सह प्रतिष्ठामुपयन्ति भूमौ पादौ प्रतिष्ठापयन्ति। एवं भूमौ पादस्थापनेन एष्वेव लोकेषु प्रतिष्ठिता भवन्ति। अत्र बहुवचनेन प्रस्तोतृप्रतिहर्त्रोः स्वस्मात्प्रङ्खिरूपादासनाद्भूमौ पादप्रतिष्ठापनं कर्तव्यमित्यवगम्यते। अथ प्रसङ्गाद्धोतुरप्यासन-

विशेषं विधाय प्रशंसति। होता प्रेङ्खं दोलामारुह्य तत्रैवासीनो निष्केवल्यं बृहतीसहस्रात्मकं शस्त्रं शंसति तत्तेन महसस्तेजस एवैश्वर्यरूपमेतत् क्रियते। कथं प्रेङ्खारोहणेन महसो रूपं कृतं भवति तत्राह। यदा खलु प्रजा जनान् महस्तेज ऐश्वर्यमाविशति तर्हि तस्मिन्काले प्रेङ्खानारोहन्ति। तथाध्वर्योराशंसनं विधत्ते। औदुम्बरं फलकमारुह्याध्वर्युर्निष्केवल्यं शस्त्रं प्रतिगृणाति। अन्येषामपि ऋत्विजामासनानि विधत्ते। उक्तेभ्यो येऽन्ये मैत्रावरुणादयस्ते कूर्चान्बृसीरध्यासते। तथा च तैत्तरेयकम् बृसीर्होत्रकाः समधिरोहन्ति सब्रह्मका इति। एवं सर्वेषामृत्विजामूर्ध्वोपवेशनादूर्ध्वा एव ऊर्ध्वाभिमुखा एव सन्त उत्क्रामन्त ऐहिकभोगावसाने स्वर्गं प्रत्युत्क्रामन्तो यन्ति। इदानीमुष्मिकमिपर्यैव तेष्वासनेषूपविशन्तीत्यर्थः। ब्राह्मणश्च शूद्रश्च सत्रिणां प्रशंसनं निन्दनं च क्रमेण कुर्याताम्। तदेतद्विधत्ते। अभिगरः स्तोता। अपगृणात्यपवदतीत्यपगरो निन्दिता। तावुभावानीतौ भवतः। तयोरन्यः शूद्र एतान्त्सत्रिणो निन्दति। एतैः सम्यङ्नानुष्ठितमित्यपवदति। तथा अन्यो ब्राह्मण एतान्प्रशंसति। एषां सत्रिणां सम्बन्धि सुष्टुतं शोभनं स्तवनं सुशस्तं सुशंसनं च यदस्ति तदेवासावभिगृणाति। अथ चर्मनिमित्तं ब्राह्मणशूद्रयोर्विवादं विधत्ते। शूद्रश्चार्यश्चोभौ परिमण्डले श्वेते आदित्यप्रतिरूपे निमित्ते व्यायच्छेते। व्यायमनं विविधमाकर्षणं मदीयमिति तत् कुरुतः। तयोर्मध्ये आर्यं वर्णं ब्राह्मणजातिमुज्जापयन्ति। यथा ब्राह्मणो जयेत्तथा कुर्युरित्यर्थः। तदेतत् स्तौति। पुरा वै देवाश्चासुराश्चासावादित्योऽस्माकमेवेति तस्मिन्नादित्यविषये व्यायच्छन्तो विवादं कृतवन्तः। तमादित्यं देवा अभ्यजयन्। असुरा जयं न प्राप्नुवन्। स्पष्टमन्यत्। ब्राह्मणस्य जयो यथा स्यात्तथा कर्तव्यमित्युक्तं तदेव प्रशंसति। आर्यं ब्राह्मणं वर्णमुज्जापयन्तीति उत्कर्षेण जयं प्रापयन्तीति यत् तत्तेन सत्रिण आत्मानमेवोज्जापयन्ति। जयतेर्णिच्। क्रीङ्जीनां णौ (पा० ६-७-४८) इत्यात्वेऽर्तिह्रीव्ली० (पा० ७-३-३६) इत्यादिना पुगागमः। व्यायमनहेतुभूतस्य चर्मणः कञ्चिद्गुणं विधाय प्रशंसति। तच्चर्म परितः कृतमण्डलाकारं भवति। तत्तेनादित्यस्यैव रूपमस्मिन्नर्मणि क्रियते। आदित्ये हि पुरा देवैर्व्यायमनं कृतमित्युक्तम्। अत एवैतच्चर्मादित्यप्रतिरूपकं भवति। अथास्मिन्स्तोत्रे गीयमाने दुन्दुभीनां वादनं विधत्ते। सर्वासु स्रक्तिषु वेद्याः कोणेषु दुन्दुभयो नदन्ति। शब्दं कुर्युः। तदेवं यथा नदन्ति तथा तान्वादयन्तीत्यर्थः। वाग्घि पूर्वं देवेभ्यो निष्क्रम्य वनस्पतीन्पृथिवीं च प्राविशत्। तत्र वनस्पतिषु या वाक् प्रविष्टा तामेव वाचं तेन दुन्दुभिशब्देन जयन्ति प्राप्नुवन्ति। अथ भूमिदुन्दुभिवादनं विधत्ते। आग्नीध्रीयस्य पश्चादर्धमन्तर्वेद्यर्धं बहिर्वेदि भूमाववटं खात्वा सवनीयस्य ऋषभचर्मणापिदधाति। स भूमिदुन्दुभिर्भवति। तं वादयन्तीति शेषः। स्पष्टमन्यत्। अन्यासामपि वाचां प्रयोगं विधत्ते।

सर्वाः संस्कृताश्चासंस्कृताश्च ग्राम्यवाचश्च वदन्ति । प्रेक्षकाः सर्वे जना इत्यर्थः । गतमन्यत् । अथ राजपुरुषाणां देवयजनस्य परितो गमनं विधत्ते । सन्नद्धाः सम्बद्धहस्तत्राणादिकाः । कवचिनः कवचयुक्ताश्च राजपुरुषा रथमारुह्य गृहीतचापशराः सन्तः परियन्ति देवयजनं परितो गच्छेयुः । इन्द्रियस्यैव बलस्यैव तद्रूपं क्रियते तदेतत्कवचिनां परिगमनम् । अथो अपि च महाव्रतमेव महाव्रताख्यमेवाहर्महयन्ति ॥५॥

ताण्ड्यमहाब्राह्मणे प्रथमपञ्चिकायां पञ्चमाध्याये पञ्चमी कण्डिका ।

॥ ६ ॥

१·५·९

उक्तं गवामयनमथ तस्य दीक्षाकालमाह । माघकृष्णाष्टमी एकाष्टका । उक्तं ह्याप-स्तम्बेन माघ्याः पौर्णमास्या उपरि षडष्टका तस्यामष्टमी ज्येष्ठया संपद्यते तामेकाष्टकेत्याचक्षते इति । अथ तस्यामेकाष्टकायां संवत्सराय दीक्षेरन् । यत येयमेकाष्टका एषा खलु संवत्सरस्य प्रजापत्यात्मकस्य पत्नी स्त्री तथा सति एतस्यामेवैकाष्टकायामेतां रात्रिम् । अत्यन्तसंयोगे द्वितीया । वसति संवत्सरात्मकः प्रजापतिः शेते । लोके पत्न्याः समीपे हि पती रात्रौ वसति । एवञ्चैकाष्टकायां दीक्षमाणास्साक्षात प्रत्यक्षमेव संवत्सरं प्रजापत्यात्मकमारभ्य मित्वा दीक्षन्ते । अस्मिन्पक्षे एको दोषः स्यादित्याह । तस्यैकाष्टकायां दीक्षितस्य सा निर्या दोषो यदनभिनन्दन्तः प्रीतिरहिताः सन्तोऽपोऽभ्यवयन्ति इति । यदैकाष्टकायां दीक्षमाणानां शिशिरेऽवभृथः स्यात्तदा अपां सूर्यरश्मिभिः शोषितात्वेनाल्पीयस्त्वात्तद्विषयाभि-लाषरहिता एवावभृथं गच्छन्ति । योऽयमभिनन्दनाभावः सोऽस्मिन्पक्षे दोष इत्यर्थः । अपरोऽप्ययं दोषः स्यादित्याह । संवत्सरस्य विच्छिन्नं विच्छेदमभिमुखीकृत्यैते दीक्षन्ते य एकाष्टकायां दीक्षन्ते दीक्षां कुर्वन्ति । कुत एतत् । उच्यते मधुश्च माधवश्च वासन्ति-कावृतू इत्यादाविवात्रापि ऋतुशब्देन मास एवोच्यते । यावेतौ माघफाल्गुनौ मासौ ऋतु-शब्दवाच्यो एतावन्तनामानौ शिशिरर्तुः संवत्सरान्त इति । तौ मासावन्तशब्दवाच्यौ तयोर्हि संवत्सरः समाप्यते । तथा चैकस्मिन्संवत्सरे सत्यारम्भोऽपरस्मिन्यजन्ते इत्यत आह । ये अन्तनामानौ अन्तशब्दवाच्यावृतू मासावभिलक्ष्य दीक्षन्ते एते संवत्सरस्यार्ते हि अन्तमेवाभिलक्ष्य दीक्षन्ते । एवं दोषप्रस्तावादयं पक्षो न कार्य इत्याह । यस्मादेते पूर्वोक्ता दोषाः प्रसज्येरंस्तस्मादेकाष्टकायां न दीक्ष्यं दीक्षणं न कार्यम् । एवं प्रथमं पक्षं निन्दित्वा पक्षान्तरमाह । यस्मिन् मासे फल्गुनी पौर्णमासी युज्यते स फाल्गुन-

स्तस्मिन्दीक्षा कार्या । तदेतद्गुणकथनेन प्रशंसति । यत्फाल्गुनो मास एतत्संवत्सरस्य मुखं यदुत्तरे फल्गुनी मुखत एव तत्संवत्सरस्येति । एतदुक्तं भवति यदा फाल्गुनी पौर्णमासी उत्तरफल्गुनीयुता भवति तदा फाल्गुनमासः संवत्सरस्यादिर्भवति इति । तथा सति मुखत एव प्रथमत एव संवत्सरमारभ्योपक्रम्य दीक्षन्ते । अस्मिन्पक्षेऽपि दोषो विद्यत इत्याह । तस्य फाल्गुने दीक्षणस्य सा निर्या दोषः यत्सम्मेघे मेघसंयुक्ते सत्रे विषुवान्मध्यमहः संपद्यते । आदित्यस्तुतो हि विषुवान् तस्य मेघैरन्तर्धानं संभाव्यते इति यत् स दोषः स्यादित्यर्थः । तर्हि सर्वदोषविनिर्मुक्तो दीक्षायाः कालः क इत्याशङ्क्याह । चित्रायुक्तः पौर्णमासश्चित्रापूर्णमासस्तस्मिन् दीक्षेरन् । यदेतत्स्तौति । चित्रापूर्णमास इति यत् एतत्संवत्सरस्य । चक्षुर्वै जायमानस्य हि प्रथमं मुखं जायते तत्रापि चक्षुरेव प्रथममाविर्भवति अतस्तत्सादृश्यादस्य चक्षुष उक्तक्रमेण मुखतो मुखप्रदेश एव चक्षुरतो मुखत एव तत्संवत्सरमारभ्य गृहीत्वा दीक्षन्ते । यः फाल्गुनगुण उक्तः सोऽप्यत्र विद्यत इत्युक्तं भवति । न निर्याऽस्ति कश्चिदपि दोषो न विद्यते । इत्थं चित्रापौर्णमास्यां दीक्षितव्यमित्युक्तम् । अथ तस्मिन्नेव मासे शुक्लैकादश्यां दीक्षितव्यमित्याह । चैत्र्याः पौर्णमास्याः पुरस्ताच्चतुरहे चतुर्णामह्नां समाहारश्चतुरहस्तस्मिन्विद्यमाने गवामयनस्य दीक्षा कार्या । एवं दीक्षणस्य गुणमाह । सर्वेषां सत्राणां द्वादश दीक्षा भवन्ति । तत एकादशीप्रभृतिषु द्वादशसु रात्रिषु गतासु त्रयोदशीरात्रिरष्टमी स्यात् । एकाष्टका च बहुलाष्टमीति अस्यामेकाष्टकेत्युपचारः । तस्यां क्रयः सम्पद्यते । प्रथमे ह्युपसर्जने राजक्रयस्तस्मिन्दिने प्रातःकाले प्रायणीयाद्या यज्ञावयवाः प्रकम्यन्ते । तेन प्रक्रमेण एकाष्टकां न शंबट्कुर्वन्ति । क्रियानुपयोगेन व्यर्थां न कुर्वन्ति । अत एवैकाष्टकाप्रारम्भकृतो गुणश्चास्मिन्पक्षेऽन्तर्भवतीत्यर्थः । अन्येऽपि गुणा अस्मिन्पक्षे सन्तीत्याह । तेषामेकादश्यां दीक्षमाणानां सुत्या सोमयागः पूर्वपक्षे संपद्यते । सत्राणां सर्वेषां द्वादशोपसदस्तत्राष्टमीप्रभृतिद्वादशरात्रिषु गतासु त्रयोदशी शुक्लपञ्चमी तस्यां प्रथमोऽतिरात्र इति पूर्वपक्षे सुत्या प्रारभ्यते इत्यर्थः । त्रिंशता त्रिंशताऽहोभिर्मासेषु सन्तिष्ठमानेषु पूर्वपक्षे एव सर्वेमासाः सन्तिष्ठमाना यन्ति वर्तन्ते । एवं द्वादशसु मासेषु पूर्वपक्ष एव सत्रादुत्तिष्ठन्ति तानुत्तिष्ठतः सत्रादुत्थानं कुर्वतो यजमानाननु पश्चात्पशव ओषधयश्चोत्तिष्ठन्ति ऊर्ध्वं रोहन्ति । तान्यजमानान्कल्याणी वाक् यशस्करी वाक् अभिवदति किमिति । इमे सत्रिणो यजमाना अरात्सुः समृद्धा अभवन्निति । तदनन्तरं ते सत्रिणो राध्नुवन्ति समृद्धा भवन्ति ॥६॥

ताण्ड्यमहाब्राह्मणे प्रथमपञ्चिकायां पञ्चमाध्याये नवमी कण्डिका ।

॥ ७ ॥

२·१·५

अथ समन्त्रकं द्रोणकलशस्य प्रोहणं विवक्षुस्तस्योत्पत्तिमाह । प्रजापतिरकामयतेत्युक्तार्थम् । तस्य शोचत आदित्यो मूर्ध्नोऽसृज्यत । सृष्टोऽभूत् । स सृष्ट आदित्यस्तस्य प्रजापतेर्मूर्द्धानं मस्तकदेशं स्वोत्पत्त्यर्थमुदहन् । ऊर्ध्वं घातितवान् । स भिन्नो मूर्द्धा द्रोणकलशोऽभवत् । तस्मिन्कलशे देवाः शुक्रं शुक्रं दीप्तं सोमरसं प्रत्यगृह्णत गृहीतवन्तः । स प्रजापतिरायुषा शिरोभङ्गात्क्षीणेनायुष्येण या आर्तिरभूत्तामार्तिमत्यजीवत् । अतिक्रम्य चिरकालं जीवितवान् । स्वशिरोभागकपाले आप्यायकस्य सोमरसस्य धारणेनार्ति पर्यहरदित्यर्थः । अथोक्तार्थवेदनं प्रशंसति । योऽन्य एवमुक्तार्थं जानाति स आयुषा नैमित्तिकायुःक्षयेण जनिता या आर्तिस्तामति जीवति । अतिक्रम्य शतवर्षं जीवति । इदानीं समन्त्रकं द्रोणकलशप्रोहणं विधत्ते । तं प्रजापतिशिरस्त उत्पन्नं कलशं वानस्पत्यादिना मन्त्रेण प्राञ्चं प्रोहेत् प्रेरयेत् । एतत्प्रोहणमध्वर्य्वादिभिस्त्रिभिरपि कर्तव्यम् । तथा च सूत्रम् । ऋतमसीति द्रोणकलशमालभ्य वानस्पत्योऽसीति प्रोहेयुः । अयं मन्त्रः पूर्वं व्याख्यातः । अथ मन्त्रस्य प्रथमभागस्य तात्पर्यं व्याचष्टे । मन्त्रे उद्गाता वानस्पत्य इति यदाह तत्तेनैनं द्रोणकलशं सत्येनैव प्रोहति । वस्तुतो द्रोणकलशस्य वनस्पतिविकारत्वात्सत्यत्वमिति । बृहस्पतिर्वै देवानामुद्गाता तमेव तद्युनक्तीति । एतेन मन्त्रभागेन प्रोहणं कृतवान् भवति । अथ द्वितीयभागस्य तात्पर्यमाह । तं बृहस्पतिमेव युनक्ति प्रेरयति । अथ तृतीयचतुर्थभागयोस्तात्पर्यमाह द्रोणकलशस्य प्रजापतेर्मूर्द्धरूपत्वमुक्तप्रकारेण स्पष्टम् । तत्सम्बन्धादेव स प्राजापत्य इत्युच्यते । अथ पञ्चमस्य तात्पर्यमाह । मन्त्रे अत्यायुपात्रमिति यदाहोद्गाता तद्युनक्तीति शेषः । तत्कथं युनक्तीति तत्राह द्रोणकलश इति । यत्पात्रमस्ति एतत्पात्रमन्यानि मनुष्याणां पात्राणि अतिहि अतीत्य वर्तते खलु । अथवा मनुष्यास्तेषां पात्राण्यतीत्य वर्तन्त इति व्युत्पत्त्या अत्यायुपात्रत्वात्तेनान्येषामतिक्रमणं युक्तमिति । अतिक्रमणमेव दर्शयति । अयं द्रोणकलशो देवपात्रं देवानां पानसाधनम् । अत्रस्थो हि सोमस्तं देवार्थं गृह्णन्ति । तस्माद्देवपात्रत्वान्नरपात्रातिक्रमणेनात्यायुपात्रमिति मन्त्रभागो युक्त इत्यर्थः । इति विदुषः फलमाह । य उक्तार्थज्ञः स देवपात्री देवपात्रं द्रोणकलशस्तद्वान् भवति । सोमयागानुष्ठाता भवतीत्यर्थः । अथ प्रासङ्गिकं किञ्चिदाह । ब्राह्मणं पात्रे पात्रभावेऽत्रं पात्रं भवति न वेति न मीमांसेत विचारं न कुर्यात् । किम् ब्राह्मणब्रुवमात्रेण न मीमांसितव्यम् । नेत्याह । यं पुरुषं ब्राह्मणमिव मन्येत । इवशब्द एवकारार्थः । ज्ञात्वा ब्राह्मणमेव यदि निश्चिनुयात् तदा तद्विषयं वृत्तविद्यादिस्वभावसद्भावं न मीमांसेतेत्यर्थः । तथा च

स्मृतिः । न पृच्छेद्ब्रह्मचरणो न स्वाध्यायं श्रुतं तथा । हृदये कल्पयेदेवं सर्वदेवमयो द्विजः । इति । एवं यस्मिन्विचारमकृत्वा पात्रमेवेति यो निश्चयं करोति तस्य तदेव पात्रमन्त्रेति विद्यातपोयुक्ते यत्फलं भवति तत्तस्मिन्नपि भवतीत्यर्थः । किञ्च स पुमान् मनुष्यपात्रान्न छियते । मनुष्याणां पात्रं भवतीत्यर्थः । उक्तं द्रोणकलशप्रोहणं हविर्धानादधः कर्तव्यं तलाक्षगतवाग-वरोधनायेति वक्ष्यति । अतो वागक्षसम्बन्धं वक्तुमाख्यायिकामाह । पुरा देवेभ्यः सकाशात्स्वमात्मानमप्रकाशयन्ती वागपकामत् । आत्मानमप्रकाश्यापगताभूत् । वैशब्दः श्रुत्यन्तरप्रसिद्ध्यर्थः । तथा च तैत्तिरीयकम् । वाग्वै देवेभ्योऽपकामत् यज्ञायातिष्ठमानेत्यादि । सापगतापः प्राविशत् । तां वाचं पुनर्यज्ञार्थमयाचन् । प्रार्थयन् । ताश्च पुनरब्रुवन् । किमिति । यत्पुनर्दयाम यच्छाम नोऽस्माकं ततः किं फलं स्यादिति पृष्टास्ते देवास्तर्हि यत्फलं कामयध्व इत्यब्रुवन् । ताश्च पृष्टाः पुनरब्रुवन् हे देवा अपूतमपुत्रादिकमस्मासु मनुष्याः । तदुपलक्षिताः सर्वे प्राणिनः प्रवेशयान् प्रवेशयेयुः । लोड्बहुवचनस्येदं रूपम् । तेनापूतेनासंसृष्टाः संसर्गरहिता असाम भवेम । उक्तार्थम् । ब्रह्मविदः फलमाह । स्पष्टोऽर्थः । अथाप्प्राप्ता-या वाचो वनस्पतीन् प्रवेशमाह । पुनर्तां अद्भिः पुनर्हता सा अत्यक्रामत । अतिक्रम्य सा वनस्पतीन् वृक्षान् प्राविशत् । प्रविष्टां तां देवा इत्यादि अशपन्नित्यन्तः स्पष्टः । शाप-प्रकारमाह यो युष्मान्स्वेन स्वसम्बन्धिना वानस्पत्येन किष्कुणा दण्डेन युक्तेन वज्रेण परश्वा-दिना वृश्चान् वृश्चेयुरिति । यस्मादेवं तस्मादिदानीमपि स्वेन किष्कुणा वज्रेण वृश्चन्ति । हि यस्माद्वनस्पतयो देवैः शप्ता अत इत्यभिप्रायः । इदानीमक्षसम्बन्धं वक्तुं प्रविष्टाया वाचश्चतुर्धा विभागमाह । तां तेषु प्रविष्टां वाचं वनस्पतयश्चतुर्धा चतुष्प्रकारं विन्यदधुर्विभज्य निधानमकुर्वन् । केष्विति उच्यते । दुन्दुभौ भेर्यां वीणायां वेणुनिर्मिततन्तुसम्बद्धायां विपञ्च्याम् अक्षे रथादिचक्रयोर्मध्यवर्तिनि तिर्यक्दण्डे तूणवे धनुषि गणे । तस्मादुक्त-पदार्थप्रवेशादेवैव वाग् वदिष्ठा अतिशयेन वक्त्री । अत एवैव वल्गुतमा चारुतमा वाक् । या श्रोत्रमनोह्लादिनीत्यर्थः । एवेत्युक्तं केत्याह । या वनस्पतीनां वनस्पतिविकाराणां दुन्दुभ्यादीनां सम्बन्धिनी । उक्तस्यैव विवरणं देवानां हीति । यस्मात् दुन्दुभ्यादिषु प्रविष्टा वाग् वदिष्ठा वल्गुतमा चातः खलु देवानां योग्यासीत् । इदानीमक्षस्य वागवरोधाय तदधो द्रोणकलशप्रोहणं तदुपरि दशापवित्रस्थापनं च विधत्ते । अक्षमधोऽधोऽक्षस्याव्यव-हितेऽधःप्रदेशे द्रोणकलशं प्रोहन्त्युद्गातारः । तच्च प्रोहणं तस्या अक्षप्रविष्टाया वाचोऽवरुद्धया अवरोधनाय भवति । तथा उपर्युपर्यक्षमक्षस्याव्यवहिते उपरिभागे । पवित्रं प्रयच्छन्ति । तथा सति उभयत एव वाचमक्षस्थां परिगृह्णन्ति स्वायत्तां कुर्वन्ति । अथाक्षस्पर्शननिन्दा-पूर्वकं तस्या स्पर्शं विधत्ते । तस्य यजमानस्य यज्ञमसुर्यमसुरेभ्यो हितं देवानामप्रीतिकरं

कुर्याम् अस्य वाचं च वृञ्जीय जयेयम् । प्रतिहतवचनां करोमीति यस्य यस्मै यजमानाय कामयेतोद्गाता तस्मै द्रोणकलशं प्रोहन्बाहुभ्यामक्षमुपस्पृशेत् । तथा सति अस्य यज्ञमसुर्यं करोति । अस्य वाचं वृङ्क्ते वर्जयति । अतोऽक्षोपस्पर्शनं तत्र निषिद्धमित्यभिप्रायः । अथोक्तवैलक्षण्येन यो यजमानोऽस्योद्गातुः प्रियः स्यात्तस्योक्तदोषद्वयाभावायाक्षमनुपस्पृशन् प्रोहेत । तथा सति योऽयं द्रोणकलशः स प्राणो वै प्राणाह्वयोऽभुत् । प्रजापतेः शिरस्त उत्पन्नत्वात् । अतोऽनुपस्पृशन् द्रोणकलशं प्रोहन्नुद्गातास्य यजमानस्य प्राणानेव कल्पयति यजमाने स्थापितवान् भवति । अतोऽक्षस्पर्शनमकृत्वा प्रोहेदिति तात्पर्यम् । नन्वक्षस्पर्शाभावेन यजमाने वाक्ख्यापनमुचितमकृत्वा कथं प्राणकल्पनं विरुद्धमिति । नैष दोषः । तूष्णीं यजमाने प्राणेन वाग् ध्रियते । यदा च वाचा व्याह्रियते वाचा प्राणो ध्रियत इति प्राणस्य कल्पनेन वागपि क्लृप्ता भवतीति । तथा च तैत्तिरीयकं यत्रैतदधीते वा भाषते वा वाचि तदा प्राणो भवति वाक् तदा प्राणं रेढि अथ यत्र तूष्णीं भवति स्वपिति वा प्राणे तदा वाग्भवति प्राणस्तदा वाचं रेढि इति । नन्वितरेषामिवोद्गातॄणां मन्त्रेण वरणाभावात्कथमेषामार्त्विज्यकरणमिति ब्रह्मवादिनः प्रश्नमुपक्षिपति । यन्नु यथन्यानित्याहुरेवं साक्षेपं यदि ब्रूयुः । वचनप्रकारमेव प्रदर्शयति । वाचा इन्द्रं होत्रान्मरुतः पोत्रादित्यादिरूपया अन्यानृत्विजो वृणवन्तोऽऽध्वर्यवो वा कस्मादित्यादि स्पष्टम् । तेषामेवमुत्तरं ब्रूयादित्याह । यस्मादेते द्रोणकलशमुपसीदन्ति प्रोहन्ति तेन ते वृता एवार्त्विज्यं कुर्वन्ति । कथं द्रोणकलशेनैषां वृतिरिति तत्राह । यज्ञात्मकप्रजापतिसम्बन्धाद्वा । प्रजापतिः सामेति श्रुतेः । तत्सम्बन्धाद्वा उद्गातारः प्राजापत्याः । द्रोणकलशश्च तन्मूर्धत उत्पन्नत्वात्प्राजापत्यः । तथा सत्युभयोः समानसम्बन्धात्तेन तेषां वरणमिति । अथ द्रोणकलशस्य प्राङ्मुखप्रोहणस्यायमाशय इत्याह । इतः पूर्वमेतेषामुद्गातॄणां गाने प्राङ्मुखत्वाभावाद् द्रोणकलशप्रोहणे प्राङ्मुखा एवोपसीदन्ति कया बुद्ध्येति यज्ञस्याग्रे प्रथमं कर्म प्राङ्मुखाः सन्तः करवामेति । अथ कलशं प्राङ्मुखः प्रोहयेत्प्राच्या दिशोऽभिजयायेत्यत आह । प्राच्या अनभिजितत्वमौदुम्बरे गाने उद्गातॄणां प्राङ्मुखगानाभावाभिप्रायकं स्पष्टम् । ननु रथादिकमश्वादयो युक्ता वहन्ति । कथमुद्गातॄणां यज्ञे योग इति प्रश्नमवतार्य द्रोणकलशसम्पत्तिरेव तेषां योग इत्याह । प्रासेवौ रथयुगस्य सुषिरगतोभयपार्श्वरज्जू तयोर्मध्ये अश्वो युज्यते शम्ये शकटयुगस्योभयपार्श्वकीलके तयोर्मध्येऽनड्वान् तथा सति यज्ञाख्ये रथे कथमुद्गातॄणां योग इति प्रश्नः । यदेते द्रोणकलशं हविर्धानाक्षाधःस्थितमुपसदन्ति स एवैषां योग इति तस्योत्तरम् । तस्मायुक्तैरेवानन्यचित्तैरेवोपसद्यम् । कलशोपसदनं कर्तव्यम् । तथा सति न ह्ययुक्तो वहत्ययमुद्गातृवर्गः ॥५॥

ताण्ड्यमहाब्राह्मणे द्वितीयपञ्चिकायां प्रथमाध्याये पञ्चमी कण्डिका ।

॥ ८ ॥

२.२.५

अस्मिन् खण्डे गायत्र्यव्यतिरिक्तानि चत्वारि सामानि स्तूयन्ते क्रमेण। तत्रादावा-महीयवं स्तौति। पूर्वं प्रजापतिरेकाकी सन् अकामयत बहुः स्यां प्रजायेयेति। स तस्यामवस्थायां स्वव्यतिरिक्तस्य कस्यचिदभावादमहीयमानोऽपूज्यमानः शोचन्नतिष्ठत्। स प्रजोत्पत्त्युपाय-त्वेनैतदामहीयवं नाम सामापश्यत्। तेन प्रयुक्तेन साम्ना इमा देवमनुष्यरूपाः प्रजा असृजत ताः सृष्टाः प्रजा अमहीयन्तापूज्यन्त स्वाभिः प्रजाभिः। यदमहीयन्तैतेन साम्ना सृष्टास्तस्मा-दामहीयवमिति शब्दसामान्येन स्तुतिः। अमहीयुना प्रजापतिना दृष्टत्वादामहीयवमिति तन्नाम संपन्नमित्यर्थः। अथोक्तसाम्नः स्तौषे इति निधनं प्रजापतेः श्रैष्ठ्यसाधनत्वेन प्रशंसति। ताः सृष्टाः प्रजा अस्मात्स्रष्टुः सकाशात् अपाक्रामन्नपागच्छन्। स प्रजापति-स्तासामपगतानां प्राणान्दिविसदितिपादेनात्तवान्। ताः स्वीयेषु प्राणेषु चक्षुरादिषु आत्तेषु प्रजापतिना स्वीकृतेषु पुनरेनमुपावर्तन्तोपागमन्। ताभ्य उपावृत्ताभ्य उग्रंशर्मेति-पादेन पुनः प्राणान्प्रायच्छत्। ता लब्धप्राणा अस्मात्पूर्वं प्राणापहारात्कारणादुदयोधन्नेव उन्मुखा एवायुध्यन्त। केचिदस्मा इति पठन्ति। अस्मा एनं प्रजापतिमुद्दिश्येति तस्यार्थः। स प्रजापतिरेषां प्राणापहारजन्यो मन्युः सञ्जात इति बुध्वा स्तौष इति स्तुतिप्रकाशनेन निधनेन तासां मन्यूनवाश्रणात् निकृष्टं हिंसितवान्। ततः खलु कारणान्मन्य्वपगमात् अस्मै प्रजा-पतये श्रैष्ठ्यायातिष्ठन्त समजानत। अथ विदुषः फलमाह। स्पष्टोऽर्थः। पुनस्तदेव प्रशंसति। यदेतदामहीयवमिति। एषा प्रजानां सृष्टिर्वै सृष्टिकर्तुः सृष्टिसाधनभूता सृष्टेः स्त्रीलिङ्गमपेक्ष्य एषेति साम्नः स्त्रीलिङ्गनिर्देशः। किञ्चामहीयवमेव पापवसीयसञ्च पापस्य पुण्यस्य च विवृतिविधरणी। विवेचनीत्यर्थः। अथ विदुषः फलम्। स्पष्टम्। एवमामहीयवं प्रशस्य रौरवयौधाजयौशनानि प्रशंसितुमाख्यायिकामाह। पूर्वमग्न्यादयश्च-त्वारो देवा यशोऽर्थं सत्रमासत। तस्मिन्समये ते देवा अब्रुवन्यद्यशो नोऽस्माकं मध्ये प्रथममृच्छात् प्राप्नुयात्तद्यशोऽत्तोऽस्माकं सह साधारणमसद्भवत्विति समयं कृत्वा सत्रमासत तेषां मध्ये मखो दैवं यश आर्च्छत् प्राप्नोत्। स तद्यश आदायापाक्रामत्। अस्यापगतस्य तद्यशः प्रासहा प्रसहनेन बलात्कारेणादित्सन्त तदर्थं तं पर्य्ययतन्त परितो युध्यन्। स धन्वो धनुः प्रतिष्टभ्य शिर आततज्यं कृत्वातिष्ठत्। तस्य धनुर्ज्यां वल्मीका भूमावुत्पतिता अखादन्त ततो धनुरात्निः धनुषः कोटिरूर्ध्वा पतित्वा तस्य मखस्य शिरोऽच्छिनत्। उपदी-कानां धनुर्ज्याछेदः शाखान्तरतोऽवगन्तव्यः। तैत्तिरीयके स धनुः प्रतिष्टभ्यातिष्ठत्ता

उपदीका अब्रुवन्वरं वृणीमहै अथ वरमिमं रन्धयाम यत्र क्च खनाम तदपोऽभि तृणादामेति तस्मादुपदीका यत्र क्च खनन्ति तदपोऽभितृदन्ति वरे वृतो ह्यासाम्। तस्य ज्यामप्यादन् तस्य धनुर्विप्रमाणं शिर उदवर्तयदिति। स तच्छिरः प्रवर्ग्योऽभवत्। यज्ञो वै मख उच्यते यत्प्रवर्ग्यं प्रवृञ्जन्ति यजमानस्य तत्तेन यज्ञस्य छिन्नं शिरः प्रतिदधति। सन्ततं कुर्वन्ति। एतत्प्रासङ्गिकम्। अयमर्थः सर्वोऽप्यध्वर्युब्राह्मणे स्पष्टमाम्नायते देवा वै सत्रमासत ऋद्धिपरिमितं यशस्कामास्तेऽब्रुवन्यन्नः प्रथमं यश ऋच्छात् सर्वेषां नस्तत्सहासदित्यादिना। अथ रौरवं स्तूयते। तद्यशो देवा व्यभजन्त। तस्याग्नी रौरवं प्राबृहतेति। तद्यशो देवा अभजन्त तस्य विभक्तस्य रौरवं भागमग्निः पृथक् चकार। एतावता किं यशो लब्धमित्याह। तत्तेन रौरवविभागेन सोऽग्निः पशुवीर्यलक्षणं सामर्थ्यमेव प्राबृहत। तदपि कुत इत्याह रौरवं साम पशवः खलु। तत्र पशुवाचकेडानिधनोपेतत्वादित्यभिप्रायः। विदुषः स्तुतिः। अथ रौरवस्याग्निसम्बन्धं दर्शयति। रुरु इति शब्दायमानो दहतीति रुरुरग्निस्तत्सम्बन्धाद्रौरवं साम। प्रकारान्तरेण रौरवसञ्ज्ञां विब्रुवन्स्तौति। पूर्वं हि देवानसुराः पर्ययतन्त परितोऽयुध्यन्त। ततोऽग्ने रैती रुरी विष्वचौ सर्वतो व्याप्तौ ऊहो३ ऊ वाएयाया औ३होवा इति द्वौ स्तोभावपश्यन् ताभ्यामेनान्प्रत्यौषन् अदहन्। ते प्रत्युष्यमाणा अरवन्त शब्दमकुर्वन्। यदरवन्त तस्माद्रौरवं नाम सम्पन्नम्। रुत्वयोरुभयत्र रेफसाम्याद्रुरुसम्बन्धाद्रवसंबन्धाच्च रौरवमिति साम भवति। इन्द्रस्य यौधाजयाख्ययशःसम्बन्धमाह। अथेत्यानन्तर्यार्थे। इन्द्रो यौधाजयं प्राबृहत स्वभागत्वेन पृथक् चकार। तत् यौधाजयपृथक्करणं वज्रसम्पादनमेव। वज्रस्यैव परिकुर्वद्भिस्तेन कार्यसिद्धेर्यौधाजयस्य वज्रकारणत्वमेव वज्रं वागित्यनेनोच्यते। अथ विदुषः फलमाह। स्पष्टोऽर्थः। अथ निर्वचनद्वारा तदेव प्रशंसति। युधा युद्धेन शत्रूञ्जयतीतीन्द्र एव युधाजित्। तस्य सम्बन्धि तत्साम यौधाजयम्। अथ निर्वचनान्तरप्रदर्शनेन प्रशंसति। हे मर्याः मर्त्याः युधा अजैष्म असुरानिति इन्द्रोऽब्रवीदिति शेषः। तस्माद्युधा जयस्य हेतुत्वाद् यौधाजयत्वमिति नाम संपन्नम् इति स्तुतिः। अथ वायोरौशनसम्बन्धमाह। स्पष्टम्। औशनस्वीकार एव प्राणाख्यवीर्यस्वीकार इत्याह। औशनसामभागपृथक्करण एव प्राणाख्यस्य वीर्यस्य पृथक्कारः। तत्र हेतुः। औशनं साम प्राणाः खलु। तस्मिन्स्वरनिधनसद्भावात्। स्वरस्य प्राणनिरोधमन्तरेणोच्चारणानुपपत्तेः। विदुषः स्तुतिः। स्पष्टोऽर्थः। औशनसञ्ज्ञां निर्वक्ति। उशन्। वश कान्तौ इत्यस्य कर्मणि रूपम्। काम्यते सर्वैः प्राणरूपत्वेनेत्युशन् वायुरेव। तस्य सम्बन्धित्वादौशनमिति नाम सम्पन्नम्। उशन्शब्दादौशनमित्युक्त्वौशनसः सम्बन्धादौशनमाह। पूर्वमुशना नाम कवेः पुत्रोऽसुराणां विरोचनादीनां पुरोहित आसीत्तं देवाः कामदुघाभिर्गोभि-

रुपामन्त्रयन्त। कथं ताभिरनुमन्त्रणं तदाह। अस्मै उशनसे एतान्यौशनानि सामानि कामधेनुसदृशानि प्रायच्छन् तेषां कामधुक्त्वप्रसिद्धिरुच्यते कामदुघा इत्यादिना। अथ विदुषः स्तुतिः। य एवं जानाति एनं कामदुघा गाव उपतिष्ठन्ते समीपं प्राप्नुवन्ति। दोहनशीलबहुगोयुक्तो भवतीत्यर्थः ॥५॥

ताण्ड्यमहाब्राह्मणे द्वितीयपञ्चिकायां द्वितीयाध्याये पञ्चमी कण्डिका।

॥ ९ ॥

२·३·४

उक्तं माध्यन्दिनं सवनमथ तृतीयसवनस्यादौ गायत्रीसम्बन्धं विवक्षुराख्यायिकामाह। पूर्वं साध्याख्या देवा आसन्। ते सर्वेण यज्ञेन सोपकरणेन सोमादिसाधनमादायैव स्वर्गं लोकमायन्नगमन्। ते प्रसिद्धा वस्वादयो देवा आदौ स्वर्गसाधनयज्ञार्थसोमाहरणाय छन्दांसि गायत्र्यादीनि यूयं सोमं द्युलोकादाहृतेत्युक्तवन्तः। तान्यपि तथैवाङ्गीचक्रुरिति शेषः। तथोक्तास्ते जगतीं प्राहिण्वन् प्रैरयन्। सा तत्रत्यैः सोमपालैस्सह युध्वा त्रीण्यक्षराणि हित्वैकाक्षरा भूत्वा पुनर्देवानागच्छत्। चतुरक्षराणि वै तर्हि छन्दांसि वक्ष्यति तदभिप्रायकमिदम्। पुनस्ते त्रिष्टुभं प्राहिण्वन्। सापि पूर्ववत्सोमपालेष्वेकमक्षरं हित्वा त्र्यक्षरा भूत्वा पुनरागच्छत्। ते पुनर्गायत्रीं प्राहिण्वन्। छन्दांसि सर्वाणि चतुरक्षराण्यासन्। ततः सा गायत्री द्युलोके सोमरक्षकैः कृशानुप्रभृतिभिर्जितानि जगतीत्रिष्टुभोश्चतुरक्षराणि हरन्ती अष्टाक्षरा भूत्वाऽऽगच्छत्। पुनः किं कुर्वती आगच्छदित्युच्यते। त्रीणि च सवनानि सवनत्रयपर्याप्तानि सोमद्रव्याण्यादायेति। तद्विविच्योच्यते हस्ताभ्यां द्वे सवने धृत्वा दन्तैस्तृतीयसवनं दष्ट्वाऽऽगच्छत्। यस्मादेव तस्माद्धस्ताभ्यां धृते द्वे सवने प्रातर्माध्यन्दिनसवनयोग्ये सोमद्रव्ये पीडाभावादंशुमती अभूताम्। तृतीयसवनं धीतं पीतसारमभूत्। तत्र हेतुमाह दन्तैर्हि तद्द्रव्यं दष्ट्वा धयन्ती पिबन्ती आहरत्। ह्रियमाणस्य सोमस्य पतिता अंशवः पूतीका अभवन्। तस्य सोमस्य यानि पुष्पाण्यवाशीर्यन्तावशादितानि प्रभ्रष्टान्यासन्। शदेः पाघ्राध्मा० (पा० ७-३-७८) इत्यादिना शीयादेशः। तान्यर्जुनानि हरितपर्णानि अभवन्। यत्प्रापोथत्। अधुनुतान्तानि प्रपोथाख्या ओषधय आसन्। तस्मात्सोमाभावे पूतीकादीनां प्रतिनिधित्वेन स्वीकर्तव्यतामभिधातुं प्रासङ्गिकानामेषामुपदेशः। तस्माद्धीतत्वात्तृतीयसवने आशिरं दधिपयोद्रव्यमवनयन्ति। यमेव तं सोममोषधीनां सारं गावोऽदन्ति भक्षयन्ति तस्य सोमस्य तं रसमवनयन्ति। आशिरावनयने हेतुः ससोमत्वाय सरसत्वाय। एवं

गायत्रीं प्रशस्येदानीं सवनसम्बन्धमाह। ते गायत्र्यपहृताक्षरचतुष्टये त्रिष्टुब्जगत्यौ गायत्रीमब्रूताम्। किमिति। त्वा त्वामुपायावेति उपगच्छावेति। सा पुनरब्रवीत् मे मह्यं ततो युष्मदुपगमनात्किं फलं स्यादिति। ते पुनरब्रूतां तर्हि यत् फलं कामयस इति। सा ते प्रत्यब्रवीत्। किमिति। उच्यते। मम तावत्प्रथमं प्रातःसवनमहमुत्तरे अपि सवने प्रणयानि प्राप्नवानीति। ते तथास्त्वित्यङ्गीचक्रतुरिति शेषः। यस्मादेवं तस्मात्पूर्वं गायत्रं सवनम्। उत्तरे अपि सवने गायत्री प्रणयति। अयमर्थस्तैत्तिरीयके कद्रूश्च वै सुपर्णी चेत्यनुवाके स्पष्टं प्रतिपादितः। अथ तयोर्गायत्रीप्राप्तिप्रकारं दर्शयति। तां गायत्रीं त्रिष्टुबवशिष्टै-स्त्रिभिरक्षरैरुपैत्। अन्तः प्राविशत्। ततो गायत्र्या अष्टाक्षरेण सह एकादशाक्षरा भूत्वा प्राजायत। प्रकृष्टाऽभूत्। तथैकाक्षरा जगत्यपि गायत्रीसंयुक्ता द्वादशाक्षरा प्राजायत। अथ गायत्र्याः सर्वच्छन्दोव्याप्तिरुक्तार्थनिबन्धनेत्याह। तस्मात्त्रिष्टुब्जगत्योः स्वरूपप्रदाना-दसाधारणसोमापहरणाच्च गायत्री वाव गायत्र्येव सर्वाणि छन्दांसि। गायत्री हि एतान् प्रागुक्तैकादशाक्षरद्वादशाक्षररूपात्मनः पोषान् पुष्यन्ती प्राप्नुवन्त्येतद्यज्ञमगच्छत्। तदेवं तृतीयसवने गायत्रं कर्तव्यमिति प्रतिपादितम्। अथार्भवपवमानगतानि गायत्रसंहितादि-सामानि विधास्यन्नादौ स्वादिष्ठयेति तृचं गायत्रसंहितायाधारभूतं सस्तुतिकं विदधाति। पूर्वमिन्द्रस्तृतीयसवनात्पीतत्वेन गतसाराद्बीभत्समानोऽयोग्यत्वेनोपेक्षमाण उदक्रामत् उद्गतवान्। तत्सवनं देवाः स्वादिष्ठयेति स्वादुतमवाचिना पदेनास्वदयन्। स्वादुतममकुर्वन्। मदिष्ठयेति द्वितीयपदेन मद्वत्तुष्टिमदकुर्वन्। पवस्व सोमधारयेति द्वितीयपादेनापावयन्। पूतमकुर्वन्। एवं सवनं तद्योग्यं संपाद्य इन्द्राय पातवे सुत इति पादेनेन्द्रमुपावर्तयन्निति शेषः। तत्र पादे सुत इन्द्राय पातवे पातुमितीन्द्रस्य पानार्थश्रवणात्स्वार्हतामवगत्येन्द्रस्तत्स-वनमुपावर्तत। अभिमुखमागच्छत्। शिष्टं सुज्ञानम्। अथासुरपशुविनाशकत्वद्वारेणैत-त्प्रशंसति। पूर्वं स्वादिष्ठाः पशवो देवेष्वासन् मदिष्ठा असुरेषु तत्तद्भागस्यैव तैस्तैः प्रयु-क्तत्वात्। तदा देवा विदित्वा आसुराणां प्राप्त्युपायं स्वादिष्ठयामदिष्ठयेति पादं पठित्वा तानपि स्वयमलभन्त। अतस्तेषां पशूनवृञ्जतेत्युच्यते। विदुषः फलमाह। स्पष्टोऽर्थः। अथोक्ते तृचे संहितमपि विश्रुत्ते। गेयमिति शेषः। अथैतदन्वर्थनामत्वेन प्रशंसति। सन्धानहेतुत्वात्संहितमिति नामाभूत्। शिष्टं कालेयार्थवद्योज्यम्। अथैतन्माध्यन्दिनसव-नान्तेन कालेयेन सह स्तौति। कालेयस्य पूर्वं तृतीयसवनं सन्तत्यर्थमुक्तमस्यापि तदर्थत्वमिदानीमुच्यते। अत उभयोर्मिलित्वा माध्यन्दिनतृतीयसवनयोः सन्तानसाधकत्वम्। अथ कालेयवदस्यापि सर्वपृष्ठत्वमिति स्तौति। उक्तमिदं पूर्वम् ॥४॥

ताण्ड्यमहाब्राह्मणे द्वितीयपञ्चिकायां तृतीयाध्याये चतुर्थी कण्डिका।

॥ १० ॥

२·४·१

तत्र प्रथमखण्डे ससन्धिसामानस्त्रयो रात्रिपर्यायाः सङ्ग्रहेण प्रदर्श्यन्ते। द्वितीये त एव विव्रियन्ते। तत्रादौ रात्रिपर्यायान्विधित्सुराह देवाः पूर्वमसुरेभ्यः सकाशादुक्थान्यभिजित्य रात्रिं रात्रिपर्यायानभिजेतुं नाशक्नुवन्। ते देवास्तमस्तमोरूपां रात्रिं प्रविष्टानसुरान्नानुव्यपश्यन् अनुगम्य विविच्य द्रष्टुं नाशक्नुवन्। ते देवा असुरदर्शनोपायत्वेनानुष्टुप्शिरसमनुष्टुबुपक्रमगायत्रीद्वयात्मकं पान्तमा व इति प्रगाथमपश्यन्। ननु बार्हताः प्रगाथा इति प्रसिद्धं कथं गायत्र्याः प्रगाथत्वम् इति। नैवं नियमः। अत्र ह्युत्तरभूते गायत्र्यौ पुत्रहतमित्यादिके अनुष्टुप्कारं स्तूयेते। अथ प्रग्रथनसम्भवादयमपि गायत्रतृचः अनुष्टुप्संपत्तेः प्रगाथ इत्युच्यते। तथा च निदानम्। आनुष्टुभा अपि प्रगाथा भवन्तीत्येके अनुष्टुप्प्रथमा गायत्र्या उत्तरे यथा पुरोजिती वो अन्धस आ त्वा रथं यथोतये विशोविशो वो अतिथिं पान्तमा वो अन्धस इतीति। तथा अयं प्रगाथ एव विराडाख्यं ज्योतिरतः प्रगाथदर्शनमेव विराड्ज्योतिर्दर्शनम्। यद्यप्यसौ न विराट्छन्दस्कस्तथापि पुरोजिती वो अन्धस इत्यत्र पथा चाक्षर्या च विराजौ भवत इति पूर्वं प्रतिपादितत्वात्। तद्वत्। एकस्या अनुष्टुभः द्वयोरेव गायत्र्योः पादानां परिगणने दशसङ्ख्यासद्भावाद्यथा विराडित्युच्यते। अत एव तमःप्रविष्टानामसुराणां विराजनसाधनत्वाज्ज्योतिष्ट्वमुपचर्य विराजं ज्योतिरपश्यन्नित्युक्तम्। तानसुरान्विराजा ज्योतिषा अनुक्रमेण दृष्टाननुष्टुभा वज्रेण रात्रेः सकाशान्निराघ्नन्। निरगमयन्। नाम्नि वाग्वज्र इति श्रुत्यन्तराद्वाचो वज्ररूपत्वम्। वागनुष्टुबिति श्रुतेश्चानुष्टुभो वाग्रूपत्वमित्यनुष्टुभो वज्रत्वव्यपदेशः। अत इदानीन्तनैरप्ययं प्रगाथः कर्तव्य इति विदधाति। व्याख्यातप्रायमेतत्। रात्रेर्निराघ्नन्निति सामान्येनोक्तं विवृण्वन्पर्यायशब्दं निर्वक्ति यद्यस्मात्समन्तं रात्रेः सर्वतः पर्यायं यत्र यत्रासुराः पराभूतास्तिष्ठन्ति तं तं देशं परीत्य परीत्य प्राणुदन्त प्रणोदनमकुर्वंस्तत्पर्यायाणां पर्यायत्वं संपन्नम्। प्रगाथमपश्यन्निरयुक्तं तस्य प्रथनप्रकारमाह। प्रथमपर्यायस्य प्रथमानि पदानि गायत्र्योरुत्तरयोर्ऋचोः प्रथमपादगतानि पुनरादीनि पुनरादीयन्तेऽभ्यस्यन्ते इति पुनरादीनि। तादृशानि भवन्ति पुत्रहतं पुरुष्टुतमिति द्विरावर्तयेत् उक्तनियमविधिसिद्ध्यर्थं देवैः पूर्वमनुष्ठितमिति दर्शयति। यतो देवाः पूर्वमसुराणां प्रणोदनं प्रगाथगतप्रथमपदानि पुनरादाय प्रथमरात्रादकुर्वन् अत इदानीन्तनैरप्येवं कर्तव्यम्। अथास्य प्रस्तावभागमाह। स्पष्टम्। एतत्प्रशंसति। अत्र स्तुसामान्येन स्तुतिः क्रियते पाति रक्षत्यालोकेनेति पान्तमहः। अन्ध-

करणादन्धो रात्रिः। एवं सति पान्तमिति क्रमेण युञ्जन्ति तत्तेनाह्नैव रात्रिमारभन्त उपक्रमन्ते। प्रगाथं विधाय तत्र साम विधत्ते। कर्तव्यमिति शेषः। अथैतस्य प्रवृत्तिनिमित्तं दर्शयन्नवगतिप्रतिष्ठयोर्हेतुत्वेन प्रशंसति। श्रायसः श्रेयसः पुत्रो वीतहव्यो नाम ऋषिः। देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् (पा० ७-३-१) इति श्रेयःशब्दस्यादेराकारः। ज्योक् चिरकालं निरुद्धः शत्रुभिर्निरोधं प्रापितस्तन्निर्गमनायैतत्साम दृष्टवान्। स चानेनावगच्छत् अवगतोऽभूत्। अन्यत्स्पष्टम्। अथ साम्नो यदोको इति निधनं तत्प्रशंसति। ये रात्रिं रात्रिपर्यायानुपयन्ति प्रयुञ्जत उद्गातारः। एते तम इव प्रविशन्ति खलु। रात्रौ तमस्सद्भावात्। अतो रात्रेः प्रथमे पर्याये ओकोनिधनप्रयोगः प्रज्ञात्यै अनुष्ठेयार्थदर्शनाय भवति। कथमस्य प्रज्ञातिहेतुत्वमित्याशङ्क्य तल्लोकप्रसिद्धिबलेन समर्थयति। यदा कश्चित्पुरुषः दूरमध्वानं गत्वा स्वमोकः स्वकीयं सद्म पुनरागच्छति प्राप्नोति स्ववित्तं सर्वं धनादिकं तर्हि तदा प्रजानाति तदेवोच्यते अस्मै सर्वं दिवा भवति प्रकाशितं भवतीत्यर्थः। एवं सङ्ग्रहेण प्रथमपर्यायं विधायाथ मध्यमं पर्यायं विधातुमाह। ते प्रथमेन पर्यायेण पूर्वरात्रात्प्रणुन्ना असुरा मध्यमं पर्यायमश्रयन्त आश्रयन्। तेषां वाचमौर्ध्वसद्मनेन साम्ना अवृञ्जत अवर्जयन्। उक्तार्थस्य फलमाह। स्पष्टोऽर्थः। अत्र त्रिणिधनं विधत्ते सुवृक्तिभिर्नृमादनं भरेषु वा, इति निधनत्रयम्। उक्तनिधनत्रयं माध्यन्दिनसवनसाम्येन प्रशंसति। अह्न एकाहसाध्यस्य ज्योतिष्टोमस्य माध्यन्दिनं सवनं यथा त्रिणिधनायतनं निधनत्रयसद्भावेनायतनत्रयोपेतम्। माध्यन्दिनसवने यौधाजये पुनान इत्यत्र सासीत्येकं दासीति द्वितीयं यथाया इति तृतीयमिति हि निधनत्रयं तत्र प्रदर्शितम्। एवमेष रात्रेर्मध्यमः पर्यायस्त्रिणिधनायतनः। तत्र प्रथमं त्रिणिधनत्वं सलोमत्वायानुलोम्याय। अथ साम्नां स्तोत्रीयासु अयं त इत्यादिषूत्तरयोरनुष्टुप्त्वाय मध्यमपादावृत्तिः पूर्वं देवैस्तथा कृतत्वात्कर्तव्येति विधित्सुराह। इदं वाक्यद्वयं प्रथमपर्यायवाक्यद्वयेनैवोक्तप्रायम्। अथोत्तमं पर्यायमाह। घृतं पयः क्षरन्तीति पशव एव घृतच्युतः। अत एतन्निधनेनासुराणां पशुवर्जनं युक्तम्। उक्तार्थवेदितुः प्रशंसा। इदं सन्निवत्र साधुच्छन्दसं सामोत्तरस्मिन्विधास्यते ततः स्तोत्रीयासु उत्तरयोरनुष्टुप्त्वाय अन्त्यपादावृत्तिं देवैः कृतत्वात्कर्तव्यत्वेन विधत्ते। स्पष्टम्। अत्र त्रिष्वपि रात्रिपर्यायेषु होतुः सामान्येनोक्तानि मैत्रावरुणादीनां सामानि उत्तरस्मिन्खण्डे निर्देशक्रमादेवावगन्तव्यानि। एवं पर्यायत्रयमुक्त्वा सन्धिस्तोत्रस्य विधिमुन्नयति। तांस्त्रिभ्यो रात्रिभागेभ्योऽपगत्याहोरात्रयोर्यः सन्धिरस्ति तमाश्रितान् सन्धिना सन्धिस्तोत्रेणाभिपलायन्त। अन्तर्णीतणयर्थोऽयम्। अभि अनुसृत्य पलायनमकारयन्त। अतो यज्ञविघातिनां सन्धेरपगमाय सन्धिसामेदानीन्तनैरपि कर्तव्यमिति विधिर्द्रष्टव्यः। अथा-

सुराणामसङ्घातायाश्विनमाह। तान् सर्वतः पलायितानसुरान् आश्विनेन शस्त्रेणासंहार्यं संगन्तुमयोग्यमगमयन्। यथा मिथो न सङ्गच्छेयुस्तथाऽकुर्वन्नित्यर्थः। उक्तार्थवेदितुः फलमाह। स्पष्टोऽर्थः। अथ रात्रिपर्यायमग्निष्टोमसामसंपादनेन प्रशंसति। सम्मा समा। साम्यमित्यर्थः। साम्यं दर्शयति। चत्वार्याज्यानि चत्वारि पृष्ठानि मिलित्वाष्टौ त्रीणि पवमानस्तोत्राणि मिलित्वैकादशैकं यज्ञायज्ञीयमिति मिलित्वा द्वादश अग्निष्टोमस्य स्तोत्राणि। रात्रिपर्यायेष्वपि सन्धिव्यतिरेकेण प्रतिपर्यायं होत्रादीनि चत्वारि चत्वारि स्तोत्राणीति द्वादशेत्येवं साम्यम्। अत्राप्युक्थ्यसाम्येन सन्धिं प्रशंसति। अत्र रात्रिशब्देन तदनन्तरभावि सन्धिस्तोत्रं लक्ष्यते। अनयोः साम्यं दर्शयति। उक्थ्यस्तोत्राणि त्रीणि सन्धिस्तोत्राण्यपि त्रीणि। अग्निरुषा अश्विनाविति त्रिदेवत्यानि। एवमुभयत्र त्रित्वात्साम्यम्। समत्वसंपादनेनोक्थ्यस्याग्निष्टोमसमनन्तरभावित्वेनेव रात्रिसमनन्तरभावि सन्धिसाम प्रशंसति। अह्नो ज्योतिष्टोमसमनन्तरभवान्युक्थानि यथा यादृशानि एवं रात्रेः सन्धिरपि। उक्थ्यानां छन्दोभेदान्नानारूपत्वं सन्धेस्तु नानादेवताभेदान्नानारूपास्तृचा इत्युक्थ्येन साम्यम्। अथ कामनाभेदेन सन्धिस्तोत्रं विवक्षुरादौ प्रतिष्ठाकामायाह। एना वो अग्निं प्रत्यु अदर्शि इमा उ वामिति प्रगाथेषु कर्तव्यं नित्यमेव। रथन्तरेऽभिसन्धिभेदात्प्रतिष्ठासाधनत्वमपि। एतत्प्रशंसति। स्पष्टम्। अथ बृहत्स्वर्गायाह। स्पष्टम्। बृहत्स्वर्गयोः साम्यमाह। द्यावापृथिव्योः स्वर्गो द्वितीयः। रथन्तरबृहतोर्मध्ये बृहद्द्वितीयमिति तस्य तत्स्थानीयत्वम्। पशुकामाय वैकल्पिकसन्धिसामानि दर्शयति। विकल्पवाचिना वाशब्देनैव विकल्पे सिद्धेऽपि पुनरेतेषामेकमिति वचनं स्पष्टार्थम्। एतानि प्रशंसति। एतेषां प्रयोगे पशवो लभ्यन्त इत्येतान्येव पशव उच्यन्ते। अत्रार्षेयकल्पः प्रतिष्ठाकामाय यत्क्लृप्तं रथन्तरसन्धिसामवत् बृहत्सन्धिसाम तेष्वेव प्रगाथेषु वारवन्तीयं वामदेव्यं शुध्यं वैतेषामेकं पशुकामस्य सन्धिं कुर्यात् एष्वेव प्रगाथेष्विति। अथोक्तस्य सन्धिसाम्नोऽनुवचनं होतुर्विधत्ते। आश्विनाख्यं सन्धिस्तुतं सन्धिस्तोत्रमनु होता शंसेत्। यद्यप्यस्य विधानं बह्वृचब्राह्मण एवोचितं तथापि अस्य वक्ष्यमाणरूपप्रशंसया पवमानदेवत्यत्वेन स्तोत्रस्य प्रशंसा भवतीति तदर्थमत्रापि विधानम्। उत्तरत्र सर्वाः खलु देवताः शस्यन्त इति वक्ष्यति। अतोऽस्य वैश्वदेवत्वं युक्तम्। कथमाश्विनमुच्यत इति तद्विवक्षुराह। पूर्वं प्रजापतिरेतत्सहस्रं सहस्रसंवत्सरमसृजत तत्सृष्टं देवेभ्यः प्रायच्छत् इदं स्वीकुरुतेति तस्मिन्सहस्रे न समराधयन् विभागं कृत्वा संसिद्धा नाभवन्। ते क उपाय इति सञ्चिन्त्य सूर्य- काष्ठामवधिं कृत्वाऽऽजिमधावन् अगच्छन्। इदानीमाश्विनसम्बन्धं दर्शयति। तेषां देवानां मध्येऽश्विनौ प्रथमौ सन्तावाजिमधावतामार्जतौ प्रथमगामिनावनुगत्य देवा

अवदन्। किमिति। तत्सहस्रं नोऽस्माकमपि सहास्तु इति एवं देवैरुक्तौ भागप्रदानेना-स्माकं किं फलमिति देवानुक्तवन्तौ। किमपेक्षितमिति तैः पृष्टाविदमुक्थमस्मदेत्यं सर्वैरुच्याता उच्यतामिति देवानयाचताम्। यस्मादेवं तस्मादिदं शस्त्रमाश्विनमुच्यत इति। सह नोऽस्त्वित्युक्तं शस्त्रसम्बन्धं दर्शयति। यस्माद्देवैः प्रार्थितं तस्मादाश्विनशस्त्रे सर्वा देवताः शस्यन्ते। तथा हि अग्निरुषा अश्विनौ सूर्य इन्द्रो मित्रावरुणौ द्यावापृथिव्यौ निऋति र्बृहस्पति-रित्येतेऽत्र शस्यन्ते। अथास्य शंसने किञ्चिन्नियमद्वयमाह। लोके आजिं धावन्तः क्षिप्रमेव धावन्ति। एते ऋत्विज आजिं धावन्तीव यज्ञं समापयन्ति अत एतत्तैः क्षिप्र-मविलम्बेन शंसनीयम्। तच्च शंसनमा सूर्यस्योदेतोः सूर्योदयकालपर्यन्तं कर्तव्यम्। शिष्टं स्पष्टम् ॥१॥

ताण्ड्यमहाब्राह्मणे द्वितीयपञ्चिकायां चतुर्थाध्याये प्रथमा कण्डिका।

॥ ११ ॥

३·३·४

अथ होतुः पृष्ठस्तोत्रनिर्वर्तकं शाक्वरसाम विधित्सुस्तस्य सञ्ज्ञाचतुष्टयं प्रदर्श्य निर्वक्ति। वृत्रमावारकमसुरं हनानि हन्यामिति वदन्निन्द्रः पुरा प्रजापतिमुपाधावत्। उपागमत्। तस्मा इन्द्राय प्रजापतिरेतच्छक्वर्यात्मकमिन्द्रियं बलं वीर्यं वृत्रहननक्षमं सामर्थ्यं छन्दोभ्यो गायत्र्या-दिभ्यः सकाशान्निर्याय सारत्वेनादाय प्रायच्छद्दत्तवान्। एतेन वीर्येण वृत्रं हन्तुं शक्नुहि शक्तो भवेति वदन्। यस्माच्छक्नुहीति प्रजापतिरवोचत्तस्माच्छक्वरीणां शक्वरीत्वम्। शक्त्यु-त्पादकत्वाच्छक्वर्य इति नाम संपन्नम्। आधाराधेययोरभेदविवक्षया शक्वरीशब्देन बहुवच-नान्तेन शक्वरीषु गातव्यं सामैवोच्यते। आधारबहुत्वाद्बहुवचनम्। एवं प्रजापतिना दत्ते वीर्ये तेन सीमानं वृत्रासुरस्य शिरसो मध्यदेशमभिनत्। इन्द्रो विदारितवान्। तत्तस्मा-त्सीम्नो भेदकत्वात्सिमा इति शक्वर्य उच्यन्ते। ततः सीम्नो भेदनानन्तरं मन्द्यं ति अनुकरण-शब्दोऽयम्। एवंरूपं शब्दमकरोत्। तस्मादेतासां मन्द्यं ति नाम संपन्नम्। ततो महान्घोष आसीत्तन्महानाम्न्य इति सञ्ज्ञा आसां जाता। एतच्च सञ्ज्ञाचतुष्टयम् आर्षे-येण प्रदर्शितम्। ऐन्द्यो महानाम्न्यः प्रजापतेर्वा विष्णोर्वा विश्वामित्रस्य वा सिमा वा मन्द्या वा शक्वर्यो वेति। एवंभूतं शाक्वरं साम होतुः पृष्ठतया कार्यमिति विधिरुन्नेतव्यः। अथै-तस्याधारभूताः शक्वरीः पादसङ्ख्यया स्तौति। इदमत्रावगन्तव्यम्। महानाम्नीनामृचां तिसृणां शक्वरीणामृचा प्रत्येकं त्रयोदशपादा अभिधीयन्ते अतः प्रत्यृचमादितो द्वौ द्वौ पादौ

मिलित्वैकैका द्विपदा शक्वर्या बहिर्भूता ततस्त्रयः पादाः शिक्षाशचीनामित्याद्याः शाक्करास्ततः स्वर्णांशुरिति व्यूहेन पञ्चाक्षरः पादो धातुसञ्ज्ञकः। ततः प्रचेतन प्रचेतयेति पादो वत्ससञ्ज्ञकः। एतावपि पादौ शक्वर्या बहिर्भूतौ स्तोभवत्प्रयोज्यौ। अथेन्द्रद्युम्नायन इष इत्यूधःसञ्ज्ञकः पादः शाक्करः। तत एवाहि शक्र इति पञ्चाक्षरः पादः पुरुषसञ्ज्ञकोऽशाक्करः। राये वाजाय वज्रिव इत्याद्यास्त्रयः पादाः शाक्कराः। अथायाहि पिबमत्स्वेत्यध्यासनामकः पादः। एवं प्रथमाया-मधीतास्त्रयोदश पादाः। तत्र शक्वर्या अवयवभूताः सप्त शाक्करा अन्ये त्वशाक्कराः स्तोभवच्छक्करी-शेषतया प्रयोज्या इति प्रथमा शक्करी सप्तपदा जाता। एवमुत्तरयोरपि शाक्कराशाक्कर-विभागो ज्ञातव्यः। तदुक्तं सूत्रकारेण महानाम्नीः प्रकृत्य तासां प्रथमद्वितीये पदे द्विपदा-स्त्रीणि शाक्कराणि धातुर्वत्स ऊधस्तच्छाक्करं पुरुषस्त्रीणि शाक्कराण्यध्यासेति पदान्युत्तमा तु ह्यध्यासेति। तिसृणां शक्करीणामादित एकैका द्विपदा। ततस्त्रयः शाक्कराः पादास्ततो धातुर्वत्स ऊधश्चेत्येतत्सञ्ज्ञकास्त्रयः पादाः शाक्करास्ततः पुरुषसञ्ज्ञक एकः पादोऽशाक्करस्त-तस्त्रयः पादाः शाक्करास्ततोऽध्यासैकपदा। उत्तमायान्तु शूरो यो गोषु गच्छति सखा सुशेवो अद्वयुरिति द्वावध्यासौ इति सूत्रार्थः। अत्र निदानकारः। अथैतासु महानाम्नीषु विप्रतिपादयन्ति इदं शाक्करमिदमशाक्करमिति। अशाक्करी प्रथमा द्विपदा शाक्कराणि त्रीणि पदानि धातुरशाक्करः पञ्चाक्षरः। स एव कृताकृतौ भवति। वत्सोऽ-शाक्करोऽष्टाक्षरः। ऊधः शाक्करमष्टाक्षरं पुरुषोऽशाक्करः पञ्चाक्षरः शाक्कराण्येव त्रीणि पराणि पदानि अध्यासोऽशाक्करोऽष्टाक्षर इति। नन्वेवमेतास्तिस्रोऽपि शक्वर्यः सप्तपदा जाताः कथं पञ्चपदा षट्पदेति व्यवहारः। उच्यते। प्रातिलोम्येनेयं स्तुतिः। द्वितीयायाः सम्बन्धी स नः पर्षदतिद्विष इत्यध्यासात् पूर्वमाम्नातोऽन्त्यः पाद उत्तमायां शक्वर्यां द्विपदाया ऊर्ध्वं द्विरभ्यस्यते। अतस्तत्पादद्वयं पुनराम्नातमिति कृत्वा अवशिष्टशाक्करपादपञ्चकाभिप्रायेण सा तृतीया शक्करी पञ्चपदा भवति। तथा प्रथमायाः शक्वर्या अध्यासात्पूर्वभावी मंहिष्ठ वज्रिन्नृञ्जसे इति योऽयमन्त्यः पादः स एव द्वितीयायाः शक्वर्या द्विपदाया ऊर्ध्वमाम्नायते। तदतिरिक्तपादषट्-काभिप्रायेण द्वितीया शक्करी षट्पदा भवति। तदुक्तं निदाने प्रतिलोमं वदन्ति पदतश्चिद्रोहो भविष्यतीति सप्तपदा प्रथमा शक्करी षट्पदा द्वितीया यद्धि प्रथमाया उत्तमं पदं तद्द्वितीयायाः प्रथमं प्रगाथः सानुपृष्ठमिति पञ्चपदोत्तमा यद् द्वितीयाया उत्तमं तत् तृतीयायाः प्रथमं च द्वितीयञ्चेति। अक्षरार्थस्तु येयं पञ्चपदा तृतीया शक्करी सा प्राच्याद्या मध्यान्ताः पञ्च दिशो दाधार धारयति। या षट्पदा शक्करी द्वितीया सा वसन्तादीन्षडृतून्धारयति। सप्तपदा प्रथमा शक्करी गायत्र्यादीनि सप्त छन्दांसि धारयति। तिसृष्वपि शक्करीषु या प्रथमा द्विपदा सा पादद्वययुक्तं पुरुषं धारयतीति। अथैताः शक्करीः प्रकारान्तरेण स्तौति। अस्य स्तोत्रस्य

त्रिणवस्तोमयुक्तत्वात्सप्तविंशतिः स्तोत्रियाः। एवा ह्येवेत्यादीनि पुरीषपदानि पञ्च। एवं द्वात्रिंशत्संपद्यन्ते। तदिदमुच्यते द्व्योपशाः संस्तुता भवन्तीति। संस्तुताः सहस्तुता विराट्संपत्तेरूर्ध्वं द्वे ओपशे अतिरिक्ते यासां ताद्व्योपशा भवन्ति। यस्माद्द्वोरूपाणां शक्करीणामेवंरूपता तस्मात्पशवो गवाद्या द्व्योपशा द्विशृङ्गा आसन्। अथ प्रकारान्तरेण स्तौति। प्रथमायां स्तोत्रीयायामिन्द्रद्युम्नायन इष इति पादं निरावर्त्य प्रथमोत्तमयोरुपरि इडाशब्दः प्रक्षिप्य गीयते। मध्यमे त्वथकारः। एवमुत्तरयोरपि। इन्द्रो विदे तमुष्टुहि पूर्वीः शविष्ठ शस्यत इति पादयोस्तदेतत्स्तूयते। अथकारमथेतिशब्दः। अभितः पार्श्वयोरिडे इडाशब्दौ भवतः। तत्र चाथशब्दो ह्रस्वान्त इडाशब्दो दीर्घान्तः। यस्मादेवं तस्मात्स्तूपात्। स्तूपः शृङ्गयोर्मध्यः संहतो देशः तस्मात्सकाशात् शृङ्गे तीक्ष्णीयसी अतिशयेन तीक्ष्णे द्राघीयसी सूक्ष्माग्रे भवतः। द्विपदाद्या अशाक्कराः प्रागनुक्रान्तास्तासां गानं विधत्ते। उप शक्करीणां समीपे वर्तमानाः क्षुद्राः अल्पपरिमाणास्तदङ्गभूता ऋचः उपक्षुद्रास्ता गायेत्। यस्मादेवंरूपाणां शक्करीणामेवंरूपता तस्मात्पशवो गवाद्या अप्युपक्षुद्राः समीपवर्तिलघुदेहवत्सादियुताः। अथैतद्गाने गुणं विधत्ते। शक्करीरशक्करीश्चासंश्लिष्टा विच्छिन्ना गायति। गायेत्। यस्माद्गवादिरूपाः शक्कर्योऽशक्कर्यश्चासंश्लिष्टास्तस्मात् पशवोऽप्यसंश्लिष्टाः स्वभावतः स्वेच्छाचारिणः। अथ शाक्कराशाक्करपादव्यतिषङ्गेण यच्छक्करीणां नानात्वं तत्स्तौति। स्पष्टोऽर्थः। अथ शक्करीणां गानसमये उद्घोषं जनयद्भिर्गातव्यमिति विधातुमभिप्रेत्याह। आपश्च खलु पुरा क्षीररसाः क्षीरस्य पयसो रस इव रसो माधुर्यं यासां तथाविधा आसन्। तथा सति स्वभाववैपरीत्यदर्शनात्पूर्वोक्ता देवाः पापवसीयसात् पापं निकृष्टं वसीयः श्रेष्ठमुभयोः साङ्कर्यादबिभयुः। भीता अभवन्। एवञ्चावकाभिः सहिता अप उपनिधाय समीपे स्थापयित्वा शक्करीभिः स्तुवत इति यत्तत्पापवसीयसः पापस्य निकृष्टस्य वसीयसः उत्कृष्टस्य च विधृत्यै विधारणाय असाङ्कर्येण स्थापनाय भवति। उक्तं सूत्रकृता अपः सावकाः उपनिधाय महानाम्नीभिः स्तुवीरन्यो यः सामाङ्गं ब्रूयात्स उद्घोषं जनयेदिति। एतद्वेदनं प्रशंसति। स्पष्टोऽर्थः। अथास्य साम्नः काम्यानि निधनानि प्रदर्श्य स्तौति। गायत्रं गायत्र्याः सम्बन्धि अयनं गमनमनुष्ठानं भवति। कस्य ब्रह्मवर्चसं कामयमानस्य यजमानस्य। किं तद्गायत्र्याः सम्बन्ध्ययनं स्वर्णिधनम्। स्वरिति निधनस्य करणम्। एवं कुर्वन्स्वर्गलोके मधुना माक्षिकेण उपतिष्ठते। तिष्ठतेः सङ्गतिकरण आत्मनेपदम्। सङ्गच्छत इत्यर्थः। तथा ओजस्कामस्य बलकामस्य यजमानस्य त्रैष्टुभं त्रिष्टुप्सम्बन्ध्ययनं भवति। किन्तदथकारनिधनम्। अथेति निधनस्य करणम्। एवं कृतवान् त्रैष्टुभमयनममुष्मिंल्लोके आज्येनोपतिष्ठते सङ्गच्छते। तथा पशुकामस्य यजमानस्य जागतं जागत्याः सम्बन्ध्ययनं भवति।

किन्तत्रागतमयनम् इडानिधनम् । इडेतिशब्दस्य निधनत्वेन करणम् । इडायाः पशुरूपत्वादमुष्मिँल्लोके पयसोपतिष्ठते । इडानिधनं कुर्वन्यजमानः पयसा क्षीरेण सङ्गच्छते । अथैतासां प्रस्तावोद्गानयोः क्षिप्रत्वं विधातुमाह । माल्य इति गोत्रनिर्देशः । एवम्भूत आर्यो नाम ऋषिः । अञ्जसा आर्जवेन शीघ्रं शक्करीः प्रारीत्सीत् । प्रकर्षेणाङ्गतवान् । इति निर्देशात्खलु कौशेयः कुशेः पुत्रो रजनः पारिजानतं परिजानतोऽपत्यमलम्भमेतत्सञ्ज्ञकमृषिं प्रत्युवाचोक्तवान् । तस्याभिप्राय उच्यते । एताः शक्करीः प्रतिष्ठापं प्रतिष्ठापयितुं यदि शक्ष्यति शक्तो भविष्यति तथैव कर्तव्यमिति प्ररोदुरभिप्रायः । एतत् एषः । एतासां शक्करीणाम् । कर्मणि षष्ठ्यौ । एताः शक्करीरञ्जयति गमयति स्पष्टीकरोति वा । अञ्ज् व्यक्तिम्रक्षणकान्तिगतिषु । तथा प्रतिष्ठिता अनपायाश्च करोति एष इत्युक्तम् । कोऽसावेषं इति । तदुच्यते । य आभिः शक्करीभिः क्षिप्रं शीघ्रं प्रस्तुत्य प्रस्तावभागमुच्चार्य क्षिप्रं शीघ्रं शीघ्रमुद्गायति । उद्गानं करोति । प्रस्तुत्येति पूर्वकालमात्रेण क्त्वाप्रत्ययः । एवा ह्येवेत्यादीनि पञ्च पुरीषपदानि तेषु गानं विधन्ते । शक्करीभिः शाक्करेण साम्ना स्तुत्वानन्तरं पुरीषेण । सामान्याभिप्रायकमेकवचनम् । पुरीषैः पुरीषपदैः स्तुवते स्तुवीरन् । तदेतत्प्रशंसति । या एताः शक्कर्यस्ताः पशवो वै गोरूपा एव तद्वाचकैरिडाशब्दैर्बहुभिरुपेतत्वात् । यद्वा वत्ससञ्ज्ञकेनोधःसञ्ज्ञकेन च पादद्वयेन योगाच्छक्कर्यः पशवः । ऊधसा वत्सेन च युक्ताः खलु पशवो लोक उपलभ्यन्ते । यदेतत्पुरीषं पुरीषपदं तद्गोष्ठो गवामवस्थानप्रदेशः । तत्तथा सति गोष्ठमेव तत्पशुभ्यः पर्यस्यन्ति परितः क्षिपन्ति निर्मिमते । तमेव गोष्ठदेशं प्रत्येनान्पशून्प्रवर्तयन्ति । अविस्रंसाय विस्रंसनाभावाय । अविनाशायेत्यर्थः । मैत्रावरुणपृष्ठं प्राकृतमेवेत्यभिप्रेत्य ब्रह्मणः पृष्ठस्य स्तोत्रियस्य तृचं दर्शयति । इन्द्रो मदाय वावृध इति तृतीयस्य पृष्ठस्तोत्रियो भवति । तत्र वावृध इति भूतकालवाचिलिडन्तो वृधिधातुः श्रूयते । एतर्हि एतस्मिन्काले पञ्चमस्याह्नोऽनुष्ठानसमयेऽवर्द्धन्त हि यजमानाः समृद्धा अभवन् । अतो भूतकालविषयवृद्धिप्रतिपादकशब्दोपेतस्तृचः सङ्गत इत्यर्थः । अथास्मिंस्तृचे गेयं साम विधत्ते । बृहद्गिरेरिदं बार्हद्गिरम् । एतदाख्यं साम तासु इन्द्रो मदायेत्यायासु भवति । गातव्यमित्यर्थः । अथ विकल्पितं स्तोत्रियं सामान्तरविशिष्टं विदधाति । स्वादोरित्थेत्येष तृचो ब्रह्मसाम स्तोत्रियः कार्यः । यदेतद्दशरात्रस्य पञ्चममहरेष विषुवान् । यथा गवामयनस्य पञ्चभूतयोः षण्मासयोर्मध्ये वर्तमानमहः पक्षद्वयस्पर्शनाद्विषुवानित्युच्यते । तथेदं पञ्चममहरपि द्वादशाहस्य क्रतोः पूर्वभागस्य षट्कस्यावसाने वर्तमानत्वेन मध्यवर्तित्वाद्विषुवानित्याख्यायते । तस्माद्विषुवच्छब्दयुक्तस्तृचः सम्बन्धार्ह इत्यर्थः । तासु विषुवच्छब्दयुक्तासु स्वादोरित्थेत्यादिषु रायोवाजीयम् । रायोवाजो नाम कश्चित् । तत्र-

सम्बन्धि साम गातव्यम् । अथ कामनाभेदे ब्रह्मसाम तथा विभित्सुराह । पुरा खल्विन्द्रो यतीन् एतत्सञ्ज्ञकान्यज्ञविरोधिनो जनान् सालावृकेभ्यः । सालावृकयाः पुत्रेभ्य क्रोष्टुभ्यः प्रायच्छत् । भक्षणार्थं दत्तवान् । तेषां यतीनां मध्ये त्रय उदशिष्यन्त । अवशिष्टाः सालावृकैरभक्षिता आसन् । के पुनस्ते पृथुरश्मिर्बृहद्गिरी रायोवाज इति । तेऽवशिष्टा एवमब्रुवन् को नोऽस्मानिमान् पुत्रात्मना स्वीकृतान्कृत्वा भरिष्यति पोषिष्यतीति । एव-मुक्तोऽहं वो युष्माकं पोषकोऽस्मीतीन्द्रोऽब्रवीत् । अथ तान् पृथुरश्म्यादीनभिनिधाय रथे आरोप्य वर्द्धयन् पोषयन्पर्यचरत् । परिचर्यां कृतवान् । एवं वर्द्धयित्वा पुनरब्रवीत् हे कुमारका मम पुत्रभूता वरान्वृणीध्वं याचध्वमिति । तत्र पृथुरश्मिर्मह्यं क्षत्रं बलम-स्त्वित्यब्रवीत् । अवृणोत् । ततस्तस्मै पृथुरश्मये एतेन पार्थुरश्मेन साम्ना क्षत्रं बलं प्रायच्छदिन्द्रो दत्तवान् । तस्मादद्यतनोऽपि क्षत्रकाम एतेन पार्थुरश्मेन ब्रह्मसाम्ना स्तुवीत । अथैतद्वेदनफलम् । अस्य वेदितुः क्षत्रजातेरिव प्रकाशः कीर्तिर्भवति प्रतिष्ठितश्च भवति य एवं ब्राह्मणार्थं जानाति । अथ बृहद्गिरिर्ब्रह्मवर्चसं ब्राह्मं तेजो मह्यमस्त्विति अब्रवीत् अयाचत । ततस्तस्मै बृहद्गिरय एतेन बार्हद्गिरेण साम्ना ब्रह्मवर्चसं प्रायच्छ-दिन्द्रः प्रादात् । तस्माद्ब्रह्मवर्चसकामः ब्रह्मवर्चसं कामयमानो यजमान एतेन बार्हद्गिरेण स्तुवीत स ब्रह्मवर्चसी भवति । अथ रायोवाजो मह्यं पशून्देहीत्यब्रवीत् । ततस्तस्मै रायोवाजायैतेन रायोवाजीयेन साम्ना पशून् प्रायच्छद्दत्तवान् । तस्मात्पशुकामो यजमान एतेन रायोवाजीयेन ब्रह्मसाम्ना स्तुवीत । स पशुमान्बहुपशुको भवति । अथैतत्सामत्रयं कर्तृविशेषे व्यवस्थापयति । राजन्याय क्षत्रियाय पार्थुरश्मं ब्रह्मसाम कुर्यात् । एवमुत्त-रत्रापि योजना । क्षत्रियस्य स्वकीयं रूपं क्षत्रम् । ब्राह्मणस्य ब्रह्मवर्चसम् । वैश्यस्य पशवः । पाशुपाल्यं हि तस्य कर्म । एतानि त्रीणि सामानि एतत्त्रितयसाधनानीत्युक्तम् । तत्तथा च स्वेन स्वकीयेन नियतेनैव रूपेणैतान्राजन्यादीन् समर्द्धयति समृद्धान् करोति । अच्छावाकपृष्ठस्तोत्रमपि प्राकृतमेवेत्यवगन्तव्यम् । एतेषु च त्रिष्वपि पृष्ठस्तोत्रेषु पूर्वोक्त-स्त्रिणव एव स्तोमः कार्यः ॥४॥

ताण्ड्यमहाब्राह्मणे तृतीयपञ्जिकायां तृतीयाध्याये चतुर्थी कण्डिका ।

॥ १२ ॥

३.५.५

अथास्मिन्नवमेऽहन्यार्भवपवमानस्तोत्रियांस्तृचान्क्रमेण दर्शयति । तत्र प्रथमं तृचं विधाय स्तौति । त्वं सोमासीति गायत्री आर्भवस्य प्रतिपद्भवति । एतदादिकस्तृचो

भवतीत्यर्थः । तत्र धारयुरिति धृञ्धातोर्निष्पन्नेन शब्देन योगादस्य नवमस्याह्नो धृत्यै धारणाय भवति । सा चास्यानेनाह्ना सङ्गतिरिति । तदाह त्वमिति । एतत्पदं बृहत्साम्नो रूपम् । तद्योनौ त्वामिद्धि हवामह इति युष्मच्छब्ददर्शनात् । एतदहश्च बार्हतम् । बृहत्साम्नः सम्बन्धि तृतीयम् । बृहत्पृष्ठो हि तृतीयश्छन्दोमः । अतोऽस्मिन्नहनि तृचः सङ्गत इत्यर्थः । अथ तृचान्तरं विधाय सङ्गतिमाह । त्वं ह्यङ्ग दैवेति तृचोऽप्यार्भवस्य स्तोत्रियः । सिद्धमन्यत् । अथापरं तृचं विधाय सङ्गतिमाह । पवस्व देव वीतय इति तृचः । तत्र पवस्वेत्येतद्बृहत्साम्नो रूपम् । सिद्धमन्यत् । अथान्यं तृचं विधत्ते । परि त्यं हर्यतं हरिमिति परिशब्दयुक्तास्तिस्रः स्तोत्रिया भवन्ति । शिष्टं सिद्धप्रायम् । अथाक्षरपङ्क्तिच्छन्दस्कं तृचं विधाय पूर्वयोरह्नोरिव तं प्रशंसति । एतत्सर्वं पूर्वस्मिन्नध्याये व्याख्यातम् । अथापरं तृचं विधत्ते । गोभिर्भङ्गं परिष्कृतमिति गोशब्दो जागतं रूपम् । पशवो वै जगत्य इति श्रुतेः । अत एता गायत्र्यः सत्योऽपि जगत्या रूपेण योगात् जगत्यः । गतमन्यत् । अथैतेषु तृचेषु क्रमेण सामानि विधास्यन्ते । तत्र प्रथमे तृचे गायत्रं प्रथमं साम गातव्यम् । तस्य पूर्वोक्तं ब्राह्मणमतिदिशति । स्पष्टम् । अथैतस्मिन्नेव तृचेऽन्यत्साम विदधाति । आश्वसूक्तं नाम । त्वं सोमासीत्येव तृचे गातव्यम् । तस्य साम्नोऽवसाने शुक आहुत इति पदद्वयं श्रूयते तत्स्तौति । पूर्वैः पूर्वमनुष्ठितैरष्टाभिरहोभिः । अग्निं वै अग्निमेवाजुहोति अग्निमेव जुहोति न सूर्यम् । अधुना तु एतन्नवममहरादित्यदेवत्यमादित्यदेवताकम् । एवञ्चास्मिन्नहनि आश्वसूक्ते शुक आहुत इति श्रूयमाणेनैतेन पदेन तमेवादित्यमभिजुहोति । असौ खल्वादित्यः शुक्रो दीप्तः । सोऽयं शुक आहुत आहुतिभिस्तर्पित इत्यस्यार्थस्य प्रतिभासमानत्वात् । एतद्विशिष्टेनानेन नवमेनाह्नाऽभिजुहोतीति व्यपदेशः । अथैतस्मिन्नेव तृचे सामान्तरं विदधाति । शम्मदा ऋषिणा दृष्टं साम शाम्मदम् । एतदपि त्वं सोमासीत्यस्मिन्नेव तृचे गेयम् । तदेतत्साक्षात्स्वर्गसाधनमिति स्तौति । आङ्गिरसोऽङ्गिरोगोत्रः शंमदर्षिः । एतेन साम्ना सिद्धमन्यत् । अथास्मिन्नेव तृचेऽन्यत्साम विधत्ते । दावसु निधनं यस्य तत्तथोक्तम् । अथैतत्स्तौति । दातव्यं वसु यस्येति दावसुशब्दार्थः । तथा चास्मै यजमानाय धनविषयामाशिषमेतेन दावसुनिधनेन साम्ना आशास्ते कामयते । साम खलु सत्याशीः । ऋचां यजुषां च मध्येऽवितथत्वेन फलप्रतिपादकं सामेत्यर्थः । अथैतत्पशुपोषहेतुत्वेन स्तौति । दावसुर्नामाङ्गिरस ऋषिः पशुकामः संस्तत्साधनत्वेनैतत्साम दृष्टवान् । तेन च साम्ना सहस्रसङ्ख्याकान् पशूनसृजत । अलभत । तथा चैतत्सामास्मिन्दिवसे नवमेऽहनि भवतीति यत् तत् पशूनां पुष्ट्यै पोषाया-

मिथुदर्यं भवति। अथ सामान्तरं विधत्ते। प्रतीचीना इडा यस्य तथाविधं काशीताख्यं साम त्वं सोमासीत्यस्मिन्नेव तृचे गेयम्। अथैतस्य प्रतीचीनेडत्वं पुत्रपश्वादिरूपस्य फलस्य जनिहेतुरिति स्तौति। कालेयगौतमरौरवारिष्टतैरश्चान्धीगवादिषु पूर्वं प्रयुक्तेषु सामसु होइडा इत्येवंरूपाः पराचीना इडास्ताभिरन्याभिः पराचीभिरनिवृत्ताभिः पराग्गताभिर्यजमानो रेतो दधत् पुत्रपश्वादेरुपादानभूतं वीर्यं स्त्रयोनावादधात। अथाधुना प्रयुज्यमानं प्रतीचीनेडं काशीतं प्रजात्यै। पूर्वाहितस्य गर्भस्य प्रजननाय भवति। औहोवा इडा इत्यनेन योगादेतत्साम प्रतीचीनेडम्। यस्मादेवं वेदे प्रतिपाद्यते तस्मादेव कारणाल्लोकेऽपि गर्भाः पुंसा योनौ निषिच्यमानाः पराचः प्राङ्मुखाः सम्भवन्ति। उत्पत्तिसमये प्रत्यञ्चः प्रत्यङ्मुखाः प्रजायन्ते। उत्पद्यन्ते। हि यस्मादेतेन साम्ना ते गर्भा धृताः। तस्मादेव हेतोरवाचीनबिलेभ्यो योनिभ्यो नावपद्यन्ते नाधः पद्यन्ते। अथान्यत्साम विधत्ते। हाविष्कृतम्। हविष्कृता दृष्टं साम। तदपि त्वं सोमासि धारयुरिति तृचे गातव्यम्। तच्च यजमानस्य प्रतिष्ठानाय भवति। स च हविष्कृत्। पुरा हविष्मान्वै हविष्कृच्चाङ्गिरसावास्तामित्यादिना कृतानुवाद उक्तानुवाद एव। तत्र हि नवमेऽहनि हविष्कृद् राध्नोदित्यर्थः प्रतिपादितः। अत एतत्सामसमृद्धिहेतुरित्युक्तं भवति। अथ सामान्तरं विधाय तद्ब्राह्मणं चातिदिशति। सौपर्णाख्यं साम त्वं ह्यङ्ग दैव्येत्यस्मिंस्तृचे गातव्यम्। यज्ञो वै देवेभ्योऽपाकामत्स सुपर्णरूपं कृत्वाऽचरदित्यादिकं सौपर्णस्य ब्राह्मणमानीय तेन स्तोतव्यम्। अथान्यत्साम विधत्ते। विश्वमनसा ऋषिणा दृष्टं साम वैश्वमनसं तत् पवस्व देववीतय इत्यस्मिंस्तृचे गेयम्। अथैतत्साम्नो विश्वमनस्सम्बन्धं पापहननहेतुत्वं च प्रतिपिपादयिषुराख्यायिकामाह। अध्यायमध्ययनमुद्रजितं प्राप्तं विश्वमनसं विश्वमनस्सञ्ज्ञकमृषिं रक्षोऽगृह्णात्। पुरा कश्चिद्राक्षसो गृहीतवान्। तं वृत्तान्तमिन्द्रोऽचाययत्। ध्यानयोगेनाज्ञासीत्। चायृ पूजानिशामनयोरिति धातुः। ऋषिं खलु रक्षोऽग्रहीदिति मनसाजानात्। स इन्द्रस्तमृषिमभ्यवदत्। हे ऋषे कः खल्वेष तव ग्रहीतेति। एवमिन्द्रेण पृष्टे ऋषिं रक्षोऽब्रवीत्। स्थाणुर्मा ग्रहीदितीन्द्राय ब्रूहीति। ततः स ऋषिः स्थाणुर्मा गृहीतवानित्यब्रवीत्। एवमृषिणोक्ते तस्मै राक्षसमेतेन वज्रेण प्रहर जहीति अस्मा ऋषय इषीकां वज्रम्। इषीका तृणविशेषः। तदेव वज्रीकृत्य प्रयच्छन्निन्द्रोऽब्रवीत्। ततस्तेन वज्रेण स ऋषिरस्य सीमानं शिरः कपालमध्यमभिनत्। विदारितवान्। इन्द्रेणता इन्द्रेण निर्मिता सैषेषीका भूमावुपलभ्यते। एवं तस्मिन्रक्षसि हते स एव स्थाणुः पाप्मा वाव स पापरूप एव भूत्वा तं विश्वमनसमगृह्णात्। तं पाप्मानं तेन वैश्वमनसेन साम्नाऽपाहत। व्यनाशयत्। अतोऽद्यतनोऽपि वैश्वमनसेन स्तुवन्यजमानः पाप्मानमपहते। अथान्यस्मिंस्तृचे सामान्तरं विधाय तत्स्तावकं ब्राह्मणं चातिदिशति।

परि त्यं हर्यतं हरिमिति तृचे गौरिवीतं साम गातव्यम्। तस्य च गौरिवीतिर्वा एतच्छाक्त्य इत्यादिकं यद् ब्राह्मणमाम्नातं तदत्रापि अनुसन्धेयम्। अस्मिन्नेव तृचेऽन्यत्साम विधत्ते। वसिष्ठनिहवाख्यं साम परि त्वमिति पूर्वोक्त एव तृचे गेयम्। तथान्नाद्यस्यावरोधनाय भवति। कुत एतदित्याह। अस्मिन् साम्नि ओ ही ही उ ओ ही ईहि या औ २३४ वा हाही इति स्तोभो दृश्यते। लोके च हीशब्देनान्नं प्रदीयते बालानामास्यनिवारणार्थं भोजयितृभिर्ही-शब्दस्य प्रयोगात्। तथैवानुगृहीति हिशब्दमुच्चार्य ततो देवेभ्यो हविर्लक्षणमन्नं प्रदीयते। तथा ई इत्येवंरूपं शब्दं कुर्वन्नग्निरन्नं स्वात्मनि हुतं हविरत्ति। दहति। अत ईहीत्यन्न-प्रदानसम्बद्धयोः शब्दयोः प्रयोगादस्य साम्नोऽन्नहेतुत्वम्। अथैतत्साम प्रकारान्तरेण स्तोतु-माख्यायिकामाह। वसिष्ठाद्या ऋषयः पुरेन्द्रं प्रत्यक्षं नापश्यन्। अपरोक्षेण नाजानन्। तेषामृषीणां मध्ये स प्रसिद्धो वसिष्ठ ऋषिरकामयत कथं केन प्रकारेणोपायेनेन्द्रं प्रत्यक्षं पश्येयं साक्षात्कुर्यामिति। एवं कामयमानः स निहवाख्यं सामापश्यत्। तस्मादेतस्य वसिष्ठ निहव इति सञ्ज्ञा। ततोऽनन्तरमेव स ऋषिरिन्द्रं प्रत्यक्षमपश्यत् साक्षात्कृतवान्। स इन्द्र एनमृषिमब्रवीत्। हे वसिष्ठ ते तुभ्यं ब्राह्मणं वक्ष्यामि अनुष्ठेयार्थप्रतिपादकं वेदभागमुप-देक्ष्यामि यथा येन प्रकारेण त्वत्पुरोहिताः। त्वं पुरोहितो येषां तथाविधाः। भरता एत-त्सञ्ज्ञा राजानः। यद्वा भरता इति मनुष्यनाम। सर्वे मनुष्याः प्रजनयिष्यन्ते उत्पत्स्यन्ते। अथ मदुपदेशानन्तरं मामिन्द्रमन्येभ्यस्त्वद्व्यतिरिक्तेभ्य ऋषिभ्यो मा प्रावोचः। मा ब्रूयाः। इत्येवमुक्त्वा तस्मै वसिष्ठायैतान्पूर्वोक्तान् स्तोभभागान् रश्मिरसीत्याद्यान्स्तोत्रानुमन्त्रणमन्त्रा-नब्रवीत्। उक्तवान्। ततो वै तत एव कारणात्सर्वे भरता वसिष्ठपुरोहिताः प्राजायन्त। वसिष्ठः पुरोहितो येषां ते तथोक्ताः। एवमिन्द्रप्रत्यक्षीकरणं वसिष्ठेन दृष्टत्वादेतन्निहवाख्यं साम सेन्द्रम्। इन्द्रसहितं खलु। स्पष्टमन्यत् ॥५०॥

तारड्यमहाब्राह्मणे तृतीयपञ्चिकायां पञ्चमाध्याये पञ्चमी कण्डिका।

॥ १३ ॥

४·२·१

अथ चत्वारो व्रात्ययज्ञा एकाहास्तेषु षोडशस्तोमं साधारण्येन विधित्सुराह। देवाः पुरास्मिन् लोकेऽवस्थाय यागानुष्ठानेन स्वर्गं लोकं प्राप्नुवन्। तेषां देवानामनुचरा अतएव देवसम्बन्धाद्दैवा जना व्रात्या व्रात्यां नामाचारहीनतां प्राप्य प्रवसन्तः प्रवासं कुर्वन्तो बहिष्कृताः सन्तोऽहीयन्त हीनाः पृथिव्यां परित्यक्ता आसन्। अथ देवेषु स्वर्गं गतेषु ते देवजना आगच्छन् यतो यस्मिन्स्थाने देवाः स्वर्गसाधनं यागमन्वतिष्ठन्। तत्स्थानं प्रति स्वर्गसाधनदिदृक्षया

समागता इत्यर्थः। आगत्य च तं स्वर्गसाधनं स्तोमं नाविन्दन् नालभन्त। तथा छन्दश्च नाविन्दन् नालभन्त। येन स्तोमेन छन्दसा च तान् स्वर्गं गतान् आप्स्यन्। एवमेतै-स्तोमच्छन्दसोरलब्धयोः सतोः स्वर्गलोकस्थिता देवा इमं वृत्तान्तमवगत्य मरुतो मरुत्सञ्ज्ञा-कान्देवानब्रुवन्। कथमिति। एतेभ्यो हीनेभ्यस्तं स्तोमं छन्दश्च यूयं प्रयच्छत येन स्तोमेन छन्दसाऽस्मानाप्नुवन् प्राप्नुयुरिति। एवं देवैरुक्ता मरुतस्तेभ्यो हीनेभ्य एतं षोडशं षोडशस्तोत्रियात्मकं स्तोमं प्रायच्छन् परोक्षं परोक्षेण वर्तमानमप्रत्यक्षमनुष्टुभं छन्दश्च प्रायच्छन्। व्रात्ययज्ञेषु प्रथमस्य चतुर्षु स्तोत्रेषु षोडशः स्तोमः। तथा च चत्वारः षोडशा द्वे अनुष्टुभौ भवतः। एवमनुष्टुभः परोक्षत्वं द्रष्टव्यम्। ततोऽनन्तरं स्तोमच्छन्दोरूपेण साधनेन ते हीनास्तान् देवानाप्नुवन्। एवमेव सर्वोपि व्रात्ययज्ञेषु षोडशः स्तोमः प्रयोक्तव्य इत्युक्तं भवति। परोक्षमनुष्टुभमित्यनेन चतुःषोडशी व्रात्ययज्ञः कार्य इति विधिरुन्ने-तव्यः। चतुर्विधा हि व्रात्याः निन्दिताः कनीयांसो ज्यायांसः एतत्त्रितयव्यतिरिक्ता हीना-चाराश्चेति। तत्र कनीयःप्रभृतीनां व्रात्यानामुत्तरे त्रयो यज्ञाः। त्रितयव्यतिरिक्तानां व्रात्यानामयं प्रथमश्चतुःषोडशी। तदुक्तमापस्तम्बेन चतुष्षोडशी सर्वेषामिति। अथैतत्प्रकृते योजयति। ये पुरुषा व्रात्यां व्रात्यतां विहिताकरणप्रतिषिद्धसेवनरूपां प्राप्य प्रवसन्ति एते हीना निकृष्टाः सन्तो हीयन्ते निकृष्टतमा भवन्ति। तत्कस्य हेतोः। न खल्वेते ब्रह्मचर्यं ब्राह्मणोचितं कर्म चरन्ति ततो हीनाः सम्पन्नाः। यस्माच्च कृषिं वाणिज्यां वणिजः क्रियां क्रयविक्रयादिरूपां च न कुर्वन्ति ततो वैश्यजातेरपि हीनाः। तस्मादेते निकृष्टतमा भवन्ती-त्यर्थः। तथाविधानां तद् यः स्तोमः समाप्तुमर्हति श्रैष्ठ्यं प्रापयितुं योग्यो भवति एष षोडशः स्तोमः। कथमस्येदृशं सामर्थ्यमिति तदाह। एष षोडशः स्तोमो मरुत्स्तोमो वै मरुतां सम्बन्धी स्तोमः। कथमस्य मरुतां सम्बन्ध इति। तदुच्यते। यानि क्षुद्राणि न्यूनाक्षराणि पवस्व मधुमत्तमः परिप्रधन्व अधाहीन्द्र गिर्वण इत्यादीनि छन्दांसि तानि मरुतां सम्बन्धीनि। सप्तसप्तगणात्मना एकोनपञ्चाशत्संख्यया च विभक्तत्वेन तेषामति-क्षुद्रत्वात्। अतः क्षुद्रत्वसाम्यादाह। ककुप्शब्देन वृषभस्य ककुदः स्मारितत्वात् द्विपदेत्यनेन च पादद्वयस्मरणादेतान् व्रात्यान् रूपेणैव स्वावयवैनैव समृद्धान् करोतीत्यर्थः। अथ ब्रह्मसाम्नः स्तोत्रिया विधाय स्तौति। अधाहीन्द्र गिर्वण इत्याद्यास्तिस्रो ब्रह्मसाम्नः स्तोत्रियाः। तासु च विषमं विविधं छन्दो दृश्यते। प्रथमा ककुप्। मध्यमपादस्य द्वाद-शाक्षरत्वात्। द्वितीयोष्णिक्। तृतीयपादस्य द्वादशाक्षरत्वात्। तृतीयायास्तु द्वौ पादौ द्वादशाक्षरौ तृतीयोऽष्टाक्षर इति छन्दोवैषम्यम्। अतो व्रात्यसमुदाये विषम इव वै विविध इव भवति। विविधानाचारयुक्ता व्रात्याः। तथा च विषमछन्दसा तेषां वैषम्यं परिहरन्

सर्वानेवैतान्समान् श्रेष्ठत्वापादनेन समवीयान् करोति। अथ तासु गातव्यं साम विधत्ते। तासु पूर्वोक्तासु अधाहीन्द्र गिर्वण इत्याद्यासु द्युतानेन दृष्टं साम द्यौतानं गातव्यम्। तच्च ब्रह्मसाम भवतीत्यर्थः। तथा च कल्पकारः। अधाहीन्द्र गिर्वण इत्येन्दुमिन्द्राय सिञ्चतेति द्यौतानमारुते इति। अथैतस्य समृद्धिहेतुतामाह। मारुतो मरुतां सम्बन्धी द्युतानः तेषां दैवानां व्रात्यानां गृहपतिरासीत्। बहुयजमानके कर्मणि यूपाञ्जनतुयाज्यावचनादीनि केवलकर्तव्यानि यः करोति स गृहपतिरित्युच्यते। एवं द्युतानं गृहपतिं कृत्वा ते दैवा व्रात्या द्युतानगृहपतय एतेन स्तोमेन षोडशस्तोमकेन यज्ञेनायजन्त। ततस्ते सर्वे आर्ध्नुवन् समृद्धा अभवन्। यदेतद् द्युतानेन दृष्टं साम व्रात्यस्तोमे ब्रह्मसाम भवति। तदेषां समृद्धया एव संपद्यते। अथैतस्य शाखान्तरीयं निधनं निषिध्यास्माभिरधीयमानं निधनमेव कर्तव्यमिति प्रतिपादयन्स्तौति। अत्र सूत्रे शाखान्तरीयं पक्षमुक्त्वा स्वमतमप्युक्तम्। इन्द्रेतिद्यौताने निधनं निराहुस्तस्य प्रतिषेधो यथाम्नायमेवोपेयुरिति। अयमर्थः। निरुक्तमिन्द्रेति निरुक्त-स्यैकदेवताप्रतिपादकं निधनं शाखान्तरीयं यद्यदि उपेयुः प्राप्नुयुः प्रयुञ्जीरन्। तथा च प्रधानभूतस्यैवेन्द्रस्य निरुक्तस्य कथनादेतेषां मध्ये प्रधानभूतो गृहपतिरेव ऋध्नुयात् समृद्धो भवेत्। इतरे त्वपगतर्द्धयो भवेयुः। अथानिरुक्तमनिर्द्धारितदैवतमध्ययनसिद्धम् आ औ हो २३४५ इत्येवंरूपं द्युतानस्य निधनं यद्यदुपयन्ति प्रयुञ्जते तर्हि उद्गाता सर्वानेवैतान् व्रात्यान् ऋद्धौ समृद्धौ भूतावैश्वर्ये च प्रतिष्ठापयति। तस्यानिर्धारितदेवत्वेन सर्वदेवतासाधा-रण्येन सर्वेषां समृद्धिः। अथैतस्मिन्व्रात्ययज्ञे चतुर्षु स्तोत्रेषु षोडशः स्तोमः प्रयोक्तव्य इति तत् प्रशंसितुमाह। एते वक्ष्यमाणा गरगिरो वै गरस्य गरलस्य विषस्य भक्षयितारः। ये व्रात्या ब्रह्माद्यं ब्राह्मणैर्भोज्यं जन्यं जनपदसम्बन्धि अन्नमदन्ति ब्राह्मणार्थं परिकल्पितमन्नं बलात्कारेण भुञ्जत इत्यर्थः। ये चादुरुक्तं वाक्यं शोभनार्थप्रतिपादकं वाक्यं दुरुक्तं दुष्टमाहुः। तथा अदण्ड्यं दण्डानर्हं जनं दण्डेन घ्नन्तो हिंसन्तश्चरन्ति। तथा स्वयमदीक्षिता अकृत-दीक्षाः दीक्षितैः प्रयोज्यां वाचं वदन्ति। एवं ये बहुविधान्विपरीताचारानाचरन्ति। एते विषभक्षकाः। नरकहेतोर्भूयसः पापसञ्चयस्य निष्पद्यमानत्वादित्यर्थः। तस्मादेतेषां व्रात्यानां पाप्मानं पापं निर्हन्तुं निर्दग्धुं षोडशस्तोम एवार्हति। तथा च यदेते चत्वारः षोडशाः षोडशस्तोमा भवन्ति अच्छावाकस्याज्यपृष्ठयोर्माध्यन्दिनार्भवयोश्च पवमानयोस्तेन षोडशस्तोमचतुष्टयेन पाप्मनः सकाशादधि उपरि निर्मुच्यन्ते प्रक्षीणपापाः शुद्धा भवन्ती-त्यर्थः। अथाग्निष्टोमसाम्नः स्तोत्रीयामनूद्य स्तौति। देवो वो द्रविणोदा इत्यस्मिन्प्रगाथे यज्ञायज्ञीयमग्निष्टोमसाम कार्यम्। तथा च देवशब्दस्य श्रूयमाणत्वाद्देवतास्वेवैनान् व्रात्यान् शुद्धान्कृत्वा प्रतिष्ठापयति। अथ शाखान्तरीयं मतमुपन्यस्यति। अथो खल्विति

पक्षान्तरपरिग्रहे। अन्ये ब्रह्मवादिन आहुः। कथयन्ति। किमिति। अदर्शि गातुवित्तम इत्यायास्वेव सतोबृहतीषु प्रग्रथननैरपेक्ष्येण स्वभावत एव बृहतीछन्दस्कासु ऋक्षु अग्निष्टोमसाम कार्यमिति। उपपत्तिंचाहुः। व्रातो व्रात्यसमुदायो विषम इव वै विविधाचारः खलु। तथा च नानाविधान् सर्वानेवैतान्सतोबृहतः स्वभावतो महतः करोति। अथैतन्मतं दूषयित्वा स्वपक्षं निगमयति। तत्तत्र विषये। अन्ये पुनर्ब्रह्मवादिन आहुः। यत्सतोबृहत्याख्यं छन्द एतच्छिथिलमिव वै अदृढमेव। यत एतच्चराचरं सञ्चरणशीलं स्थास्नु न भवति। चरतेः पचाद्यचि चरिचलिपतिपदीनां वा द्वित्वमच्याक् चाभ्यासस्येति वक्तव्यमिति द्विर्वचनमागागमश्च। यस्मादेवं तस्माद्देवो वो द्रविणोदा इत्येतास्वेव कार्यम्। अथैतासुक्तदोषवैलक्षण्यमाह। या बृहती पुनःपदा सकृदाम्नातं पादं पुनरभ्यस्य या बृहती सम्पद्यते एषा पुनःपदा प्रतिष्ठिता बृहती। तत्तथा सति यद्यस्मात्सकृदाम्नातं पदं पादमविस्मारणेन पुनः पुनरारभते तस्मात्कारणात्पुत्रः स्तनन्धयो मातरमध्येति पुनः पुनः स्मरति। इक् स्मरण इति धातुः। द्युतानो मारुतस्तेषां गृहपतिरासीदित्याम्नानाद्गृहपतिप्रमुखा बहवो व्रात्या अनेन यजेरन्निति प्रतीयते। तत्र गृहपतिना संपाद्यानि दक्षिणाद्रव्याणि दर्शयति। उष्णीषं शिरोवेष्टनं वस्त्रम्। अयःशलाकाग्रदण्डः प्रतोदः। येन कर्षकैर्बलीवर्दा निष्पीड्यन्ते। होडतिर्गत्यर्थः। ज्या होदा गता यस्य चापस्य स ज्याहोडः। इषुरहितः केवलो धनुर्दण्ड इत्यर्थः। तदुक्तं सूत्रकारेण। धनुष्केणानिषुणा व्रात्याः प्रसेधमाना यन्ति स ज्याहोड इति। तथा फलकास्तीर्णः फलकाभिरास्तीर्णो विस्तारितो रथः। स च विपथो विविधं कुटिलं पथो गच्छतीति। विविधगामिभ्यामश्वाश्वतराभ्यां युक्तः कार्य इत्यर्थः। कृष्णशं कृष्णदशं कृष्णा दशा यस्य तादृशं वासः। दकारलोपश्छान्दसः। यद्वा लोमशमितिवत् मत्वर्थीयः शप्रत्ययः। कार्ष्ण्ययुक्तमित्यर्थः। वलक्षः शुक्लवर्णः। शुक्लकृष्णवर्णे अजिने आविके चर्मणी पार्श्वतस्तन्तुभिः स्यूते भवत इत्यर्थः। रजतो रजतनिर्मितो निष्कोऽलङ्कारो भूषा। एतान्युष्णीषादीनि द्रव्याणि गृहपतेः स्वभूतानि संपाद्यानि। दक्षिणार्थं गृहपतिना नेतव्यानीत्यर्थः। तदुक्तं सूत्रकारेण एतत्सर्वं गृहपतिराहरेदिति। अतः स्वगुद्रातुरिव तद्गृहपतेः षष्ठ्या निर्दिष्टस्य संप्रदानत्वशङ्का न कार्येत्यर्थः। अथान्यैः सम्पादनीयानि द्रव्याणि दर्शयति। वलूकेति लोहितवर्णस्याख्या। लोहितवर्णोऽन्तो येषां वाससां तानि तथोक्तानि। तूषमिति वस्त्रस्य दशोच्यते। दामतूषाणि रज्जुरूपदशानीत्यर्थः। प्रतिवस्त्रं द्वे द्वे दामनी। उभयोरपि प्रान्तयोरेकैकं दाम रज्जुर्यथा भवति तथा कर्तव्यमित्यर्थः। यथैकैकस्य व्रात्यस्य द्वे द्वे उपानहौ वर्मसदृशे पादाङ्गुष्ठवेष्टने चर्मणी भवत इत्यर्थः। तदुक्तं सूत्रकारेण द्वे द्वे उपानहाविति। कृष्णाः कर्णिन्य इति शाण्डिल्यः। याः काश्चेतिधानजप्य

इति। पूर्ववच्छुक्लकृष्णान्यजिनानि द्विसंहितानि। एकैकस्य द्वे द्वे अजिने शुक्लकृष्णे पूर्ववत् संहिते भवत इत्यर्थः। एतानि द्रव्याणि गृहपतिव्यतिरिक्तैर्व्रात्यैः सम्पाद्यानि। अथैतस्य दानं व्रात्यतानिर्हरणहेतुरित्याह। एतदुष्णीषप्रतोदादिकं द्रव्यजातं खलु व्रात्यस्याविनाभूतं धनम्। अतो यस्मै पुरुषायैतद्धनं ददति प्रयच्छन्ति। तस्मिन्नेव पुरुषे मृजाना व्रात्यत्वादिकं पापं निर्मृज्य शुद्धाः सन्तो गच्छन्ति त्रैविद्यवृत्तिं प्राप्नुवन्ति। अस्य च व्रात्यधनस्य प्रतिग्रहीतृविशेषः सूत्रकारेणोक्तः। व्रात्येभ्यो व्रात्यधनानि ये व्रात्यचर्याया अविरताः स्युर्ब्रह्मबन्धवे वा मागधदेशीयायेति। अथैषां प्रत्येकं त्रयस्त्रिंशत्सङ्ख्या गावोऽपि दक्षिणार्थं सम्पाद्या इत्याह। त्रयस्त्रिंशता त्रयस्त्रिंशत्सङ्ख्याकाभिर्गोभिर्गृहपतिमभिसमायन्ति। समागच्छन्ति। सर्वेषां प्रत्येकं त्रयस्त्रिंशत्सम्पादनार्थं वीप्सा। अतो गृहपतिरपि गवां त्रयस्त्रिंशतं संपादयेदित्यर्थः। इमा गावोऽपि मागधदेशीयेभ्यो व्रात्येभ्यो देयाः। यस्मा एतद्ददति तस्मिन्नेव मृजाना यन्तीति साधारणोक्तेः। कुत एतत् त्रयस्त्रिंशत्सङ्ख्यायाः संपादनमिति। तत्रोच्यते। त्रयस्त्रिंशत्सङ्ख्याकाः खलु देवाः देवसम्बन्धिनो व्रात्याः। आर्ध्नुवन्। अनेन व्रात्यस्तोमेन समृद्धा अभवन्। अतस्तत्सम्बन्धद्वारा ऋद्ध्यै समृद्ध्यर्थमेव त्रयस्त्रिंशता गोभिः समागमनमिति ॥१॥

ताण्ड्यमहाब्राह्मणे चतुर्थपञ्चिकायां द्वितीयाध्याये प्रथमा कण्डिका।

॥ १४ ॥

४.२.२

अथाभिशस्तैर्निन्दितैरनुष्ठेयो व्रात्यस्तोमः प्रस्तूयते। अथानन्तरम् एष वक्ष्यमाणो यज्ञः षट्षोडशी षट्षोडशाः स्तोमा यस्य स तथोक्तः। नृशंसा निन्दिताः। मनुष्यैरभिशंसनेन पापाध्यारोपेण गर्हिताः सन्तो ये पुरुषा व्रात्यां व्रात्यत्वं प्राप्य प्रवसेयुः। त एतेन षट्षोडशिना यजेरन्। षट्षोडशित्वं पाप्मनो निर्हरणहेतुरिति प्रतिपिपादयिषया प्रथममेषां पापसद्भावमाह। अभिपूर्वेण क्रमेण खल्वेते पाप्मना पापेन गृहीता ये नृशंसा निन्दिता अभिशंसनेन गर्हिताः सन्तो व्रात्यां प्रवसन्ति। तथा च षट् स्तोत्राणि षोडशानि षोडशस्तोमानि भवन्ति। तेन षोडशीन पाप्मनोऽधि पापान्निर्मुच्यन्ते। उक्थसंस्थो ह्ययं व्रात्यस्तोमः। तत्र त्रिषु पवमानस्तोत्रेषु अच्छावाकस्याज्यपृष्ठोक्थेषु षट्स्तोत्रेषु षोडशः स्तोमो भवति। तदुक्तं कल्पकारेण षोडशपवमाना अच्छावाकसामानि चेति। अथास्याग्निष्टोमसाम्नः स्तोमं विधाय स्तौति। यज्ञस्योक्थसंस्थत्वादग्निष्टोमसाम्नो यज्ञमध्यत्वम्। सिद्धमन्यत्। तस्या-

स्योक्थसंस्थां विधाय स्तौति। पशवो गवादयो हि नृशंसं नृशंसनैरभि अभिशस्यमानं पुरुषमग्रं श्रैष्ठ्यं परिणयन्ति तत्पालनादिभिः पापं क्षीयते। उक्थस्तोत्राणि च पशुसंस्तुतानि। अतः पशुभिरेवैनान् व्रात्यानग्रं श्रैष्ठ्यं परिणयति प्रापयत्युद्गाता ॥२॥

ताण्ड्यमहाब्राह्मणे चतुर्थपञ्चिकायां द्वितीयाध्याये द्वितीया कण्डिका।

॥ ६५ ॥

४·२·३

अथ वयसा कनीयांसो ये व्रात्यास्तैरनुष्ठेयो यागो विधीयते। अथानन्तरमेष द्विषोडशी षोडशस्तोमके द्वे स्तोत्रे यस्य स तथोक्तः। ये कनिष्ठा युवतमाः सन्तो व्रात्यतां प्राप्य प्रवसेयुः। बहिष्कृताः प्रवासं कुर्युस्त एतेन द्विषोडशिना व्रात्यस्तोमेन यजेरन्। अथैतस्मिंस्त्रिषु पवमानस्तोत्रेषु त्रिवृत्स्तोमः कार्य इति विधित्सुराह। वयसा विहीनाः खलु इमे हीयन्ते पुनराचारतोऽपि हीना भवन्ति। तथा च तेषां हीनत्वपरिहाराय त्रिवृत एव पवमाना भवन्ति। बहिष्पवमानादिषु त्रिषु पवमानस्तोत्रेषु त्रिवृत्स्तोमः कार्य इत्यर्थः। स्तोमानां मध्ये त्रिवृत्स्तोमो मुखं वै मुख्यः प्रथमः। यदेवंविधस्य त्रिवृतः पावमानेषु करणम्। तेन यज्ञस्य मुखतः सवनत्रयप्रारम्भ एव एनान्परिणयति ब्राह्मणत्वं प्रापयति। अथास्याच्छावाकसम्बन्धिनोराज्यपृष्ठस्तोत्रयोः षोडशस्तोमः कार्य इति स्तुतिमुखेन दर्शयति। सिद्धप्रायमेतत्। अथाग्निष्टोमसाम्न एकविंशस्तोमं विधाय स्तौति। अग्निष्टोमसंस्थत्वादेतस्य व्रात्यस्तोमस्याग्निष्टोमसाम्नोऽन्तत्वम् ॥३॥

ताण्ड्यमहाब्राह्मणे चतुर्थपञ्चिकायां द्वितीयाध्याये तृतीया कण्डिका।

॥ ६६ ॥

४·२·४

अथ ये स्थविरा व्रात्यास्तैरनुष्ठेयं व्रात्ययज्ञं दर्शयति। अथानन्तरमेष वक्ष्यमाणो यज्ञः शमनीचमेढ्राणां स्तोमः। शमेन यौवनोपरमेण नीचमनुद्धतं मेढ्रं येषां ते शमनीचमेढ्राः। स्थाविर्याद्विनष्टवीर्या इत्यर्थः। तेषां सम्बन्धी स्तोमः। अतो ये ज्येष्ठा वृद्धतमास्सन्तो व्रात्यतां प्राप्य प्रवसेयुः। त एतेन व्रात्यस्तोमेन यजेरन्। अथास्योर्ध्वस्तोमतां विधत्ते। अस्मिन्यज्ञे त्रिवृदादयः स्तोमा ऊर्ध्वा अभिमुखा उत्तरोत्तरमधिकसङ्ख्याकाः सन्तो यन्ति गच्छन्ति। यागं निर्वर्तयन्ति। अनपभ्रंशाय अनधःपाताय अधिकसङ्ख्याकं स्तोमं कृत्वा यदि न्यूनसङ्ख्याकं स्तोमं प्रयुञ्जीरन्। तदा भवेदधःपातः। नैव-

मूर्ध्वस्तोमत्वमित्यर्थः। तथा चैवं कुर्वाणा यजमाना अग्राच्छ्रैष्ठ्यादग्रं श्रैष्ठ्यं रोहन्ति। आरूढा भवन्ति उत्तरोत्तरमुन्नतं पदं प्राप्नुवन्तीत्यर्थः। एतस्योर्ध्वस्तोमत्वं कल्पकारेण दर्शितम्। द्वे त्रिवृती स्तोत्रे द्वे पञ्चदशसप्तदशे द्वे एकविंशचतुर्विंशे इत्यादिना। एवं च पूर्वस्मात्स्तोत्रादुत्तरमुत्तरं स्तोत्रमधिकस्तोमकं भवतीत्युक्तं भवति। अथैतस्य शमनीचमेढ्राणां स्तोमत्वं दर्शयन्नूर्ध्वस्तोमत्वव्यतिरिक्तेन प्रकारेण स्तोमकल्पने दोषं दर्शयति। एतेन खलु स्तोमेन पुरा शमनीचमेढ्रा अपगतयौवनत्वेन निर्वीर्यप्रजनना देवसम्बन्धिनो व्रात्या अयजन्त। तस्मादेष शमनीचमेढ्राणां स्तोम इत्याख्यायते। तदानीन्तनानां तेषां व्रात्यानां समश्रवसः पुत्रः कुषीतको नाम ऋषिर्गृहपतिर्मुख्य आसीत्। तान्कुषीतकगृहपतिसहितान् लुशाकपिनामा खार्गलिः खर्गलपुत्रोऽनुव्याहरदशपत्। ततस्तेऽवाकीर्यन्त। अवकीर्णिनो भ्रष्टाचारा अभवन्। अनुव्याहरतोऽयमभिप्रायः। एते कुषीतकगृहपतयः कनीयांसावल्पसङ्ख्याकावेव द्वौ स्तोमावुपागुः प्राप्नुवन्निति। पूर्वदर्शितमुत्तरोत्तराधिकसङ्ख्यं स्तोमं परित्यज्य न्यूनसङ्ख्यं स्तोमद्वयं प्रायुञ्जतेति। तस्मादेतस्यायथानुष्ठानायथार्थदर्शिना लुशाकपिना शापः कृत इत्यर्थः। यस्मादेते कुषीतकमुखाः शप्ता आसन् तस्मादेव कारणात् कौषीतकानां कौषीतकशाखाध्येतॄणां कौषीतकिगोत्राणां वा मध्ये कश्चन कोऽपि पुरुषः नातीव जिहीते अतीव श्रेयो न गच्छति। ओहाङ् गताविति धातुः। हि यस्मादेते यज्ञावकीर्णा अन्यथानुष्ठितेन यज्ञेन निमित्तेनावकीर्णा अवकीर्णिनो विभ्रष्टब्रह्मचर्या भवन्ति तस्मादित्यर्थः ॥४॥

ताण्ड्यमहाब्राह्मणे चतुर्थपञ्चिकायां द्वितीयाध्याये चतुर्थी कण्डिका।

॥ १७ ॥

४·२·१४

अथैषां चातुर्मास्यानां निरतिशयफलसाधनत्वं वक्तुमग्निहोत्रादिकर्मणां सातिशयफलत्वमाह। अथा खण्डसमाप्तेः पाठो ज्ञातव्यः। यदा यस्मिन् कालेऽग्निहोत्रं जुहोति। अग्निहोत्रहोमं करोति। अथानन्तरं दशगृहमेधिनो गार्हस्थ्यकर्मानुष्ठायिनो ये ब्राह्मणास्तैर्दशसङ्ख्याकैर्यत्सुकृतमुपार्ज्यते। तदेकया रात्र्या एकस्मिन्दिनेऽनुष्ठितेनाग्निहोत्रेण प्राप्नोति लभते। यदा दशसंवत्सरपर्यन्तमग्निहोत्रं जुहोति। अथानन्तरं दर्शपूर्णमासयाजिनं सकृद्दर्शपूर्णमासाभ्यामिष्टवतो यत्फलं तत्प्राप्नोति। यदा दशसंवत्सरपर्यन्तं दर्शपूर्णमासाभ्यां यजते अथानन्तरमग्निष्टोमयाजिनः अग्निष्टोमेन सोमयागेन सकृदिष्टवतो यत्फलं तत्प्राप्नोति। यदा खलु दशसङ्ख्यैरग्निष्टोमैर्यजतेऽथानन्तरं सहस्रयाजिनं सहस्रदक्षिणक्रतुनेष्टवन्तं यजमानमाप्नोति। यदि खलु दशसङ्ख्याकैः सहस्रदक्षिणैर्यजतेऽथानन्तरमयुतयाजिनमयुतदक्षिणेन

पौण्डरीकादिनेष्टवन्तं यजमानमाप्नोति। यदा पुनर्दशभिर्दशसङ्ख्याकैरयुतदक्षिणैर्यजतेऽथानन्तरं प्रयुतयाजिनमाप्नोति। दशगुणितमयुतं प्रयुतम्। एवं नियुतार्बुदादिषु उत्तरोत्तरं दशगुणिता सङ्ख्या द्रष्टव्या। यदा दशभिः प्रयुतदक्षिणैः क्रतुभिर्यजतेऽथ नियुतदक्षिणेनेष्टवन्तं प्राप्नोति। यदा खलु दशसङ्ख्याकैर्नियुतदक्षिणैर्यजतेऽथानन्तरमर्बुददक्षिणेनेष्टवतः फलमाप्नोति। यदा खलु दशसङ्ख्याकैरर्बुददक्षिणैर्यजतेऽथानन्तरं न्यर्बुदयाजिनं न्यर्बुददक्षिणेनेष्टवन्तमाप्नोति। यदा पुनर्दशसङ्ख्याकैर्न्यर्बुददक्षिणैर्यजतेऽथानन्तरं निखर्वकयाजिनं निखर्वकदक्षिणेनेष्टवन्तं यजमानमाप्नोति। यदा खलु दशभिर्निखर्वकसंख्यदक्षिणैर्यजतेऽथानन्तरं बद्वयाजिनं बद्वसङ्ख्याकदक्षिणेन यागेनेष्टवन्तमाप्नोति। यदा दशभिर्बद्वसङ्ख्याकदक्षिणैर्यजतेऽथानन्तरं सोऽक्षितयाजिनम्। न क्षिता क्षीणा सर्वेभ्योऽधिका सङ्ख्या यस्याः परं सङ्ख्यान्तरं नास्ति अक्षितशब्देन सा सङ्ख्योच्यते। अक्षितदक्षिणेन यज्ञेनेष्टवन्तं यजमानमाप्नोति। तादृशैर्दशसङ्ख्याकैरक्षितदक्षिणैर्यजतेऽथानन्तरं स यजमानो गौरादित्यो भवति। गमयति रसानागच्छत्यन्तरिक्ष इति वा गोशब्दस्युत्पत्तिः। यदा चायं गौर्भवति। अथानन्तरमग्न्यात्मको भवति। यदा चाग्निर्भवति। अथानन्तरं संवत्सरसत्रस्य गृहपतित्वमाप्नोति। अग्निना वै तेन गृहपतिरेव भूयादिति हि ब्राह्मणान्तरम्। एवमग्निहोत्रादिकर्मणामुत्तरोत्तरं सातिशयफलसाधनत्वमुक्तम्। अथ प्रकृतानां वैश्वदेवादीनामक्षयफलसाधनत्वमाह। यदा यस्मिन्काले उक्तप्रकारेण संवत्सरसत्रस्य गृहपतिर्भवति। अथानन्तरं वैश्वदेवस्य चातुर्मास्येषु प्रथमपर्वणो मात्रामेकदेशसदृशमाप्नोति। संवत्सरसत्रमपि वैश्वदेवफलस्यैकदेशसमं भवतीत्यर्थः। तस्मान्निरतिशयं वैश्वदेवस्य फलम्। इतरे सर्वे वरुणप्रघासादयः। अतोऽस्माद्वैश्वदेवात्परस्परां परस्परामेवोत्तरोत्तरं निरतिशयफलमित्यर्थः। वैश्वदेवाद् वरुणप्रघासोऽधिकफलः। ततोऽप्यधिकफलः साकमेधः। ततोऽप्यधिकफलः शुनासीर्यः। अमुमर्थं द्योतयितुं परस्परां परस्परामिति वीप्सा। एवं चातुर्मास्यानामक्षय्यफलत्वमुक्तम्। अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीति। अर्थतद्वेदितुः फलमाह। एवमुक्तं ब्राह्मणार्थं यो वेद जानाति स एतानग्निहोत्रादिफलत्वेनोक्तानिमान् लोकान् प्राप्नोति। प्राप्य च तान्सर्वान् लोकान् जयति स्वायत्तान् करोति ॥१४॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये सामवेदार्थप्रकाशे ताण्ड्यमहाब्राह्मणे चतुर्थपञ्चिकायां द्वितीयाध्याये चतुर्दशी कण्डिका ॥

# ६ । षड्विंशब्राह्मणभाष्यम्

॥ १ ॥

१.७

अर्थवादपुरस्सरं सौम्यं चरुं विधत्ते घ्नन्तीव वा इति । राजानं दीप्यमानम् । ओषध्यधिपतिं वा सोमं घ्नन्तीव हिंसन्तीव स च सोमस्तेन प्रमीयत इव भवति यद्यस्मादेवं सोमं तदभिषुण्वन्तीति तस्याभिषुतस्य मृतप्रायस्य सोमस्यैतां प्रसिद्धामनुस्तरणीं गां कुर्वन्तीति यद्यस्मात्सौम्यं सोमदेवत्यं चरुं निर्वपन्ति तस्मादत एव लोके पुरुषाय सर्वस्मै मृतायानुस्तरणी क्रियते वैतरणीनद्युत्तारिका योदीर्यते । अतः सोमाभिषवनिमित्तं सौम्यं चरुं निर्वपेदित्यर्थः । तथा चाध्वर्युशाखायामाम्नायते घ्नन्तीव वा तं सोमं यदभिषुण्वन्ति यत्सौम्यो भवति यथा मृतायानुस्तरणीं घ्नन्ति तादृगेव तदुत्तरार्द्धे मध्ये वा जुहुयाद्देवाभ्यां समं दद्याद्दक्षिणार्धे जुहोतीत्यादि । हुतशिष्टे पात्रस्थिते सौम्ये चरावाज्यं पूरयित्वोदवेक्षणमर्थवादेन विधत्ते साध्यानामिति । पुरा समं बहुकर्तृकं द्वादशादि बहुदिनसाध्यं यागमासीनानामनुतिष्ठतां साध्यानामेतन्नामकानां देवानामक्षसु चक्षुःषु शर्करा सिकता जज्ञिरे ते देवा इन्द्रमुपनिषेदुरुपागमन् । गत्वा चैवमवोचन् तेषां सत्रमासीनानामस्माकं चक्षुःषु शर्करा कथं जायेरन् । हे इन्द्र चक्षुःषु उत्पन्नाः शर्करा विद्या जानीष्व । इत्येवं पृष्टवांस्तत्परिहाराय तेभ्यो देवेभ्यः सौम्ये चरावेतत्प्रसिद्धं श्यावम् आज्यं प्रायच्छत् । ततस्तदाज्यमवेक्षन्ते । तदवेक्षणेन ते देवाः प्रापश्यन् तेषां चक्षूंष्यपगतशर्कराण्यभूवन्नित्यर्थः । कश्चित्पुमानेवंविद्वाजानन्सौम्यचर्वाज्यमवेक्षते सोऽपि शर्करादोषरहितो भवतीत्यर्थः । अत्र विशेषो बह्वृचब्राह्मणे श्रूयते प्रतिगृह्य सौम्यं होता पूर्वं छन्दोगेभ्योऽवेक्षेत तद्धैके पूर्वं छन्दोगेभ्यो हरन्ति तत्तथा न कुर्यात् वषट्कर्ता प्रथमः सर्वभक्षान्भक्षयतीति ह स्माह तेनैव रूपेण तस्माद्वषट्कर्तैव पूर्वमवेक्षेताथैनच्छन्दोगेभ्यो हरन्तीति । प्रशंसापूर्वकं सेतिकर्तव्यताकं सौम्यचरुप्राशनं विधत्ते योऽलमन्नाद्यायेति । यः पुमानन्नाद्यायान्नादिभक्षणायालं समर्थः सन्नपि । अथशब्दोऽप्यर्थे । अन्नं नाद्याद्बालिशशीलत्वात् स पुमान् सदसि दक्षिणार्धे द्विजातिगम्यत्वादेव होमविशेषहुतशिष्टं सौम्यं चरुं प्राश्नीयात् उद्गाता । तस्माद्भक्षणादन्नाद्यं तं जनं कामति प्राप्नोति यो जनोऽन्नाद्याय समर्थः सन्नन्नं नात्ति । किञ्चास्मात्प्राशनात्पितरोऽपि तृप्ता भवन्तीति शेषः । अतो जन्येन जनहितेनान्नेन भक्षणात्सोऽप्येनेनैवान्नमत्तीत्यर्थः । न केवलमिह लोके किंतु परत्रापि अन्नादो भवतीति ॥७॥

षड्विंशब्राह्मणभाष्ये प्रथमाध्याये सप्तमः खण्डः ।

॥ २ ॥

२·१

अथाग्निमे बहिष्पवमानधर्माः कथ्यन्ते। तत्र तावदुपास्मै गायता नर इत्येतामाद्यामृचं साम्ना प्रच्छन्नां गायेदिति प्रशंसापूर्वकं विधत्ते प्रजापतिरकामयतेति। प्रजापतिर्विधाता पुरैवमकामयत बहुः स्यां स्थावरजङ्गमत्वेन नानाविधोऽहं भवेयमिति तस्यैव विवरणं प्रजायेयेति। स एवं कामयित्वा रेतस्यामेतामुपास्मै गायता नर इत्येतामृचं साम्ना प्रच्छन्नां व्याप्ताम-गायत् यदि ऋचमसाम्नीं सामरहितामगास्यत् तर्ह्यस्थि मांसरहितमजनिष्यत। यद्यदि सामानृचमगास्यत्तर्हि अनस्थिकमस्थिरहितं मांसमजनिष्यत। तस्मादृचं साम्ना प्रच्छन्नां गायति। गायेदित्यर्थः। यस्मादेवं तस्माल्लोकेऽपि पुरुषो मांसेन त्वचा लोम्ना च प्रच्छन्नः सञ्जायते इति। रेतस्यायास्त्रिर्ग्रहणं विधत्ते त्रिरुद्गृह्णातीति। पवमानायेन्दवे इत्यत्र पकारवकारवेकारेषु त्रिषु अक्षरेषु प्रत्येकं प्लुतं कुर्यादित्यर्थः। तथा च ब्राह्मणं रेतस्यायास्त्रि-रुद्गृह्णातीति। पा३वा३मानायेन्दवा३ इति। तत्प्रशंसति। त्रय इमे लोका इति। इमे प्रसिद्धाः पृथिव्यन्तरिक्षद्युलोकास्त्रयः। एषां लोकानामवरुद्धयै प्राप्त्यर्थं त्रिरुद्गृह्णीयात्। यत एव च त्रिभ्यो रेतः सिच्यते। तत्रत्यं हिंकारं निषेधति न हिङ्कुर्यात् इति। हिङ्कार-निन्दया तद्वर्जनं प्रशंसति वज्रो वा इति। निगदसिद्धमेतत्। नियमान्तरमाह रेतस्येति। रेतस्या प्रथमा ऋक् छन्दसा गायत्री देवतया प्राजापत्या। प्रजापतिना गीतत्वात्। इत्येवं सर्वं ध्यायन्नेतया रेतस्यया गायेत्। हि यस्मादिदं सर्वं रेतः। तथा च श्रूयते प्रजापते रेतो देवा देवानां रेतो वर्षो वर्षस्य रेत ओषधय इत्यादि। रेतस्यायाः सेतिकर्तव्यताकं गानं विधायेदानीं द्वितीयायामभि ते मधुना पय इत्येतस्यां गानं विधत्ते द्वितीयां गायतीति। द्वितीयां गायेदित्यर्थः। तत्र विशेषमाह तस्या इति। तस्यामृचि द्वे अक्षरे सशयनी व्यतिषजति व्यतिषिक्ते कुर्यात्। ते के अक्षरे इत्यत उक्तं मध्यमस्येति। मध्यमस्य पादस्याथर्वाणो अशिश्रयुरित्यस्य पादस्योत्तममन्त्यमक्षरमुत्तमस्य देवं देवाय देवयुमित्यस्य प्रथममक्षरम्। तथा च द्राह्यायणो गाने व्यतिषङ्गं दर्शितवान् अथर्वाणो अशिश्रादे३ पूर्वं देवायेति। एतत्प्रशंसति व्यतिषक्ताविति। स्पष्टोऽर्थः। गाने नियमं दर्शयति। गायत्री छन्दसेति। छन्दसा गायत्री देवतयाग्नेयी। अन्याधिष्ठानरूपां पृथिवीं ध्यायन्नेतया गायेदिति। अथ स नः पवस्व शं गव इति तृतीयायां गानं विधत्ते तृतीयां गायतीति। गाने विशेषमाह। तां बलवदिवोरसेव गायतीति। बलवदिव बलयुक्तमिव। उरसेवोरःस्थानेनेवोद्गायेदित्यर्थः। विशेषमाह तस्या इति। तस्या ऋच उत्तमार्द्धे द्वे अक्षरे द्योतयति। ब्राह्मणं भवति ये

ऊर्ध्वं हिङ्कारात्ते निर्ब्रूयादिति । गौतमः पाथा इति धानञ्जय्य इति । हिंकारादूर्ध्वं यदक्षर-द्वयं निरुक्तं गेयमिति गौतमस्य मतं हिङ्कारात्पूर्वं पाथा इत्यक्षरद्वयं निरुक्तं गेयमिति धानञ्ज-य्यस्य मतम् । तत्प्रशंसति चक्षुरिति । तत्तेनाक्षरद्वयद्योतनेन चक्षुरेव प्राणत्वेन युनक्ति । तस्मात्तत एव चक्षुर्युक्तं संबद्धमेव भवति । अत्रापि गाने नियममाह । त्रिष्टुपछन्दसेति । पूर्ववद्व्याख्येयम् । अथ दविद्युतत्या रुचेत्यस्यां गानं विधत्ते । चतुर्थीं गायतीति । अत्र विशेषमाह । तस्याश्चत्वारीति । विरम्य गायेदित्यर्थः । तत्र स्तौति द्वादशाक्षरपदेति । तदेतदनूद्य मतभेदेन व्याचष्टे सूत्रकारः । तस्याश्चत्वार्युत्तमार्दे अक्षराणि द्योतयतीति । ब्राह्मणं भवति द्वे पुरस्ताद्धिङ्कारात्तथोपरिष्टादिति । गौतमः सोमाः शुक्रा इति धानञ्जय्य इति । स्पष्टोऽर्थः । तत् प्रशंसति श्रोत्रमेवेति । तत्तेनाक्षरचतुष्टयद्योतनेन श्रोत्रमेव प्राणत्वेन युनक्ति । तस्मात्तत एव श्रोत्रत्वं युक्तम् । चतुष्ट्वसङ्ख्यायाः । कथं द्वे श्रोत्रे उपाधिभेदेन यथा तथा प्रति-श्रवणं प्रतिध्वनि द्वे इत्येवमतः । तस्मात्पुरुषः सर्वा दिशः शृणोति । सर्वासु दिक्षु वर्तमाना-ञ्छब्दाञ्छृणोतीत्यर्थः । तस्यैव विवरणं पराङिति । पराङ् यन् गच्छन् प्रत्यङ् यन्नपि सर्वतः शृणोति । गाने नियममाह जगती छन्दसेति । हिन्वानो हेतृभिरित्यस्यां गानं विधत्ते पञ्चमीमिति । वचनाचतुरवनर्दी पञ्चमो कार्या । हिङ्कारादूर्ध्वमेकस्त्रयः पूर्वेऽवनर्दाः । तत्र पूर्वेषु त्रिष्वप्यवनर्देष्वन्त्यमक्षरं निनर्देदित्यर्थः । तत्प्रशंसति । आह बहुतमादिति । य एवं निनर्दं गायति स बहुतमात्पुरुषाद्बहुसन्ततिपर्यन्तमन्नमत्तीत्यर्थः । किञ्च य एवं वेद सोऽप्यन्नादो भवति । तत्रैव विशेषमाह निरुक्ताञ्चेति । तामृचं निरुक्तामनिरुक्तां च गायेत् । अयमर्थः । तस्यां चत्वारो गीयन्तेऽवनर्दास्तान्निनर्दयन्क्रमेण निरुक्तमनिरुक्तमिव व्यत्यासं गायेत् इति । तथा च द्राह्यायणः । तस्या द्वितीयं पादं निब्रूयात्तृतीये चाक्षरे पञ्चमषष्ठे इति । अस्यार्थः । अस्या द्वितीयं पादं निरुक्तं गायेत् । तृतीये पादे प्रथमं चतुरक्षरमनिरुक्तम् । पुनः पञ्चमषष्ठे निरुक्ते गायेत् । हिङ्कारादूर्ध्वं पुनरप्यनिरुक्तमित्येवं व्यत्यासमिति । तत्प्रशंसति निरुक्तेन वा इति । अस्यामृचि निरुक्तत्वेन अत्रत्योक्तं वाक्या-लम्बनं भजते । किञ्च अस्या अनिरुक्तं सत्कार्यमुपजीवन्ति । यश्चैवं वेद सोऽपि वाचं भुङ्क्ते एनामुपजीवति च । अत्र नियममाह अनुष्टुपछन्दसेति । एषा छन्दसाऽनुष्टुप् । भूतभवि-ष्यद्वर्तमानस्य पादचतुष्टमिति चतुष्ट्वसाम्यादेवानुष्टुप्त्वम् । देवतया प्राजापत्या । स चैवं ध्यायन्गायेत् । हि यस्मादिदं जगत्प्राजापत्यं प्रजापतिसम्बन्धीति । अथ त्र्यधक् सोम स्वस्तय इत्यस्यां गानं विधत्ते षष्ठीं गायतीति । अत्र विशेषं दर्शयति । तस्या द्वे द्वे अक्षरे षडक्षरपर्यन्तमुदासं गायेत् । तदेव मतभेदेन दर्शितवान्सूत्रकारः । सञ्जग्मानो दायि वा कावाउ इति धानंजय्यः का वा इति इति शाण्डिल्य इति । षडक्षरसंख्यां गायति । तत्प्र-

शंसति षड्वा ऋतव इति। षट्स्वेव वसन्तादिषु सर्वं प्रतितिष्ठति। रूपेण विभिन्नस्य कालस्य सर्वोत्पत्तिमन्निमित्तकारणत्वात्। अत्रापि नियममाह। पङ्क्तिच्छन्दसेति। पूर्ववद्व्याख्येयम्। एवं सर्वास्वृक्षु गानं विधाय किञ्चित्तदनूद्य फलदर्शनेन स्तौति। इहैव च वा इति। गायत्रीछन्दोयुक्ते प्रातःसवने त्रिष्टुभं तृतीयामृचं गायति जगतीं चतुर्थीं गायति अनुष्टुभं पञ्चमीं गायति षष्ठीं पङ्क्तिं गायति। एवं सोमम्। इहैव चकारात्परत्रापि। विरुक्तिरादरार्था। मनसा गच्छति। सङ्कल्पेनाभीष्टानि प्राप्नोतीत्यर्थः। गायत्रे गानं दर्शयति। गायत्रं द्वे गायतीति। तत्फलं दर्शयति प्राणमेवेति। तत्तेन द्वयोर्गानेन प्राणमेवाप्नोति। हि यस्माद्गायत्रः पन्थाः। क्लृप्तत्वात्। बहिष्पवमानेऽपि विशेषान्तरं विधत्ते रथन्तरेति। उत्तरामृचं रथन्तरवर्णान्तां गायेत्। अत्र विशेषमाह द्राह्यायणः। तस्या ऊर्ध्वं प्रस्तावाच्चत्वार्यक्षराण्यभिष्टोभेदिति। तस्यायमर्थः। तस्या रथन्तरवर्णोत्तमायाः प्रस्तावादूर्ध्वमुद्गीथस्यादितश्चतुरक्षरं रथन्तरवद्धकारैरभिष्टोभेत्। इति। तत्प्रशंसति। इयं वा इति। इयमेकं रथन्तरं तद्धर्मकत्वात्। किञ्चास्यामेवर्चि सामनि च प्रतितिष्ठतीति। यद्वा अस्यां गीयमानायामेव यजमानः प्रतितिष्ठतीति। प्रतिष्ठा यज्ञफलं भवेदिति ॥१॥

षड्विंशब्राह्मणभाष्ये द्वितीयाध्याये प्रथमः खण्डः।

॥ २ ॥

२·२

अथैतास्वृक्षु विधास्यमानेन बहिष्पवमानसाम्नानुलोम्यं विधत्ते। ता वा एता इति। समर्था भवन्ति। यथैताः पराच्य आनुलोम्येन गीयन्त इत्यर्थः। आज्यस्तोत्रेषु तासां प्रातिलोम्यं विधत्ते प्रतीच्य इति। येन प्रतीच्यः पराङ्मुखाः प्रातिलोम्ययुता भवन्ति तेन मनुष्यलोकाय युज्यन्ते। देवलोकापेक्षया मनुष्यलोकस्य प्रत्यग्भूतत्वात्। प्रशंसापूर्वं धूर्गानं विधत्ते। एष वाव जात इति। तस्य बहिष्पवमानस्य सम्बन्धिन्यो धुरो येन गीयन्ते। गायत्री गीतेरेव केवला विकारा धुरः। तद्योगादन्योऽपि धुर इत्युच्यन्ते। एष वावायमेव जातो जन्मफलवान्। एष वावावलुप्तजरायुः। जरायुर्गर्भवेष्टनं तद्रहितः। अज्ञानरहित इत्यर्थः। एत एवार्त्विजीनाः ऋत्विक्कर्मार्हाः। य एवं विद्वान् जानन्धुरो गायति। तं जातमेवैनमन्नाद्याय परिगृह्णन्त्येवमुद्गातारमप्यन्नभक्षणसमर्थं करोतीत्यर्थः। किञ्चोभावप्रमत्तः उद्गाता च यजमानश्चोभावप्रमत्तः। तत्र प्रथमगाने विशेषमाह या प्रथमेति। तत्र या प्रथमा भूस्तामन्नाद्यं भूयादिति ध्यायन्गायेत्। तत्प्रशंसति। रेतस इति। तत्तेन ध्यानपूर्वकेण गानेन ऋक्षुः सिक्ताय। सेकाच्चैव प्रजोत्पत्तिमेवेत्यर्थः। अन्नाद्यं प्रतिदधाति।

धारयतीति । तत्रत्यं हिंकारं प्रतिषेधति न हिङ्कुर्यादिति । हिङ्कारनिन्दया तद्वर्जनं प्रशंसति । यद्धिङ्कुर्यात् इति । व्याख्यातमेतत् । तस्याच्छन्दोरेतस्या दर्शयति । रेतस्या इति । छन्दोरेतस्या प्रथमा गायत्री युज्यते मनश्च प्रजापतिना प्राणत्वेन धीयते । अथ द्वितीयस्यामृचि गाने विशेषमाह । या द्वितीयेति । या द्वितीया तां गायत्रीभागां गायन्नु-द्गाता तस्या ऋचो द्वे अक्षरे सशयनी व्यतिषजति कथं मध्यमस्योत्तममक्षरमुत्तमस्य पदस्याद्यमक्षरमित्युक्तम् । अस्या मध्यमः पादोऽथर्वाणो अशिश्रयुः । देवं देवाय देवयुविति पाद उत्तमः । अन्यत्पूर्ववत् । या तृतीया तामिति । या तृतीया तां त्रिष्टुभं गायंस्तस्या अन्तिमार्द्धर्चे हिङ्कारादूर्ध्वं पूर्वं वा द्वे अक्षरे द्योतयति । निरुक्तं गायेदित्यर्थः । स्पष्टमन्यत् । चतुर्थ्यां विशेषं दर्शयति । या चतुर्थी तां जगतीभागां गायंस्तस्याश्चत्वा-र्युत्तमार्द्धेऽक्षराणि द्योतयति । श्रोत्रमेव तद्युनक्ति । जगतीं गायंस्तस्या उत्तमार्द्धे चत्वा-र्यक्षराणि हिङ्कारात्पूर्वं द्वे उपरिष्टाद्द्वे इति चत्वारि सोमाः शुक्रा इति वा चत्वार्यक्षराणि द्योतयति । अन्यथाख्यातं पूर्वखण्डे । अभिहितस्यार्थस्यानभिधाने न पुनरुक्तिदोषः । विशेषान्तरविधानायानूद्यमानत्वात् । पञ्चम्यां विशेषमाह । या पञ्चमी तामिति । या पञ्चमी तां गायंश्चतुर्द्धा व्यावृत्य चतुरवनर्दां कृत्वा गायेत् । यत एव लोके इदं प्रसिद्धं पुरुषश्चतुर्धा पादमध्यहस्तशिरोरूपैश्चतुर्भिर्भागैर्विकृतः सन्वीर्याय जायते समर्थो भवति । तत एवैनामनुष्टुभमृचं चतुर्धा व्यावृत्य वीर्याय वीर्यार्थमेव गायति । क्ष्विरोवाव-चामिवैतामृचमंशभेदेन निरुक्तामनिरुक्तामिव गायेत् । हि यस्माद्वागुच्चावचेव व्यवहाराय भवति । अपि च सङ्क्ष्णुत्येव गायेत् । क्ष्णु तेजने । तन्निमित्तमेव गायेत् । हि यस्मात्पुरुषो लोके सङ्क्ष्णुत्येव विस्पष्टमेव यथा भवति तथा वाचं वदति । क्वचिदनुष्टुप् छन्दो युज्यते । वाक् प्राणत्वेन धीयते । प्रजापतिनेति शेषः । अथ षष्ठ्या विशेषं दर्शयति । या षष्ठी तामिति । अत्र पङ्क्तिश्छन्दो युज्यते । एषा ऋक् छन्दः पङ्क्तिः । सा ज्ञेयेत्यर्थः । समानोदानौ प्राणत्वेन धीयेते । शिष्टं व्याख्यातम् । अथ बहिष्पवमान-धुरो विधानानि कथ्यन्ते सदिति । सदिति प्रथमाया धुरस्सदिति निधनं कुर्यात् । हि यस्माद्रेतसोऽपि हि सशब्दः । अधिशब्दः सप्तम्यर्थद्योतनार्थः । रेतसि सद्वेग शायते । द्वितीयाया निधनं दर्शयति समिति । समिति निधनं द्वितीयायाः कुर्यात् । यद्यस्माद्रेतसो विश्वस्य सम्भव इत्यर्थः । तृतीयाया निधनं दर्शयति स्वरिति । स्वरिति तृतीयाया निधनं कुर्यात् । तेन स्वर्गं लोकं प्रजानाति । चतुर्थ्या निधनमाह । इडेति । इडेति चतुर्थ्या निधनं कुर्यात् । पशवः खल्विडा । भोग्यत्वात् । तेन पशुष्वेव प्रतितिष्ठति । पशुमान्भवतीत्यर्थः । पञ्चम्या निधनं विधत्ते । वागिति । पञ्चम्या ऋचो वागिति

निधनं कुर्यात्। तेनास्मिन्निधनस्य कर्तरि सर्वाः प्रजाः पुण्याः स्वाभिरूपा वाचो वदन्ति। यथोक्तवेदितारं प्रशंसति। य एवं वेदेति। यः पुमानेवं निधनानि वेद सोऽपि यथोक्तफलं लभत इति शेषः। अथ तास्वेव धर्मान्तराणि कथ्यन्ते। तत्र प्रथमायां तद्विशेषमाह। या प्रथमा तामिति। प्रथमामायच्छन्प्लुतोच्चारणेन विधारयन्निव गायेत्। हि यस्मादयं प्रसिद्धोऽवाङ् प्राण आयत इव भवति। द्वितीयायां धर्मान्तरं विधत्ते। या तृतीया तामिति। घोषिणीं घोषवतीमिव गायेत्। स्पष्टमन्यत्। तृतीयायां धर्मान्तरं विधत्ते। या तृतीया तामिति। उद्गच्छन्निवोर्ध्वं गमयतीव। व्याख्यातप्रायमन्यत्। चतुर्थ्यां धर्मान्तरमाह। या चतुर्थी तामिति। व्याख्याततरमेतत्। पञ्चम्यां धर्मान्तरमाह। या पञ्चमी तामिति अंशभेदेन क्वचिन्निरुक्तं क्वचिदनिरुक्तमिव गायेत्। यस्मादयं समानः प्राणो निरुक्तानिरुक्तः क्वचित्स्पष्टः क्वचिदस्पष्ट इव शरीरे वर्तते। षष्ठ्यां धर्मान्तरमाह या षष्ठी तामिति। उत्तमामृचं रथन्तरवर्णां रथन्तरस्येव वर्तमानचतुष्टयोपेतामित्यर्थः। एतत्सर्वं व्याख्यातम् इति। नात्र पुनरुक्तिः शङ्कनीया। पूर्वखण्डविवरणरूपत्वादस्य खण्डस्येति ॥२॥

षड्विंशब्राह्मणभाष्ये द्वितीयाध्याये द्वितीयः खण्डः।

॥ ४ ॥

२·३

आख्यायिकया धुरः प्रशंसितुमुपक्रमते। देवाश्च वा असुराश्चेति। पुरा देवाश्चासुराश्चेषु पृथिव्यादिलोकेषु विषयेष्वस्पर्धन्त। तत्र तैरसुरैः स्पर्धमाना इन्द्रादयो देवाः प्रजापतिमुपाधावन्। ततः किमित्यत आह। तेभ्य एतानिति। स प्रजापतिस्तेभ्य एतान्वक्ष्यमाणान्धुरो धुरात्मकान्प्रायच्छत्। तद्विशिनष्टि। प्रथमं मनोऽथानन्तरं प्राणस्ततश्चक्षुरथ श्रोत्रमथ वाचमिति। ततोऽपि किमित्यत्राह। ताभ्य इति। ताभ्यो मनआदिरूपाभ्यो धूर्भ्यः पुरुषं पशूंश्च निरमिमीतोत्पादितवान्। अस्त्वेवं किं तत इत्यत्राह। तेन पुरुषेणेति। तेन धूर्भ्यो निर्मितेन पुरुषेण देवा असुरानधूर्वन्नवधिषुर्यस्मादधूर्वन्नतो धुरां धूस्त्वमभूत्। एवमुक्तरीत्या धुरः स्वरूपं वेद भ्रातृव्यं शत्रुरूपं पाप्मानं धूर्वति हिनस्ति इति। पुनरपि प्रकारान्तरेण धुरः प्रशंसति। यो वै धुरामिति। यः खलु धुरां यथोक्तं धूस्त्वं वेद स भ्रातृव्याच्छत्रोः सकाशादाहृतया धुराऽनेकधनभारैर्वसीयानतिशयेन वसुमान् भवति। किञ्च धूर्षु महाव्रतवेदने पुण्यकीर्तिलाभो भवति। स्पष्टमन्यत् ॥३॥

षड्विंशब्राह्मणभाष्ये द्वितीयाध्याये तृतीयः खण्डः।

॥ ५ ॥

२·५

प्राञ्चमग्निमिति । यस्मादग्नेरुन्नेतारः शालामुखीयादुत्तरवेद्यां प्रति प्राञ्चमग्निमुन्नयन्ति यस्माद्धोता प्राङासीनः प्राङ्मुख उपविष्टोऽन्वाह । अनुब्रूहीति तं प्रैषमनुवचनं च कुर्यात् । तथा प्राङासीनो यजति याज्यां पठेत् । प्राङासीनः शंसति शंसनं पठति । धर्मान्तरमाह । असावादित्य इति । धर्मान्तरं दर्शयति । अथैष चन्द्रमा इति । अथशब्दोऽवयवोपक्रमे । यत एवं चन्द्रमा दक्षिणेन पर्येति गच्छति तस्माद्ब्रह्माणं दक्षिणतो दक्षिणदिग्भागे आसयत्युपवेशयति । अन्यं धर्मं दर्शयति अथैतस्यामिति । अत्यधिकं पर्जन्यो विद्योतते । विशेषेण स्वं मूर्तिमान् प्रकटयति । तस्मादुद्गातैतामुदीचीं दिशं प्रत्युदङ्मुखः सन्नुद्गायति । धर्मान्तरं विधत्ते । अथैष इति । भूतानां पृथिव्यादीनां मध्य एष व्याप्त आकाशः सन्निहितो भवन्ति । तस्मात्सदसो मध्ये सदस्यं सप्तदशमृत्विजमासयन्ति । धर्मान्तरं विधत्ते । उच्चावचा वा इति । अत आप उच्चावचा न्यूनाधिकभावेन वर्तन्ते । उतापि च ता आपो गाधाः क्वचिदपगतप्रतिष्ठा इव भवन्त्यत एव गम्भीरादस्माद्धोत्राशंसिनः । उतापि च ता आपो गम्भीरा अगाधा इव भवन्ति । तस्माद्धोत्राशंसिनोऽपि पञ्चर्चेन शस्त्रेण स्तुतिं कुर्वन्ति । उतापि च भूयसा बह्वीभिरृग्भिः साध्येन शस्त्रेण स्तुतिं कुर्वन्ति । धर्मान्तरं विधत्ते । आदित्यस्यैवेति ॥४॥

षड्विंशब्राह्मणभाष्ये द्वितीयाध्याये चतुर्थः खण्डः ।

॥ ६ ॥

२·९

इदानीमौपोद्घातिकमाह स यदि पशुतो व्याधीयेतेति । तत्र स यजमानो यदि पशुतः पशुभ्यो व्याधीयेत भ्रश्येत्तर्हि ममेदमनिष्टमध्वर्युः स्वकर्मपरित्यागेनाकार्षीदिति विद्यात् । जानीयात् । अथ पुनर्यद्येनं पापिका पापसम्बन्धिनी कीर्तिरनूदियादनुगच्छेत् । ममेदं कष्टं होता स्वकर्मपरित्यागेनाकार्षीदिति विद्यात् । अथ योगक्षेमो व्यथेत नश्येत्तर्हि ब्रह्मेदं कष्टमकार्षीदिति विद्यात् । अथ यस्मात्मा आध्यात्मिकक्लेशेन प्रजया पुत्रादिकया व्याधीयेतेयं नो भवेदिति तर्हि उद्गाता ममेदमनिष्टमकार्षीदिति विद्यात् । अथ नैमित्तिकान्होमान्दर्शयति प्राणदेवत्यो वै ब्रह्मेति । ब्रह्मा प्राणदेवत्यो वै प्राणदेवत्यः खलु । व्यानो मे ब्रह्मेति व्यानात्मकत्वाद्ब्रह्मण इतरे होत्रादय ऋत्विजो वाग्देवत्याः । वाङ् मे होतेति श्रुतेः । यत्र यदि स यजमानो ब्रह्मा मे मम यज्ञे इदमकरोदकार्षीदिति मन्येत निश्चिनुयात् तर्हि हरितं

प्राश्रितावयवोपष्टम्भाद्धरितवर्णम्। दर्भनाड्या प्रबध्य प्रग्रथ्य स्रुच्यवधायाज्यं चतुर्गृहीतं गृहीत्वा नमः प्राणाय वाचस्पतये स्वाहेत्येन मन्त्रेण चोदितेन जुहुयात्। अथ पुनर्यद्यु वा इतरे यद्वेतरे होत्रादय ऋत्विजो मम यज्ञे इदं ह्वीदमकार्षुरिति यजमानो मन्येत तर्हि नमो वाचे प्राणपत्न्यै स्वाहेत्यनेन मन्त्रेण पूर्ववच्चतुर्गृहीतमाज्यं गृहीत्वा जुहुयात्। यदि वा ब्रह्मा यदि वेतरे होत्रादय ऋत्विजः सर्वेऽपि न्यूनमकार्षुरिति यदि यजमानो मन्येत तर्हि तेष्वेव गार्हपत्यादिष्वग्निष्वनुपर्यायं क्रमेण नमः प्राणाय वाचस्पतये स्वाहा नमो वाचे प्राणपत्न्यै स्वाहेत्याभ्यां मन्त्राभ्यां पूर्ववच्चतुर्गृहीतमाज्यं गृहीत्वा जुहुयात्। स्रुचि निहितस्य हिरण्यस्य प्रतिपत्तिं दर्शयति। अथ तद्धिरण्यमिति। अथेदं हुत्वा पश्चात्तद्धिरण्यं ब्रह्मणे दद्यात्। यथोक्तप्रायश्चित्तहोमं पुनर्यज्ञत्वेन स्तौति। अथ यदाहेति। अथशब्दो वाक्योपक्रमे। यज्ञो वाव पुनर्यज्ञ एव यज्ञस्य प्रायश्चित्तिरिति। यदाह यज्ञो वाव यज्ञस्य प्रायश्चित्तिरिति। पुनर्यज्ञ एव सः। एते उ हेति। एते एवाहुती यज्ञविभ्रष्टस्य यज्ञन्यूनत्वस्य प्रायश्चित्तिरिति ॥६॥

षड्विंशब्राह्मणभाष्ये द्वितीयाध्याये नवमः खण्डः।

॥ ७ ॥

५·३

अथेदानीमौदुम्बरीविशेषो निरूप्यते। तत्र औदुम्बर्याश्रयणं विधातुं प्रशंसति प्रजापतिर्देवेभ्य इति। प्रजापतिः पुरा देवेभ्यः स्वीयेभ्योऽसुषिरमूलामच्छिन्नमूलामप्रग्रन्थिं पृथुबुध्नां स्थूलमूलामेकजामनेकशाखारहितामौदुम्बरीमुच्छ्रयति। उच्छ्रितवान्। अत एतादृशौदुम्बरशाखाया उच्छ्रयणं प्रशस्तमित्यर्थः। कियत्प्रमाणमौदुम्बर्या इत्यत्राह यजमानमात्रीति। औदुम्बरी यजमानसम्मिता भवतीत्यर्थः। तथा च श्रुत्यन्तरम्। यजमानेन सम्मितौदुम्बरी भवतीति। यदि कुब्जादयो यजमानास्तदा कथमित्याशङ्क्याह। अथ कुब्जा इति। कुब्जा वामना ह्रस्वाश्च भवेयुस्तर्हि तैरूर्ध्ववाहुभिरौदुम्बरी समा भवति तथास्याश्छेदनं कार्यम्। प्रश्नपूर्वकमौदुम्बर्या विशेषेण च्छेदने सङ्ख्याविशेषं दर्शयति। कतिच्छेदनौदुम्बरी भवतीति। कतिच्छेदना कियत्सङ्ख्याकच्छेदनोपेता भवतीत्यर्थः। अत्रोत्तरम्। नवच्छेदनेत्यादि। अग्निष्टोमसाध्यकेष्वेव यज्ञेषु औदुम्बरी नवच्छेदना भवतीति। वैश्यस्तोमाद्येषु यज्ञेषु औदुम्बर्याश्छेदनान्येकादश कुर्यात्। एवमन्यदपि व्याख्येयम्। इदानीमौदुम्बर्युच्छ्रयणं विधत्ते य एवमिति। यः पुमानेवमौदुम्बरीधर्मान्वेद विदित्वा च यथोक्तामौदुम्बरीं यदोच्छ्रयति तदापचितिं पूजां प्राप्नोति। अथोक्तमौदुम्बर्योच्छ्रयणस्यापचितिसाधनत्वमाख्यायिकयोप-

पादयति। प्रजापतिरिति। पूर्वं प्रजापतिरपचितिं प्राप्नुवानीत्यकामयत। किञ्च। उदुम्बर ऊर्ध्वेतुल्वादूर्क्त्वम्। अन्नं च साम यतः सामात्मकम्। तस्मात्सामगेभ्यः। साम गायन्तीति सामगास्तेभ्योऽपचितिं पूजां करवाणीति। अहं प्रजापतिः करवाणीति सम्बन्धः। अतो यः पुमानेवं यथोक्तलक्षणामौदुम्बरीं कृत्वोच्छ्रयति सोऽपचितिमेवाप्नोति प्राप्नोत्येवेति ॥५॥

षड्विंशब्राह्मणभाष्ये पञ्चमाध्याये तृतीयः खण्डः।

॥ ८ ॥

५-५

अथ सविशेषां सन्ध्यां प्रशंसापूर्वकमाख्यायिकया निरूपयितुं ब्रह्मवादिनां प्रश्नं तावदुपस्थापयति ब्रह्मवादिनो वदन्तीति। अर्थस्त्वतिरोहित एव। उत्तरं वक्तुमुपक्रमते। देवाश्च वा इति। पुरा देवाश्चासुराश्चास्पर्द्धन्त। तत्र ते देवैः सह स्पर्द्धमाना असुरा दानवा आदित्यमभिलक्ष्य योद्धुमभ्यद्रवन्। तदानीं स आदित्यस्तेभ्योऽसुरेभ्योऽबिभेत्। अतस्तस्यादित्यस्य हृदयं कूर्मरूपेण सङ्कुच्यातिष्ठत्। ततः किमित्यत्राह। स प्रजापतिरिति। स भीत आदित्यः प्रजापतिमुपाधावत्तस्य समीपं प्राप्तवान्। तस्यादित्यस्य रक्षणाय प्रजापतिरेतद्वक्ष्यमाणं भेषजं प्रतीकारमपश्यत्। ऋतमनृतवर्जनम्। सत्यं यथार्थभाषणम्। ब्रह्म ऋग्वेदादिकर्म। ओङ्कारं प्रणवम्। त्रिपदां पादत्रयवतीं गायत्रीं चेति। किञ्च यथोक्तस्य भेषजस्य ब्रह्मणो मुखं प्रधानमित्यपश्यत्। अस्त्वेवं किन्तत इत्यत्राह तस्माद्ब्राह्मणोऽहोरात्रस्य संयोगे सन्ध्यामुपास्ते। यस्मादेवं तस्मात्। ब्राह्मणशब्दः क्षत्रियवैश्ययोरप्युपलक्षणम्। तयोरपि तत्राधिकारात्। मुखत्वाच्चाहोरात्रस्य संयोगेऽहोरात्रयोः सन्धौ भवां सन्ध्याम्। भवे यत्। उपास्ते सज्योतिषि। नश्यदवस्थापन्नेन पूर्वज्योतिषा सहितेन कालेन। आ ज्योतिषो दर्शनात्। आगामिनो ज्योतिषो दर्शनपर्यन्तम्। अन्तरालो यः कालः सा सन्ध्या। तदेव सन्ध्यायाः सन्ध्यात्वम्। किञ्च सायमासीन उपविष्टः सन्ध्यामुपास्ते। तया सन्ध्यया वीरस्थानं बलवत्स्थानं जयति प्राप्नोति। अथ पुनः सन्ध्याकालेऽप उदकानि यत्प्रयुङ्क्ते। ऊर्ध्वं विक्षिपति तत्र तावदूर्ध्वं विप्रुषो बिन्दवो वज्रीभूत्वा ता विप्रुषोऽसुरान्प्रति योद्धुमागतानपाघ्नन्ति। ततो देवा विजयिनोऽभवन्। असुरास्तु पराभवन्ति पराभूता अभवन्। किञ्च य एवमुक्तप्रकारेण वेद। अस्य वेदितुर्भ्रातृव्यः शत्रुरात्मना स्वेनैव पराभवति। तथा सायञ्च प्रातश्च सन्ध्यां यदुपास्ते तस्य ततो द्विविधसन्ध्यागतवीरस्थानं सन्ततं सर्वदाऽविच्छिन्नं भवति। योऽप्येवं वेद तस्यापि यथोक्तं फलं भवती-

त्यर्थः। तथा च तैत्तिरीयका आमनन्ति। तस्मादुत्तिष्ठन्तमह्नि तानि रक्षांस्यादित्यं योधयन्ति। यावदस्तं गन्ता तानि ह वा एतानि रक्षांसि गायत्र्यभिमन्त्रितेनाम्भसा शाम्यन्ति। तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्र्यभिमन्त्रिता अप ऊर्ध्वं विक्षिपन्ति। ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणद्वि। प्रतियन्तीत्यादि ॥५॥

षड्विंशब्राह्मणभाष्ये पञ्चमाध्याये पञ्चमः खण्डः।

॥ ६ ॥

५.६

अथ चन्द्रस्य क्षयवृद्धी निरूपयितुं प्रतिजानीते। अथैषेति। अथेति वाक्योपक्रमे। एषा वक्ष्यमाणा चन्द्रमसः सम्बन्धिनी क्षयवृद्धिः। यद्यपि द्विवचनेन भवितव्यं तथापि बाहुलकादेकवचनम्। तस्य विवरणं यस्मिन्नेव काले चन्द्रमाः क्षीयते कलाभिर्यदा कलाभिराप्यायते च तद्द्वयमनुव्याख्यास्यामोऽनुवर्णयामः। तत्र प्रथमं तस्य प्रमाणं दर्शयति। पूर्वपक्ष इति। य एव देवाः पूर्वपक्षे शुक्लपक्षे दीक्षन्ते सोमपानाय दीक्षां कुर्वन्ति ते दीक्षिता देवा अपरपक्षे कृष्णपक्षे सोमं भक्षयन्ति। कथम्। तत्र सोमपानविषये इमानि वक्ष्यमाणानि उपधीयन्ते। तेषामेव प्रदर्शनम् पृथिवीत्यादिना। पृथिवीलोकं पात्रमन्तरिक्षलोकं पात्रं द्यौर्युलोकमेकं पात्रमिति। तत्रादित्या आदित्याख्या देवा दिव्येन पात्रेण प्रथमं त्रेधा विभागे आद्यभागात्मकं पञ्चकलम्। पञ्च कला यस्य तम्। तं सोमं पञ्चमीम्। अत्यन्तसंयोगे द्वितीया। प्रतिपदमारभ्य पञ्चमीपर्यन्तं भक्षयन्ति। प्रतिदिवसमेकैकां कलां पिबन्तीत्यर्थः। ततस्ते दीक्षिता रुद्राख्या देवा अन्तरिक्षेऽन्तरिक्षलोकात्मकेन पात्रेण द्वितीयं पञ्चकलं दशमीम्। षष्ठीमारभ्य दशमीपर्यन्तं भक्षयन्ति। ततस्ते दीक्षिता वसवो वस्वाख्या देवाः पृथिव्या पृथिवीपात्रेण तृतीयं तृतीयभागात्मकं पञ्चकलं पञ्चदशीपर्यन्तं पूर्ववद्भक्षयन्ति। ततश्चन्द्रमसः षोडश्येका कलाऽवशिष्यते। अतः। यतश्चन्द्रमाः षोडशकलानन्तरं सोऽवशिष्टैककलः सोम ओषध्यादीन्प्रविशति। तथा च सतीन्द्रज्येष्ठा इन्द्रप्रमुखाः सोमपाश्चासोमपाश्च सर्वे देवास्तं सोममभिलक्ष्य तादृशं सोमवतीं रात्रिं वसन्ते। तत्र दृष्टान्तो यथेत्यादि। यथा वृद्धं जरया प्रलयं नाशमुपगच्छमानमुपगच्छन्तं व्याधिगतं रोगिणं पितरं पितामहं प्रपितामहं वाऽभिलक्ष्य मरिष्यति न वेति सन्दिहानाः पुत्रादयस्तां रात्रिं वसन्ति तद्वदित्यर्थः। तत्तेन देवानां सहवासनिमित्तेनामावास्या। अमाशब्दः सहार्थे। तस्या अमावास्यात्वम्। अमा सह भवन्त्यस्यामिति व्युत्पत्तेरित्यर्थः। यस्मादेवं तस्मादेव खलु अमावास्यायां न किञ्चिदध्येतव्यं भवति। अध्येतव्यस्य वर्णात्मकस्य वेदा-

देरग्नीषोमात्मकत्वात् । तत्र सोमस्यादर्शनादित्यर्थः । अथ तस्य वृद्धिप्रकारं प्रतिज्ञापूर्वकं दर्शयति । अथ सम्भरणमिति । अथ क्षयदर्शनानन्तरं सम्भरणं चन्द्रमसः कलाभि-पोषणमुच्यत इति शेषः । कथम् । यत्र चन्द्रः कलापूर्वमनुप्रविष्टस्ताभ्यः ओषधीभ्यो वन-स्पतिभ्यः । अपुष्पाः फलवन्तो वनस्पतयः । तेभ्यश्च गोभ्यश्च पशुभ्यश्चादित्याच । ब्रह्म मन्त्रात्मको वेदः । तस्मात् । ब्राह्मणाश्च स्वतोपितोपितं चन्द्रमसं नयन्ते । सम्यङ् नयन्ति । यस्मादेवं तस्मात्सान्नाय्यस्य सन्नयनसम्बन्धिनश्चन्द्रमसः सान्नाय्यत्वम् । यथा एभ्य ओषधीभ्यः सन्नीय स्वात्मनि सन्नयनं दधिपयसोः सान्नाय्यत्वं तथा तैत्तिरीया आमनन्ति । एतस्मै सन्नयेतेति तत्पशुभ्य ओषधीभ्योऽध्यात्मन्समनयन् प्रत्यगुत्पद्यत्समनयत्तत्सान्नाय्यस्य सान्नाय्यत्वमिति । एवमत्रापीत्यर्थः । अथेदानीमनुमत्यादिपतित्वेन चन्द्रमसं प्रशंसति । चन्द्रमा वा इति । चन्द्रमा वै पतिरनुमत्यादीनां रेतस आधातृत्वात् । अनुमत्यादीनां स्वरूपप्रदर्शनं या पूर्वेति । या पूर्वा चतुर्दशीविद्धपौर्णमासी सानुमतिरित्युच्यते । योत्तरेति । योत्तरा संपूर्णचन्द्रोपेता सा राका । या पूर्वेति । या पूर्वा दृष्टचन्द्रमसाऽमावास्या सा सिनीवालीत्यभिधीयते । योत्तरेति । योत्तरा नष्टेन्दुकलाऽमावास्या सा कुहूरित्युच्यते । एता-श्चन्द्रमसो जाया इत्यर्थः । अत्र यः पुमान् वृद्धिमनुगं चन्द्रं तं पश्यति अन्यं न पश्यति अस्य द्रष्टुस्तत्तादृशमेव मिथुनं भवति । अनुमत्यादिचतुष्टयं युगचतुष्टयसम्बन्धित्वेन प्रशंसति । पुष्येवेति । पुष्यत्यस्मिन्धर्मानिति पुष्ये कलियुगेऽनुमतिः श्रेष्ठेति विद्यात् । तथा द्वापरे सिनीवाली श्रेष्ठा भवति । खार्वायाम् । खर्वौ समौ धर्माधर्मौ यत्र त्रेतायां खार्वायां राका श्रेष्ठा तथा भवेत् । कुहूः कृतपर्व कृतयुगसम्बन्धि पर्व भवेत् । इति । अनुमत्यादीनां लक्षणानि दर्शयति । न्यूनेवेति । न्यूने चन्द्रे कलारहिते सति पौर्णमासीमनुमतिं विद्यात् । यस्मिन्देशे चन्द्रमा दृश्यते साऽमावास्या सिनीवाली ज्ञेया । यदि चन्द्रमाः सपूर्णो दृश्यते सा पौर्णमासी राका । यत्र तु चन्द्रमा न दृश्यते साऽमावास्या कुहूरिति ज्ञेया ॥६॥

षड्विंशब्राह्मणभाष्ये पञ्चमाध्याये षष्ठः खण्डः ।

॥ १० ॥

५.७

अथ स्वाहाकाराख्यां देवतां प्रश्नपूर्वकं निरूपयितुं प्रजापतिं प्रति ब्रह्मवादिनां प्रश्नं तावदुप-स्थापयति । स्वाहा वै । निगदसिद्धम् । उत्तरमाह । स्वाहा वै सत्यसंभूता । स्वाहा सत्येनैव सम्भूता नान्येन । ब्रह्मणो दुहिता । ब्रह्मणा प्रकर्षेण कृता । लातव्येन ऋषिणा

समानगोत्रा। तस्यामक्षराणि सकारवकारहकारात्मकानि त्रीणि। पदमेकमेतावन्त्येवेति मन्तव्यम्। अस्यै अस्या वर्णरूपाणि शुक्लः पद्मः। पद्मशब्देन पद्मवर्ण उच्यते। सुवर्णवर्णश्चेति त्रयः। अस्यां चत्वार ऋगादयो वेदा उच्छ्वासास्त एव तस्याः शरीरं यानि निरुक्तादीनि षड्‌ङ्गानि तान्येव तस्या अङ्गानि। ओषधिवनस्पतय एवास्या लोमानि। तथा द्वे शिरसी। तयोरेव प्रदर्शनम् अमावास्यैकं शिरः पौर्णमासी द्वितीयं शिरः। तत्रैव च यागकरणाचन्द्रादित्यावेवास्याश्चक्षुषी इत्यर्थः। आज्यभागाख्ये कर्मणी एवास्या हुतं हवनस्थानम्। मुखमित्यर्थः। यागे या दक्षिणा सैव प्रावृतावरणम्। तस्या बृहद्रथन्तरे एव सामनी। बाहू इति शेषः। ऋग्यजुःसामवेदाख्या उच्छ्वासा ऋगादयस्त्रयो वेदा गतिः। पादावित्यर्थः। एवंविधा या स्वाहा सैव स्वधा नान्या। तथा वषट्कारः। सैषा देवेषु स्वाहा देवयज्ञेषु वषट्कारभूता सती प्रयुज्यते। सैव तथाभूता पितृयज्ञेषु स्वधेति प्रयुज्यते। इत्याशयनिरूपणम्। शकटीमुखी पृथिवीमधिप्रायान्तरिक्षेण मार्गेण विपर्येति स्वाहा। स्वर्गं स्वर्गादिफलं व्याप्नोतीति। तस्याः स्वाहाया अग्निर्दैवतम्। अग्निरेव देवतारूपम्। ब्रह्मणस्तत्प्राधान्यात्। प्रजापतय इति। अत्र त्वत्तोऽन्यः कश्चित् सर्वाणि भुवनानि परिभवितुं न शक्नोति। अतस्ते तुभ्यं वयं यत्कामाः यत्फलकाममाना जुहुमस्तत्फलं नोऽस्माकमस्तु। किञ्च वयं रयीणां धनानां पतयः स्याम भवेम स्वाहेत्यनेन स्वाहायाः प्रजापतिपरिग्रहो दर्शितः। यथोक्तरूपां स्वाहां प्रशंसति। तस्यानुतृप्तिं तस्य स्वाहाकारपरिग्रहेण तृप्तस्य प्रजापतेस्तृप्तिमनु यजमानः प्रजया पुत्रपौत्रादिकया पशुभिर्गवादिभिरन्नाद्येन तेजसा ब्रह्मवर्चसेन तृप्यति। इतिशब्दोऽध्यायपरिसमाप्तिद्योतनार्थः ॥७॥

षड्विंशब्राह्मणभाष्ये पञ्चमाध्याये सप्तमः खण्डः।

॥ ११ ॥

६.८

वायुदेवताकनिमित्तविशेषं होमविशेषे दर्शयितुं तदङ्गत्वेनादावन्तरिक्षनिरीक्षणपूर्वकमावर्तनं दर्शयति। सोऽन्तरिक्षम्। वक्ष्यमाणनिमित्तानामन्तरिक्षस्य च वायुसम्बन्धित्वाविशेषादिदानीं निमित्तविशेषान्दर्शयति। अथ यदास्य। अथ पुनर्यस्य देशे यदाऽधिकभावान्मात्राधिका अतिशयिता वाता वायन्ते। वय गताविति धातुः। अभ्रेषु परुषाणि दृश्यन्ते। पर्वतादिषु निर्निमित्तं प्राकृतविरुद्धरूपाणि दृश्यन्ते। तथाऽस्य गृहाणि खरो गर्दभः करभः क्रमेलको मन्थो मृगविशेषः कङ्कपोतादयः प्रसिद्धाः। गोमायुः क्रोष्टा एतैः

प्रविष्टानि दृश्यन्ते । उपर्यन्तरिक्षे च पांसवो धूलयः । मांसपेशो मांसखण्डः । अस्थि-रुधिरे प्रसिद्धे । एतेषां वर्षाणि प्रवर्तन्ते । तथा काकमिथुनानि दृश्यन्ते । तथा रात्रौ मणिधनुरिन्द्रधनुः पश्येत् । शशकाश्च शशाश्च ग्रामं यदा प्रविशन्ति । वृक्षेभ्यश्च रुधिराणि स्रवन्ति । आकाशे राजकुलं पश्यति । गन्धर्वनगरादिकं स्थितं दृश्यत इत्यर्थः । इत्येव-मादीनि । तान्येतानि सर्वाणि वायुदेवतान्यद्भुतानि प्रायश्चित्तीयानि भवन्ति । तद्धेतुदुरि-तापूर्वनिवर्हणसाधनं होमं विध्यन्तरसहितं दर्शयति वात आ वातु भेषजमित्येतया ऋचा । अन्यत्पूर्ववद्व्याख्येयम् ॥८॥

षड्विंशब्राह्मणभाष्ये षष्ठाध्यायेऽष्टमः खण्डः ।

# ७। ऐतरेयारण्यकभाष्यम्

॥ १ ॥

२·२·१

उक्थे ध्यातव्यस्य प्राणस्य परस्परविलक्षणा बहव उपास्यगुणाः प्रथमेऽध्याये दर्शिताः । द्वितीये तु प्रथममण्डलद्रष्टमुनिरूपत्वादयो बहवो गुणा वक्तव्याः । तत्रैकं गुणं विधत्ते एष इत्यादिना । य एष आदित्यो मण्डले तपति स एष पुरुषरूपेणोपासकजीवरूपेणेमं लोकमव-लोकयमानमिममुपासकदेहमभ्यार्चत्स्वप्रवेशेनाभितोऽर्चनीयमकरोत् । पुरुषरूपाभावे हि शवरूपो देहोऽयमपूज्यः स्यात् । न च प्रस्तुतं प्राणं परित्यज्य किमित्यादित्यो वर्ण्यत इति शङ्कनीयम् । यस्मादादित्यरूपेण प्राण एव तच्छरीरमर्चनीयमकरोत् । य एष मण्डल-स्थोऽस्माभिर्दृश्यमानस्तपति स एष प्राणो हि । न खल्वादित्यप्राणयोर्भेदोऽस्ति । अध्या-त्ममधिदैवं चेदं स्थानभेदमात्रम् । अतएव आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णीत इति श्रुत्यन्तरे पठ्यते । एक एव पदार्थो देहं प्रवर्तयितुमन्तःस्थितो दृष्टिमनुग्रहीतुं बहिःस्थित इत्येतावदेव द्वयोर्वैषम्यम् । स प्राणस्तं मनुष्यदेहं शतसङ्ख्या-कान्संवत्सरान्पूजनीयमकरोत् । तस्मात्कारणात्पुरुषायुषो मनुष्याणामायूंषि शतसङ्ख्या-काः संवत्सरा भवन्ति । यस्मादयं प्राणस्तं मनुष्यदेहं वर्षशतमर्चितवांस्तस्मात्तथैव व्युत्पत्त्या प्राणस्यावतारभूताः प्रथममण्डलद्रष्टारो मुनयः शतर्चिसंज्ञकाः सम्पन्नाः । यस्मात्प्राणनिष्पा-दितार्चनीयवशाच्छतर्चिनामका मुनयस्तस्मादुपासका एतमेव प्राणरूपं सन्तं शतर्चिनामका मुनय इत्याचक्षते । प्राणस्य तन्मुनिरूपत्वं ध्यायेदित्यर्थः । द्वितीयं गुणं विधत्ते स इदमि-

त्यादिना। प्राणदेवो यत्किञ्चिद्देहजातमस्ति तदिदं सर्वं स्वयं मध्यतोऽवस्थाय धारितवां-स्तस्मात्प्राणावतारविशेषाः केचिदृषयो माध्यमनामकाः सम्पन्नाः। तद्रूपत्वं प्राणस्य ध्यायेत्। तृतीयं गुणं विधत्ते प्राण इति। यः प्राणोऽस्ति स एव स्वापकाले वागादीनां निगरणाद्गृत्स इत्युच्यते। अपानश्च रेतोविसर्गकारकमदहेतुत्वान्मद इत्युच्यते। तदुभयावतारो मुनिर्गृत्स-मदनामकः। चतुर्थं विधत्ते। तस्येदमिति। तस्य प्राणदेवस्य भोक्तुरिदं विश्वं भोग्यत्वेन मित्रमासीत्। पञ्चमं गुणं विधत्ते। तमित्यादिना। वागादयो देवाः सर्वे तं प्राणमुद्दिश्य परस्परमब्रुवन्। अयं वै प्राण एव नोऽस्माकं सर्वेषां मध्ये वामो वननीयो भजनीय इति। देवेषु मध्ये वाम इति व्युत्पत्त्या वामदेवनाम संपन्नम्। षष्ठं विधत्ते। स इदमिति। यत्किञ्चिदिदं मनुष्यजातमस्ति तत्सर्वं स प्राणः पाप्मनः सकाशादत्रायत रक्षितवान्। तस्मा-दत्रायतेत्यत्रिरिति निर्वचनं संपन्नम् ॥१॥

ऐतरेयारण्यकभाष्ये द्वितीयारण्यके द्वितीयाध्याये प्रथमः खण्डः।

॥ २ ॥

२·२·२

पूर्वत्र शतर्चिप्रभृतिमुनिस्वरूपलक्षणाः षड्गुणा अभिहिताः। अथ भरद्वाजस्वरूपत्वादयो दश गुणा उच्यन्ते। तत्र प्रथमं गुणं विधत्ते। एष उ एवेति। यः प्राणोऽस्ति स एष एव बिभ्रद्वाजनामकः। वजिधातुर्गत्यर्थः। गतिमत्त्वात्प्रजानां देहो वाजशब्देनोच्यते। अथवा श्रुतौ अन्नं वै वाज इत्युक्तेरन्नसम्बन्धाद्वाजशब्देन प्रजा विवक्षिताः। तं प्रजारूपं वाजमेष प्राणः स्वप्रवेशेन बिभर्ति पोषयतीति बिभ्रद्वाजः। प्रजा वै वाज इत्यादिना भरद्वाजनाम-निर्वचनमुक्तम्। द्वितीयं गुणं विधत्ते। तं देवा इति। अयमेव प्राणोऽस्माकं सर्वेषां स्वप्रवेशेनात्यन्तं निवासहेतुः सन्वसिष्ठ इति च देवा अब्रुवन्। तृतीयं विधत्ते। स इदमिति। स प्राण इदं सर्वं शरीरजातं स्वानुप्रवेशेनाभिप्रागात्सर्वतः प्राप्तवांस्तस्मात् प्राणदेवताया मूर्ति-विशेषप्रतिपादका ऋग्द्वयात्मकसूक्तरूपा मन्त्रविशेषा प्रगाथा इत्युच्यन्ते। तन्मन्त्रद्रष्टारो महर्षयोऽपि प्रगाथनामकाः। चतुर्थं विधत्ते। स इदमिति। लोके क्षुद्रं यत्किञ्चिदस्ति तत्सर्वं प्राणोऽभ्यपवयताभितः पूतं शुद्धमकरोत्ततस्तन्मूर्तिविशेषप्रतिपादका ऋचस्तद्द्रष्टारो मह-र्षयश्च पावमान्य इत्युच्यते। पञ्चमं विधत्ते। सोऽब्रवीदिति। लोके क्षुद्रं पिपीलिकादि-रूपं यदस्ति महच्च गजाश्वादिरूपं यदस्ति तत्सर्वमहमेव भवानीत्येवं स प्राणदेवः कदाचिद-ब्रवीदतस्तत्प्राणप्रतिपादकमन्त्रसङ्घाः क्षुद्रसूक्तमहासूक्तनामानोऽभवन्। जातवेदस इति सूक्तमेकर्चत्वात्क्षुद्रसूक्तम्। अस्य वामस्येत्येतत्सूक्तं द्विपञ्चाशदृचत्वान्महासूक्तम्। एवमुदा-

हरणान्तराणि द्रष्टव्यानि। तत्तत्सूक्तद्रष्टारो महर्षयश्च क्षुद्रसूक्तमहासूक्तनामभ्यामुच्येते। तस्मात्क्षुद्रसूक्ता इति वाक्यं महासूक्तानामप्युपलक्षणम्। षष्ठं विधत्ते। सूक्तमिति। कदाचिदयं प्राणदेवः स्वमहिमप्रतिपादकस्य मन्त्रजातस्य वक्तारं कञ्चिन्महर्षिं दृष्ट्वा तमुवाचायं महर्षिः सूक्तं शोभनं वचनमवोचताश्चर्यमेतदिति। बतशब्द आश्चर्यवाची। यस्मादयं देवो मन्त्रजातं सूक्तशब्देन व्याजहार तस्मान्मन्त्रजातं सूक्तनामकमभवत्। तद्द्रष्टापि सूक्तनामकोऽभूत्। सप्तमं गुरुं विधत्ते। एष वेति। योऽयं प्राणदेवोऽस्त्येष एवर्क्शब्देनाभिधीयते। यस्मादेष प्राणः सर्वभूतार्थं तं तं देहमर्चत स्वप्रवेशेन पूजितमकरोत्तस्मात्प्राणप्रतिपादको मन्त्रस्तद्द्रष्टा चर्क्शब्देनाभिधीयते। अष्टमं विधत्ते। एष वेति। ऋचो भागोऽर्धर्चः सोऽप्येष प्राण एव। अर्द्धर्चशब्दः स्थानवाची। देवमनुष्यादीनां लोकविशेषरूपाणि यानि स्थानानि सर्वाणि तदर्थमयं प्राणोऽर्चत तत्स्थानवासिप्राणिजातं पूजितमकरोत्तस्मात्तादृशप्राणमहिमवाची मन्त्रभागस्तद्द्रष्टा चार्द्धर्चशब्देनोच्यते। नवमं विधत्ते। एष वा इति। पदशब्देन सुबन्ततिङन्तादिरूपः कस्यचिदर्थस्य वाचकः शब्दो विवक्षितः। तत्रैवार्द्धर्चस्य भागः पादशब्दाभिधेयोऽपि विवक्षितः। तदुभयमेष प्राण एव। यस्मात्सर्वाणि भूतान्यसौ प्राणः पादादिस्वप्रवेशेन प्राप्तवांस्तस्मात्तन्महिमप्रतिपादकोऽर्धर्चभागः शब्दविशेषस्तद्द्रष्टा च पदशब्देनोच्यते। दशमं विधत्ते। एष वा इति। आकारादिरूपं लोकप्रसिद्धं तदेष एव। यस्मादेष सर्वभुतानामनुष्ठातॄणामर्थं क्षरति क्षरणं फलप्रदानरूपं करोति। प्राणवदन्ये पुरुषा एवं नैवातिक्षरन्ति। प्राणमविलङ्घ्य क्षरणे फलप्रदाने स्वयं न समर्थाः। अतएव छन्दोगा आमनन्ति प्राणः प्राणाय ददाति इति। न खलु प्राणरहितः शवदेहोऽन्यस्मै शवदेहाय किञ्चिद्वस्त्रादिकं दातुं प्रभवति। अतोऽयं प्राणमतिलङ्घ्य क्षरणं नास्ति तस्य प्राणस्य वाचकं वर्णजातं तद्द्रष्टा चाक्षरशब्देनोच्येते। तदेवं सर्वमन्त्रसर्वमहर्षिस्वरूपत्वं प्राणस्य ध्येयमिति तात्पर्यार्थः। तमिमं सङ्क्षिप्य दर्शयति। ता वा इति। अग्निमीळे पुरोहितमित्यारभ्य यथा वः सुसहासतीत्यन्ताः समाम्नाता ऋचो याः सन्ति ता एताः सर्वा अपि एकैव व्याहृतिरेकशब्दात्मिकाः। तथा ऋग्वेदयजुर्वेदादयो वेदाः सन्ति ये च घोषा झभघढधादयो घोषवर्णाः सन्ति ते सर्व एकैव व्याहृतिः। कोऽसावेकः शब्द इति स उच्यते प्राण एव। प्राणशब्देनैव सर्वं शब्दजातं संगृहीतम्। प्राणशक्त्यैव सर्वेषामुच्चार्यमाणतया प्राणेऽन्तर्भावात्। तस्मात्प्राण ऋच ऋगुपलक्षितं सर्वं शब्दजातं महर्षिजातं च प्राणस्वरूपमित्येवोपासितव्यम् ॥२॥

ऐतरेयारण्यकभाष्ये द्वितीयारण्यके द्वितीयाध्याये द्वितीयः खण्डः।

॥ ३ ॥

२·३·२

अन्नादिध्यानमुक्त्वा पुरुषस्योक्थस्वरूपस्यात्मचैतन्याविर्भावातिशययुक्तत्वध्यानं विधत्ते तस्येति। तस्योक्थस्वरूपस्य पुरुषस्य शरीरे वर्तमानं चिद्रूपमात्मानमाविस्तरामतिशयेन प्रकटं यः पुमानुपास्ते स पुमान्भूय आविरतिशयेन प्रकटत्वमश्नुते ह व्याप्नोत्येव। विद्यैश्वर्यादिकीर्ति बहुलं प्राप्नोतीत्यर्थः। चैतन्यस्योपाधिविशेषेषु तारतम्येनाविर्भावं दर्शयितुमादावेकमुपाधिमुदाहरति। ओषधीति। सच्चिदानन्दरूपस्य जगत्कारणस्य परमात्मनः कार्यभूताः सर्वेऽपि पदार्था आविर्भावोपाधयः। तत्राचेतनेषु मृत्पाषाणादिषु सत्तामात्रमाविर्भवति न चात्मनो जीवरूपत्वम्। ये त्वोषधिवनस्पतयो जीवरूपाः स्थावरा ये च श्वासरूपप्राणधारिणो जीवरूपा जङ्गमास्तदुभयमतिशयेनाविर्भावे स्थानमिति यो निश्चिनोतीत्यध्याहारः। स पुमानात्मानमतिशयेनाविर्भूतमुपास्ते कथं स्थावरजङ्गमजीवयोराविर्भावातिशय इति चेदुच्यते। ओषधिवनस्पतिषु स्थावरजीवशरीरेषु रस आर्द्रत्वं तदेतज्जीवात्मनो लिङ्गम्। न हि काष्ठपाषाणादिषु रसोऽस्ति। यदपि प्राणभृत्सु जङ्गमजीवशरीरेषु चित्तमन्तःकरणं तदपि जीवात्मनो लिङ्गम्। तच्च मृत्पाषाणादिषु न दृश्यते। अतो रसचित्तयोर्जीवलिङ्गयोर्दर्शनादोषध्यादिष्वतिशयेनाविर्भावः सिद्धः। उदाहृतोपाधावपि स्थावरेभ्यो जङ्गमेष्वाविर्भावातिशयं दर्शयति। प्राणभृत्स्विति। तुशब्द ओषधिवनस्पतिव्यावृत्त्यर्थः। प्राणभृत्सु मनुष्यगवादिष्वेवं चिदात्मन आविर्भावातिशयो न त्वोषध्यादिषु। तत्र हेतुरुच्यते। तेषु प्राणभृच्छरीरेषु रक्तरूपो रसो दृश्यते। अपिशब्देन पूर्वोक्तं चित्तं समुच्चिनोति। अतो लिङ्गद्वयसद्भावादाविर्भावातिशयः। इतरेष्वोषधिवनस्पतिशरीरेषु ।चित्तं न दृश्यते किंतु रसरूपमेकमेव लिङ्गं तस्मान्नास्त्यतिशयः। प्राणभृदुपाधिष्वपि तारतम्यं दर्शयति। पुरुषे त्विति। मनुष्या गवाश्वादयश्च प्राणभृतस्तेषां मध्ये पुरुषे मनुष्य एवातिशयेनात्माविर्भावो न तु गवादिषु। यस्मात्स मनुष्योऽत्यन्तं प्रकृष्टज्ञानेन सम्पन्नः। तदेव कथमिति चेत्तदुच्यते। पूर्वेद्युर्यद्वस्तु विज्ञातं तत्सर्वमद्य स्मृत्वा ममेदं विदितमिति जनानामग्रे वदितुं समर्थः। यद्यपि गवादीनां दर्शने सामर्थ्यमस्ति तथापि विवेकाभावान्न साकल्येन दर्शनम्। किञ्च यथातीतस्य कथनं तथा श्वस्तनं भविष्यत्कर्तव्यमपि जानाति। तथा लोकालोकावुत्तमं स्वर्गलोकमधमं नरकलोकं च शास्त्रेण विविच्य जानाति। तथा मर्त्येन विनश्वरेण ज्ञानकर्मरूपसाधनेनामृतमविनश्वरं मुक्तिपदमीप्सति प्राप्तुमिच्छति। एवमनेन प्रकारेण मनुष्योऽत्यन्तविवेकेन सम्पन्नः। गवादिपशुप्रकृतवैपरीत्यं दर्शयति अथेतरेषामिति। मनुष्यवैलक्षण्यद्योतनार्थोऽथशब्दः। तदेव वैलक्षण्यं प्रपञ्च्यते।

अशनाशब्देनाशितुमिच्छोच्यते। अशनायेतिपदे यकारस्य लुप्तत्वात्। येयं बुभुक्षा या च पिपासा ते एवोभे अभिलक्ष्य पशूनां विज्ञानमस्ति। न तु मनुष्यवत्पूर्वविज्ञातकथनादिकम्। ते गवाश्वादिपशवः। एतावन्त एतावन्मात्रविज्ञानाः। तात्कालिकक्षुधादिज्ञानमात्रोपेता भवन्ति। तत्र हेतुरुच्यते यथाप्रज्ञं पूर्वस्मिञ्ज्ञानकर्मानुष्ठानाधिकारयुक्ते जन्मनि यादृशी प्रज्ञा शास्त्रीया लौकिकी वा अभ्यस्ता। कर्मणोऽप्येतदुपलक्षणम्। कर्मापि विहितं प्रतिषिद्धं वा यादृशमनुष्ठितं तादृशीं प्रज्ञां तादृशं कर्म चानतिक्रम्य तस्मात्सम्भवाः प्राणिनां जन्मानि भवन्ति। तस्माज्ज्ञानकर्मानुसारेण पशूनां बुद्धिमात्रं युक्तम्। एतदेवाभिप्रेत्य परलोकगामिनं जीवं प्रति वाजसनेयिन आमनन्ति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति। पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति च। तदेवं मनुष्यदेहस्योत्तमोपाधित्वात्तस्मिन्नेवात्मन आविर्भावातिशयं ध्यायेत्। यद्यपि देवादिदेहा इतोऽप्युत्तमोपाधयस्तथापि मनुष्यस्यैव प्रायेण शास्त्राधिकारित्वात् पुरुष एवोक्थमयमेव महान्प्रजापतिरिति प्रस्तुतत्वादेतस्मिन्ध्यानमुचितम् ॥२॥

ऐतरेयारण्यकभाष्ये द्वितीयारण्यके तृतीयाध्याये द्वितीयः खण्डः।

॥ ४ ॥

२·३·६

यद्वाऽनुष्टुबन्तर्भावसम्पादनेन बृहती प्रशस्यते तद्वा इदमिति। षट्त्रिंशदक्षरायामेकैकस्यां बृहत्यां द्वात्रिंशदक्षराया अनुष्टुभ ऊर्ध्वमक्षराणि चत्वार्यतिरिच्यन्ते। तेषां चातिरिक्तानामक्षराणां कृत्स्नेऽपि शस्त्रे सहस्रचतुष्टयं भवति। तत्रानुष्टुप्त्वसम्पादने सति पञ्चविंशत्युत्तरशतसङ्ख्याका अनुष्टुभो भवन्ति। लोकेऽपि भूयसाऽधिकेन सङ्ख्याविशेषेण न्यूनं सङ्ख्यास्वरूपमात्रं वै स्वीकृतमेव व्याप्तमेव भवति। तद्यथा शते पञ्चाशत्सङ्ख्यान्तर्भवति। सहस्रादौ शतादिसङ्ख्यान्तर्भवति। तस्मात्षट्त्रिंशदक्षरायां बृहत्यां द्वात्रिंशदक्षराया अनुष्टुभोऽन्तर्भावो युक्त इत्यर्थः। बृहत्यामनुष्टुबन्तर्भावे कश्चिन्मन्त्रमुदाहरति तदुक्तमिति। स च मन्त्रः संहितायामेवमाम्नातः। वाचमष्टापदीमहं नवस्रक्तिमृतस्पृशम्। इन्द्रात्परि तन्वं ममे इति। अत्र मन्त्रद्रष्टा कश्चिदृषिः स्वयं मन्त्ररूपसन्नेवं ब्रूते। अहं मन्त्रात्मा वाचमनुष्टुभं ब्रूयाम्। इन्द्रात्परमैश्वर्ययुक्तात् बृहतीरूपात्प्राणात्तन्वं ममे तस्य चेन्द्रस्य तनुं शरीरं परितो निर्मितवानस्मि। बृहती तावद्यथोक्तध्यानानुसारेणेन्द्रशब्दाभिधेयस्य प्राणस्य शरीरभूता। तस्यां बृहत्यामनुष्टुभमन्तर्भाव्येन्द्रनिमित्तं तस्या अप्यनुष्टुभ इन्द्रशरीरत्वं

संपादितवानस्मीत्यर्थः। कीदृशीं वाचमष्टापदीं चतुरक्षरैरष्टाभिः पादैरुपेताम्। तथा नवस्रक्तिमष्टाभ्यः पादेभ्य ऊर्ध्वं बृहतीत्वसम्पत्तये पुनरप्येकेन चतुरक्षरेण पादेन योगे सति नवसङ्ख्याकस्रक्तियुक्ता भवति। स्रक्तयः कोणास्तद्युक्ताम्। तथार्तस्पृशमृतं सत्यं प्राणं बृहत्यात्मकं स्पृशतीत्यृतस्पृक्। तादृशीम्। बृहत्यामन्तर्भावात्तद्रूपप्राणस्पर्श उपपद्यते। एतस्य मन्त्रस्य प्रथमं पादं व्याचष्टे वाचमिति। द्वात्रिंशदक्षरायामनुष्टुभि समभागैर्विभज्यमानायां चतुरक्षरपादाः सम्पद्यन्ते। द्वितीयपादपूर्वभागं व्याचष्टे नवस्रक्तिमिति। पूर्वोक्ताऽष्टापदी या वाग्रूपाऽनुष्टुप्सैवान्येन चतुरक्षरपादेन संयोगे सति षट्त्रिंशदक्षरा बृहती सम्पद्यमाना सती नवस्रक्तिभिश्चतुरक्षरपादरूपैः कोणैरुपेता भवति। नवस्रक्तीति विसर्गलोपश्छान्दसः। उत्तरभागं व्याचष्टे ऋतेति। येयमनुष्टुब्रूपा वागस्ति सेयमृचा बृहत्या स्पृष्टा संयुक्ता सती सत्यं कदाचिदपि बाधारहितं प्राणदेवं बृहतीरूपत्वेन ध्यातव्यं स्पृशतीति शेषः। तृतीयपादं व्याचष्टे इन्द्रादिति। यद्यस्मात्कारणात्तदेवैतद्बृहतीसहस्रं पूर्वोक्तरीत्या पञ्चविंशत्यधिकशतोपेतमनुष्टुप्सहस्रं सम्पद्यते। सहस्रशब्दमध्याहृत्यानुष्टुप्सहस्रं सम्पन्नमिति व्याख्येयम्। तस्माद्बृहत्यामनुष्टुबन्तर्भावात्कारणादनुष्टुब्रूपां वाचं तस्मात्पूर्वमुपास्यत्वेनोक्तादैन्द्रात्परमेश्वरसम्बन्धात्प्राणादेव बृहतीरूपान्निमित्तात्तन्वं तनुं शरीरमयं होता सन्निर्मिमीते। सम्यङ् निष्पादयति। बृहत्यात्मकप्राणस्य तदन्तर्भूताऽनुष्टुबपि शरीरं भवतीत्यर्थः। तदेवमनुष्टुबन्तर्भावेन बृहती प्रशस्ता तादृशबृहतीसहस्ररूपस्योक्थस्य प्रकारान्तरेण पञ्चविधत्वध्यानं विधत्ते स वा इति। बृहतीसहस्रात्मकं यत्प्रौढं शस्त्रं स एषोऽक्षरसमष्टिरूपाया वाचः परमो विकार उत्तमं कार्य्यम्। त्रिष्टुप्सहस्रादिभ्य उत्तमत्वं पूर्वमेव दर्शितम्। तादृशमेतदुक्थं मितादिभिर्वाग्विशेषैः पञ्चविधमिति ध्यायेत्। अक्षरसङ्ख्याप्रयुक्तच्छन्दोविशेषयुक्तं मितम्। तद्रहितममितम्। गीतिनिष्पादकः स्वरः। अबाध्यं तत्त्वं सत्यम्। बाध्यं मिथ्याभूतमनृतमित्येते वाग्विशेषा ध्येयाः। तान्विशेषान्विस्पष्टमुदाहृत्य प्रदर्शयति ऋगिति। अर्थपादव्यवस्थोपेतो मन्त्र ऋगित्युच्यते। अग्निमीळे पुरोहितमित्यादिका। तस्यामृग्जातौ सर्वलोकप्रसिद्धार्थप्रतिपादिका प्रातः प्रातरनृतं ते वदन्तीत्यादिका गाथा। ऋग्वेवाचारशिक्षारूपा कुम्ब्या। तद्यथा ब्रह्मचार्यस्यपोऽशान कर्म कुरु मा सुषुप्था इत्यादिः। यदेतदृक्सामान्यं यौ च गाथाकुम्ब्यारूपावृग्विशेषौ तदेतत्त्रयं छन्दोरूपेण नियतपरिमाणत्वान्मितमित्युच्यते। इषे त्वेत्यादिमन्त्रजातं यजुस्तद्विशेषरूपः, अग्ने महाँ असि ब्राह्मणभारतेत्यादिको निगदो ब्राह्मणगता येऽर्थवादा या च राजसभादौ परिहासादिरूपेणोच्यते सा सर्वा वृथा वाक्तदेतत्त्रयं नियतपरिमाणाभावादमितमित्युच्यते। प्रथमद्वितीयादिस्वरैर्निष्पाद्यं रथन्तरवामदेव्यादिरूपं यत्सामास्ति, अथो अपि च यः कोऽपि गेष्णः सामभागः सामगैः पर्वशब्देन व्यवह्रियमाणस्तत्सर्वमत्र

स्वरशब्देन विवक्षितम्। सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतिसिद्धस्यात्यन्तमबाध्यस्य वस्तुनः प्रतिपादको योऽयमोमिति शब्दस्तदेतदत्र वाचः सम्बन्धि सत्यं विवक्षितम्। सर्वप्रपञ्चस्य निषेधको योऽयं नेति शब्दस्तदभावपर्यवसायित्वादत्रानृतशब्देन विवक्षितम्। इत्थं ध्यातव्या मितायाः पञ्चविधा निरूपिताः। तत्र सत्यध्यानं प्रशंसति। तदेतदिति। ओमित्येवंरूपं यत्सत्यं तदेतद्वाग्रूपस्य वृक्षस्य फलस्थानीयम्। काण्डद्वयप्रतिपाद्यं कर्मज्ञानं च शब्दसम्बन्धि-वाग्वृक्षस्य पुष्परूपम्। तदुभयसाध्यं देवताजन्म मुक्तिश्चेत्युभयं तस्य वृक्षस्य फलरूपम्। तयोः पुष्पफलयोर्हेतुत्वादोङ्कारस्तद्रूपत्वेनोपचर्यते। एवं ध्याता पुमान्यस्माद्वाचः सम्बन्धि पुष्पं फलं च वदति तस्मादयं लौकिकधनसम्पत्त्यादियशोयुक्तो वैदिकपुण्यानुष्ठानकीर्त्तियुक्तश्च भवितुं समर्थः। प्रसङ्गाद्बुद्धिस्थमनृतवदननिषेधं पुरुषार्थतया दर्शयति अथेति। प्रकृतादुपासना-प्रशंसारूपाद्वाक्यादर्थान्तरकथनार्थोऽथशब्दः। न प्रकृतमुपासनाङ्गमुच्यते किन्त्वन्यः कश्चि-त्प्रासङ्गिकोऽनृतवदननिषेध इत्यर्थः। यदनृतं मिथ्याभाषणमस्ति तदेतद्वाग्वृक्षस्य मूलस्थानीयम्। सत्यस्य पुष्पफलस्थानीयत्वे सति तद्विपरीतस्यानृतस्य मूलत्वं युक्तम्। तत्तथा मूलत्वे सति लोके यथा कश्चिद्वृक्षो भूमेरुत्खातः सन्नाविर्भूतमूलो भूत्वा प्रथमं शुष्यति पश्चादुद्वर्तते विनश्यति च। एवमेवानृतं वदन्पुरुषो वाग्वृक्षरूपमात्मानमाविर्मूलं करोति। मूलभूतस्यानृतवदनस्य परेषा-मग्रे प्रकटीकृतत्वात्। तेन पापेन स पुरुषः शुष्यति। सर्वैस्तिरस्कार्यत्वमेवास्य शोषः। अयमनृतवादी न तु प्रामाणिक इत्येवं सर्वे तिरस्कुर्वन्ति। स तादृशः पुरुष उद्वर्तते विनश्यति नरकं प्राप्नोतीत्यर्थः। तस्मात्कारणाज्जनतिरस्कारान्नरकाच्च भीतः पुमाननृतं न ब्रूयात्किन्त्वेते-नानृतेन निमित्तेन दयेत स्वात्मानं रक्षेत। प्रासङ्गिकं पुरुषार्थमनृतवदननिषेधं परिसमाप्य लौकिकव्यवहारोपन्यासमुखेन प्रकृतयोरोङ्कारनकारयोः सह ध्यानं प्रशंसितुं केवलमोङ्कारं लोक-व्यवहारे निन्दति परागिति। ओमिति यदेतदक्षरमस्ति तत्पराग्रिक्तं च। परमुत्कृष्टं जगत्कारणमखण्डैकरसं ब्रह्मतत्त्वमञ्चति गच्छति प्रतिपादयतीति पराक्। अत एव संसारा-द्बहिर्भूतं सद्रिक्तं संसारभोगशून्यम्। तत्तथा सति संसारी पुमान्स्वयमुदरं पुष्यन्यत्किञ्चि-त्स्वकीयं याचकाय पुरुषायोमिति ब्रूयात्स्वकीयकुटुम्बनिर्वाहमविचार्य याचकं प्रति त्वदभीष्टं तथैवास्तु त्वमेव स्वीकुर्वित्येवं यदि ब्रूयात्तत्तदानीमयं पुमानत्रैव लोकेऽस्मै गृहक्षेत्रादिभोगाय रिच्यते रिक्तो भोगशून्यो भवति। एकैकद्रव्यदाने यथा तद्भोगशून्यत्वं तथा स पुमान् यदि सर्वमपि स्वकीयं धनमोङ्कुर्यायाचकायाभ्यनुजानीयात्तदानीमात्मानं रिञ्च्यादिक्तं सर्वधन-शून्यं कुर्यात्। स तादृशो धनहीनः पुमान् भोगेभ्यो न पर्याप्तः स्यात्। केवलमोङ्कारं निन्दित्वा केवलं नकारमपि निन्दति अथेति। अथ केवलोङ्कारनिन्दानन्तरं केवलनकारो निन्द्यत इति शेषः। यदेतन्नेति निषेधकमक्षरमस्ति तदेतदभ्यात्तं पूर्णमात्मानं धनस्वामिन-

मभिलक्ष्य वर्तत इत्यध्यात्मं तस्मिन्वर्तमानं सदिदमक्षरं धनसम्पत्तिहेतुत्वात्पूर्णमित्युच्यते। यः पुमानत्यन्तलुब्धः सन्नर्थिने बलिभिक्षादिकं किमपि न प्रयच्छति किन्तु नेत्युच्चारयन्सर्वमपि याच्यमानं निषेधति तथाविधस्य लुब्धस्य धनमक्षीणं सत्स्वगृहे पूर्णमवतिष्ठते। स तादृशो लुब्धो यदि याचकाय किमप्यदत्त्वा सर्वं नेति ब्रूयात्तदानीमस्य पापिका कीर्त्तिर्जायते। अत्यन्तलुब्धोऽयं दुरात्मा धिगेनमित्येवं सर्वे निन्दन्ति। सा निन्दा पापरूपा कीर्त्तिरेनं पापात्मानं तत्रैव गृहे हन्यान्मारयेज्जीवन्नप्यसौ मृत एव। तथा च भगवतोक्तम्। सम्भावितस्य चाकीर्त्तिर्मरणादतिरिच्यत (गी० २-३४) इति। ननु धनस्य दानादानयोरुभयोरपि निन्दितत्वे का गतिः पुरुषस्येत्याशङ्क्याह तस्मादिति। यस्मादेकैकं निषिद्धं तस्मात्परित्यज्योभयं मिलित्वैवमनुष्ठेयम्। कथमित्याशङ्क्य स प्रकार उच्यते। संप्राप्तो वैश्वदेवान्ते सोऽतिथिरित्यादिशास्त्रसिद्धो यो दानकालस्तस्मिन्नेव दद्यात्। न त्वन्यस्मिन्काले। तत्तथा सत्योङ्काररूपं सत्यं निषेधकनकाररूपमनृतं च मिथुनीकरोति मिलित्वा युग्मं करोति। तयोर्दानप्रतिषेधयोः सत्यानृतयोर्मिथुनात्प्रजायत इह लोके निन्दारहितः प्रकृष्टो भवति। परलोके च भूयानुत्कृष्टजन्मा भवति। यथा लोक ओंकारनकारौ मिलितौ प्रशस्तौ तथाऽत्रापि मिलितौ ध्येयावित्यर्थः। मितादिपत्रविधस्य ध्यानमुक्त्वा केवलस्याकारस्य ध्यानं विधत्ते यो वा इति। पूर्वत्र स वा एष वाचः परमो विकारो यदेतन्महदुक्थमित्यभिहितं शस्त्रं यस्या वाचो विकारस्तां वाचं यः पुमान्वक्ष्यमाणप्रकारेणोपास्ते स पुमान्सम्प्रतिवित्सम्यगभिज्ञः। कोऽयं प्रकारः सोऽभिधीयते। अकार एव सर्ववागात्मकः सेयमकाररूपा वाङ् मातृकामन्त्रैः ककारादिभिर्मकारान्तैः स्पर्शैः शषसहैरूष्मभिश्च व्यज्यमाना सती नानाविधा बहुरूपा च भवति। पूर्वमेकस्य सत इदानीमनेकत्वं बहुत्वम्। तेषां च भेदानां परस्परवैलक्षण्यं नानारूपत्वम्। एक एवाकाशो यथा सूचीच्छिद्रगृहच्छिद्रमित्येवमुपाधिभेदाद्बहुत्वं प्राप्य न्यूनाधिकभावेन परस्परवैलक्षण्यमपि प्राप्नोति एवमेक एवाकारः कखगघेत्यादिभिरुपाधिभिरनेकत्वं प्राप्य परस्परमप्यघोषाद्यक्षरयुक्तश्चेति प्रतिपद्यते। तदेवमकारस्य ककारादिषु सर्वेष्वनुगतत्वाद्भेदप्रतीतेरौपाधिकत्वाच्च सर्ववागात्मकत्वं सिद्धम्। अकारस्य ध्यानमुक्त्वा तदीयध्वनिभेदयोर्ध्यानं विधत्ते तस्या इति। तस्यै पूर्वोक्ताया अकाररूपाया वाचो यदुपांशु यन्मन्दध्वनियुक्तमुच्चारणं स प्राण इति ध्यायेत्। अथानन्तरं यदुच्चध्वनियुक्तमुच्चारणं तच्छरीरमिति ध्यायेत्। यस्मान्मन्दोच्चारणस्य प्राणरूपत्वं तस्मात्तन्मन्दोच्चारणं तिरोभूतमिव तिरोहितमिव भवति। व्यवहितैः पुरुषैरश्रूयमाणत्वात्। लोके यद्यदशरीरं तत्तन्नेत्रेणादृश्यत्वात्तिरोहितमिव भवति। प्राणोऽप्यशरीरत्वात्तिरोभूत इति तद्रूपस्य मन्दध्वनेः परैरश्रवणं युक्तम्। पूर्वोक्तवैलक्षण्यार्थोऽथशब्दः। मन्दध्वनेर्विलक्षणो योऽयमुच्चध्वनिस्तच्छरीररूपं तस्माच्छरीररूपत्वात्तदुच्चध्वनियुक्तमुच्चारणमाविः

प्रकटं भूत्वा परैः श्रूयते । यस्माच्छरीरं परैर्दृश्यमानत्वादाविर्भूतं तस्माच्छरीररूपस्योक्थस्यने-राविर्भावो युक्तः ॥६॥

ऐतरेयारण्यकभाष्ये द्वितीयारण्यके तृतीयाध्याये षष्ठः खण्डः ।

॥ ५ ॥

३·१·१

प्राणविद्या मध्यमस्य ब्रह्मविद्योत्तमस्य च । पूर्वलोकाधमस्याथ संहितोपास्तिरीर्यते ॥ त्रिविधो विद्याधिकारी उत्तमो मध्यमोऽधमश्च । सर्वस्मात्संसाराद्विरक्त एकाग्रचित्तः सद्योमुक्तिकाम उत्तमस्तं प्रति आत्मा वा इदमेक एवाग्र आसीदित्यादिना ब्रह्मविद्योक्ता । हिरण्यगर्भप्राप्तिद्वारा क्रममुक्तिकामो मध्यमस्तं प्रति उक्थमुक्थमित्यादिना प्राणविद्योक्ता । यस्तु द्विविधां मुक्तिमकामयमानः प्रजापश्वादिकमाप्तुकामोऽधमस्तं प्रति संहितोपासनं तृतीयारण्यकेऽभिधीयते । तत्रोपासनं प्रतिजानीते अथात इति । अथ प्राणविद्याब्रह्मविद्ययोः कथनानन्तरं यतः कारणात्प्रबलया पाठवासनया युक्तस्य पाठसम्बन्धरहितयोः प्राणब्रह्मविद्ययोश्चित्तं न प्रविशत्यतः कारणात्संहितायाः पाठसम्बन्धिन्या उपनिषद्विद्योच्यत इति शेषः । उपनिषण्णमस्यां विद्यायां प्रजापश्वादिफलमुपनिषद् । तामेतां विद्यां विधत्ते पृथिवीति । अग्निमीळ इत्यत्राग्निमिति यो मकारः सोऽयं संहितायाः पूर्वरूपो वर्णः । ईळ इत्यत्र योऽयमीकारः सोऽयं संहिताया उत्तरो वर्णः । द्वयोर्वर्णयोर्नैरन्तर्येणोच्चारणं संहिता । परः सन्निकर्षः संहिता (पा० १-४-१०६) इति सूत्रितत्वात् । एतासु पूर्वोत्तरवर्णसंहितासु भूलोकद्युलोकवायूनां दृष्टिः कर्तव्या । यद्यपि पृथिव्यादीनां प्रथमनिर्दिष्टत्वात्प्रतीकत्वं प्राप्तं तथापि एवमेतां संहितां वेदेति संहिताया उपास्यत्वश्रवणात्पूर्ववर्णादीनां पृथिव्यादिदृष्ट्योपासनं गम्यते । यथा विष्णुदृष्ट्या शालग्रामोपास्तिस्तद्वत् । मण्डूकनाम्नो महर्षेः पुत्रो माण्डूकेयस्तस्य च माण्डूकेयस्य संहितायां वायुदृष्टिरेतन्मतम् । मक्षुनाम्नः कस्यचिन्महर्षेः पुत्रो माक्षव्यः । स चास्योपासनस्य सम्बन्धिन्यां संहितायामाकाशदृष्टिः कर्तव्येति वेदयाञ्चक्रे विज्ञातवान् । माक्षव्यस्य महर्षेरभिप्रायं दर्शयति स हेति । स ह सोऽपि वायुरविपरिहतो विशेषेण परिहतो न भवति । वायोराकाशवर्तित्वेनाकाश एवान्तर्भावात् । आकाशस्तु वायौ नान्तर्भवति । वायुकारणत्वादधिकव्याप्तिमत्त्वाच्च । अतोऽस्य मण्डूकस्य पुत्रेण सह मे मम न समगात् । दर्शनं न सङ्गतं मदीयमतं नैकविधं भवति । मन्मते वायोरन्तर्भावेन वाय्वाकाशोभयदृष्टिः संहितायां सिध्यति । तन्मते त्वाकाशस्यानन्तर्भूतत्वाद्वायुमात्रदृष्टिरेवातो मन्मतं श्रेष्ठमिति मेने निश्चितवान् । ततो

वाय्वाकाशयोर्विकल्पेन ध्यानं न भवति किन्तु वायुध्यानं पूर्वपक्षे आकाशध्यानं सिद्धान्त इत्यर्थः। इदानीं मतान्तरानुसरणेन तयोस्तुल्यबलत्वमभिप्रेत्य विकल्पेन ध्यानं दर्शयति। समाने वा इति। अगस्त्यस्य पुत्र आगस्त्यो महर्षिरित्थं मेने निश्चितवान्। कथमिति तदुच्यते। समाने वै यदेतद्वायुः संहितेति माण्डूकेयस्य मतं यच्चाकाशः संहितेति माक्षव्यस्य मतं ते उभे अपि तुल्यबले एव। वायोराकाशवर्तित्वमप्रयोजकम्। न हि वस्तूनां स्वभावानुसारेण किञ्चिदुपासनं प्रवर्तते किन्तु वचनानुसारेण। वचनं तु वायुः संहितेति पक्षे आकाशः संहितेति पक्षे च समानम्। तत्तस्मात्कारणात्परिहृत आकाशपक्षे वायोरनन्तर्भावाद्वायुः परित्यक्तश्च। तथा सति वायुश्चाकाशश्चेत्येतन्मतद्वयं समानमेव भवति। तस्माद्विकल्पेन संहितायां वाय्वाकाशयोर्दृष्टिः कर्तव्येति तत्र मुख्यः सिद्धान्तः। पूर्वोत्तरवर्णसंहितासु पृथिव्यादिध्यानं यदुक्तं सोऽयमुपासनस्य पूर्वो भागः। वक्ष्यमाणस्तूत्तरो भागः। तदुभयं बुद्धिसौकर्याय विभजते इत्यधीति। इतिशब्दः पूर्वोक्तं पृथिवी पूर्वरूपमित्यादिकं परामृशति। तत्राधिदैवतं पृथिव्यादिकं दैवतमधिकृत्य वर्तमानमुपासनम्। अथानन्तरमात्मानं वागादिसङ्घातरूपमधिकृत्य वर्तत इत्यध्यात्ममुपासनमुच्यत इति शेषः। तदेतदुपासनं विधत्ते वागिति। पूर्ववर्णे वाग्दृष्टिरुत्तरवर्णे मनोदृष्टिस्तदुभयसंश्लेषणे प्राणदृष्टिरिति माण्डूकेयस्य मतम्। स च माण्डूकेयः शूरवीरः। उपासनायां निरन्तरं प्रवर्तमानाः शूरास्तैः पुरुषैर्बहिःप्रवर्तमानानामिन्द्रियाणां जितत्वात्। तेषु शूरेषु वीरोऽत्यन्तपराक्रमयुक्तः। उपास्यवस्तुसाक्षात्कारवानित्यर्थः। अत्रैव मतान्तरमाह अथेति। अथ माण्डूकेयोक्त्यनन्तरमस्य माण्डूकेयस्य ज्येष्ठः पुत्रो मनसो वाचश्च पूर्वोक्तविपर्ययमाह। तत्रोपपत्तिश्चावोचत्। लोके विवक्षुः सर्वः पुरुष इदं वक्ष्यामीत्येवं प्रथमं संकल्पयति पश्चादुच्चारयति। तस्माद्वस्तुतत्त्वमनुसृत्य पूर्ववर्णे मनोदृष्टिरुत्तरवर्णे वाग्दृष्टिश्च कर्तव्या। या तु वर्णयोः संहिता तस्यां पूर्वोक्तः प्राण एव ध्यातव्यो न तु तत्र कश्चिन्मतभेदोऽस्तीत्येवं ज्येष्ठः पुत्र उक्तवान्। एवं सति सोपपत्तिकत्वादयमेव सिद्धान्त इति प्रतिभासते। तत्र श्रुतिर्मतद्वयस्य समानत्वमभिप्रेत्य विकल्पमेव सिद्धान्तयति समानमिति। न ह्युपासना वस्तुतत्त्वमपेक्षते किं तर्हि यथावचनमनुष्ठेयेति न्यायः पूर्वमेवोक्तः। तस्माद्यः पिता माण्डूकेयो यश्च पुत्रस्तदीयो ज्येष्ठ एतयोरुभयोर्मतं समानम्। तस्मान्मनोदृष्टिवाग्दृष्ट्योः पूर्वोत्तरभावित्वं विकल्प्यते। अधिदैवतमध्यात्मं च यदुपासनमुक्तं तत्प्रशंसति। स एष इति। यः पूर्वोक्तपृथिव्यादिध्यानरूपः फलहेतुः स एषोऽश्वयुक्तरथसमानः। स च प्रष्टिवाहनः[1] ईषयोर्दीर्घकाष्ठयोर्मध्ये कंचित्प्रबलमश्वं संयोज्य तयोरीषयोर्बहिरुभयोः पार्श्वयोर्द्वावश्वौ मध्यमाश्वस्यादान्तस्य नियामकौ संयोज्येते सोऽयमश्वत्रयोपेतो देवानां रथः। तथा

तैत्तिरीया वाजपेयप्रकरणे समामनन्ति प्रष्टिवाहनं युनक्ति । प्रष्टिवाही वै देवरथः । देवरथमेवास्मै युनक्ति । इति । यथा देवरथोऽश्वत्रयेण युक्त एवमयमप्युपास्तिरथो मनोवाक्प्राणैस्त्रिभिर्ध्येयविशेषैः संयुक्तः । तस्मात्प्रष्टिवाहिरथवत्सहसा फलप्रापणे समर्थ इत्यर्थः । इदानीं फलं दर्शयति स य इति । यः पुमानेवमुक्तप्रकारेण विहितां पृथिवी पूर्वरूपमित्यादिकां देवतारूपां संहितां वेदोपास्ते । यद्यपि विदिधातुः प्रमाणजन्यज्ञानवाची तथाप्युपास्तिक्रियामन्तरेण फलासम्भवान्मानसत्वसाम्येन तां क्रियामुपलक्षयति । स उपासकः । प्रजादिभिः सन्धीयते संयोज्यते । प्रजा पुत्रपौत्रादिरूपा । पशवो गवाश्वादयः । यशो धनदानादिकीर्त्तिः । ब्रह्मवर्चसं श्रुताध्ययनसंपत्तिः । तदेतत्सर्वं चित्रान्यायेन प्रतिबन्धाभावे सति ऐहिकं फलम् । चित्रया यजेत पशुकाम इत्यत्र पशुसंपादकदृष्टप्रयत्नसद्भावे सति पशुप्राप्तिरैहिकी अन्यथाऽऽमुष्मिकीति पूर्वमीमांसायां निर्णीतम् । तद्वदत्रापि प्रजादिफलमैहिकमामुष्मिकञ्चेत्यनियतम् । स्वर्गस्त्वामुष्मिक एव । सर्वमायुरेतीत्यनेनापमृत्युराहित्यं विवक्षितम् । उक्तोपासनायाः सांप्रदायिकत्वं दर्शयति इति न्विति । इत्येवमुक्ता पृथिवी पूर्वरूपमित्याद्युपासना मण्डूकाख्यस्य महर्षेः पुत्राणां सम्प्रदायाद्भुमावागता ॥१॥

ऐतरेयारण्यकभाष्ये तृतीयारण्यके प्रथमाध्याये प्रथमः खण्डः ।

॥ ६ ॥

३·१·२

सम्प्रदायान्तरोक्तिपुरस्सरमुपासनान्तरं प्रतिजानीते अथेति । माण्डूकेयाभिमतोपासनकथनानन्तरं शाकल्यस्याभिमतोपासनमुच्यत इति शेषः । तत्रोपासनीयं स्वरूपं दर्शयति पृथिवीति । पूर्वोत्तरवर्णयोर्भूलोकद्युलोकध्यानम् । सन्धिवर्णयोः संहिता तत्र वृष्टिध्यानम् । संहिताया हेतुः सन्धाता । तद्यथा इको यणचि (पा० ६·१·७७) इति सूत्र इकारस्य स्थाने यकारादेशविधावच्परत्वं निमित्तम् । तादृशे सन्धिनिमित्ते पर्जन्यध्यानं कर्तव्यम् । वृष्टेः सन्धित्वं पर्जन्यस्य सन्धातृत्वं च लोकव्यवहारेण विशदयति तदुतेति । उतापीतिनिपातसमुदायः समुच्चयवाची लोकप्रसिद्धिं समुच्चिनोति । तत्तस्मिन् वृष्टिः सन्धिः पर्जन्यः सन्धातेत्यस्मिन्नर्थे लोकप्रसिद्धिरपि विद्यत इत्यर्थः । कासौ प्रसिद्धिरिति साभिधीयते यत्र यदैतत्पर्जन्यः स्वरूपं बलवदत्यन्तं प्रबलं भूत्वानुदृहन्नुदृहणं वृष्ट्युपसंहारमकुर्वन् अहोरात्रे सन्दधद्रात्रावहनि च विच्छेदाभावलक्षणं सन्धानं कुर्वन्वर्षति तदानीं वृष्टेर्द्युलोकभूलोकसन्धित्वं पर्जन्यस्य सन्धातृत्वञ्च विस्पष्टं प्रतिभासत इति शेषः । न केवलं प्रतिभासः किन्तु लौकिकानामुक्तिरप्य-

स्तीति दर्शयति द्यावेति। अनया पर्जन्यसम्पादितया निरन्तरतीव्रवृष्ट्या द्यौश्च पृथिवी चेत्युभे सन्धानं परस्परैक्यं प्राप्तवत्याविव्येवं वाक्यमपि लौकिका आहुः। अतोऽनुभवा-ल्लौकिकोक्त्या च वृष्टेः सन्धित्वं पर्जन्यस्य सन्धातृत्वं प्रसिद्धम्। बुद्धिसौकर्यार्थमुक्तवक्ष्य-माणावर्थौ विभज्य दर्शयति इति न्विति। इति नु उक्तप्रकारमेव। पृथिव्यादिकमित्यर्थः। पृथिव्यादिदेवतानामिव स्वशरीरावयवानामपि ध्यानं दर्शयति पुरुष इति। लोके यः पुरुषो विद्यते स सर्वोऽप्यान्दमण्डसदृशम्। वर्णविकारश्छान्दसः। यथा ब्रह्माण्डस्याधः-कपालमूर्ध्वकपालं चेति द्वे बिदले द्वौ परस्परविपरीतभागौ तथा पुरुषेऽपि पादावारभ्याधरो-ष्ठपर्यन्तमेकं विदलमुत्तरोष्ठमारभ्य मूर्द्धपर्यन्तमपरं विदलं यथा भिन्नस्य वेणोर्दलद्वयं तद्वत्। बिदले इति बकारश्छान्दसः। इत्येवमण्डसादृश्यमभिज्ञाः पुरुषा आहुः। तस्य दलद्वयो-पेतस्य शरीरस्येदमेवाधरोष्ठपर्यन्तं पृथिव्याः स्वरूपम्। इदन्तूत्तरोष्ठादिकं दिवः स्वरूपं तत्तयोरधरोत्तरदलयोरन्तरेण मध्येऽयमाकाशोऽस्माभिर्मुखे दृश्यमानं छिद्रं वर्तते यथा द्यावापृथिव्योर्मध्य आकाशस्तद्वत्। तस्मिन्ह्यस्मिन्पूर्वोक्त एव दृश्यमाने मुखच्छिद्रे प्राण आश्रितः। यथा बाह्ये प्रसिद्धाकाशे वायुराश्रितस्तद्वत्। यथा च बाह्ये ज्योतिस्त्रयमेवं शरीरेऽपि ज्योतिस्त्रयमस्ति। अनेन प्रकारेण शरीरस्याधरोत्तरभागौ पृथिवीरूपेण द्युलोक-रूपेण च ध्यातव्यौ। वायुश्च प्राणरूपेण ध्येयः। ज्योतिस्त्रयं च बहिर्वदन्तरपि ध्येय-मित्यर्थः। तच्च स्वयं दर्शयति यथासाविति। लोकत्रयगतादित्यविद्युदग्निवच्चक्षुर्हृदयरेतांसि द्रष्टव्यानि। आध्यात्मिकमुपासनं प्रतिपाद्योपसंहरति एवमिति। उक्तेनैव प्रकारेण लोकत्रय-सदृशं पुरुषशरीरमनुक्रमेण सम्पाद्येदमेवाधरोष्ठपर्यन्तं पृथिव्याः स्वरूपमिदं तूत्तरोष्ठादिकं दिवः स्वरूपमित्येवं शाकल्य आह। उपासनस्य फलं दर्शयति। स य इति। पूर्ववद्व्याख्येयम् ॥२॥

ऐतरेयारण्यकभाष्ये तृतीयारण्यके प्रथमाध्याये द्वितीयः खण्डः।

॥ ७ ॥

३·१·५

उक्तासु वक्ष्यमाणासु च संहितोपासनासु सर्वासु श्रोतुर्बुद्धिसमाधानार्थमुपास्यविषयं सम्यक् परिशोधयितुं प्रस्तौति अथेति। अथ कासांचित्संहितोपासनानां कथनोत्तरं निर्भुज-शब्दाभिधेयाः संहिता वक्त्रे मुखे येषां संहितोपासकानां ते महर्षयो निर्भुजवक्त्रास्ते च विषयसंशोधनार्थं वक्ष्यमाणं वाक्यमाहुः। स खलु तदीयं वाक्यं दर्शयति पूर्वमिति। अस्याः संहितोपनिषदः प्रारम्भे पृथिवी पूर्वरूपं द्यौरुत्तररूपमित्यादौ पूर्वरूपमित्यनेन पूर्वमक्षरं

विवक्षितम् । उत्तररूपमित्यनेनोत्तरमक्षरं विवक्षितम् । तयोरक्षरयोर्मध्ये योऽवकाशः स संहिताशब्देन विवक्षितः । एवमुपास्यनिश्चयार्थं पूर्वरूपादिशब्दान्व्याख्याय प्ररोचनार्थं पूर्वमुक्तं तदुपासनफलमनुस्मारयति । स य इति । योऽवकाश इति यदुक्तं तत्र कश्चिद्विशेषं दर्शयति अथेति । ह्रस्वो वामनः स्वल्पदेहः । स च स्वाभिज्ञत्वप्रकटनार्थं वयमिति पूजारूपं बहुवचनं प्रयुङ्क्ते । स चैवमाह । पूर्वोत्तररूपयोर्यद्व्याख्यानं तत्तादृशमेव । अवकाशः संहितेति यदुक्तं तत्रास्ति कश्चिद्विशेषः । न केवलमवकाशमात्रं संहितेति किन्तु येनावकाशेन सन्धिं पूर्वोत्तरयोः सन्निकर्षमध्येता विवर्तयति विशेषेण सम्पादयति येन चावकाशेन स्वरमस्वरञ्च विविच्य जानाति । अग्निमीळ इत्यत्रोत्तरपदे पदकालवदनुदात्तस्वरो न भवति किन्तु स्वरितप्रचयौ स्वरावित्येतादृशो विवेकः । येन चावकाशेन मात्रामात्रं च विभजते । तत्रैतत्सत्यमङ्गिर इत्यत्र पदकाले वकारस्योपरि ह्रस्वोऽकारो दृश्यते संहितायां सा मात्रा न भवति किन्त्वेकारो मात्रे इत्ययं विभागः । एतैर्विशेषणैर्विशिष्टोऽवकाशः संहिता न त्ववकाशमात्रमिति । पूर्ववत्फलमनुस्मारयति स य इति । पूर्ववद्व्याख्येयम् । मतान्तरं दर्शयति अथेति । अस्य ह्रस्वो माण्डूकेयस्य मध्यमः पुत्रः कश्चिदस्ति तस्य माता प्रातिबोधी तत्पुत्रो महर्षिरिमे पूर्वोत्तरे अविकर्षन्परस्परमत्यन्तविश्लेषमकुर्वन्ननेकीकुर्वन्नत्यन्तमैक्यमप्यकुर्वन्यथावर्णमाह तं तं वर्णमनतिक्रम्योच्चारयति । तत्रेदित्यत्र पूर्वपदान्त्यमकारमुत्तरपदादिमिकारं संहिताकाले यदि पृथगुच्चारयेत्तदानीमत्यन्तविश्लेषो भवेत् । यदि त्विकारमन्तर्भाव्य केवलमकारमुच्चारयेत्तदानीमत्यन्तमेकीकरणं भवति । तदुभयं परित्यज्य यथाशास्त्रमेकारमसावुच्चारयति । तत्तथा सति पूर्वरूपोत्तररूपयोर्मध्ये यासौ मात्रोच्चारणविशेषरूपा सन्धिविज्ञपनी शास्त्रीयं सन्धिं विज्ञापयति तत्साम समत्वं भवति । अतिद्रुतातिविलम्बितयोरभावात्सामैव तत्समत्वमेव संहितामहं मन्ये इति मध्यमपुत्रस्य मतम् । अस्मिन्नर्थे कश्चिन्मन्त्रमुदाहरति तदपीति । स च मन्त्रः संहितायामेवमाम्नातः । मा नः स्तेनेभ्यो ये अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः । आ देवानामोहते वि व्रयो हृदि बृहस्पते न परः साम्नो विदुरिति ( ऋ० सं० २-२४-१६ ) । हे बृहस्पते नोऽस्मान्मन्त्ररूपान्स्तेनेभ्यो विद्याचौर्यपरेभ्यो मा दा इत्यध्याहारः । तादृशेभ्यो मन्त्रोपदेशं मा कुर्वित्यर्थः । कीदृशा विद्याचौरा इत्याशङ्क्योच्यते ये शिष्या अभिद्रुहस्पदे सर्वतो गुरुद्रोहस्य स्थाने वर्तमाना निरामिणो मायया गुरुमभिमुखीकृत्य व्यवहारे बाह्ये नितरां रमयन्तीति निरामिणः । एतेऽनुकूला इति गुरोर्भ्रान्तिं जनयन्तीत्यर्थः । ते च स्वहृदये रिपवः शत्रवः सन्तोऽन्नेषु भोग्येषु दृष्टार्थेष्वेव जागृधुरभिकाङ्क्षां कुर्वन्ति । तादृशेभ्यः स्तेनेभ्यो मन्त्रात्मकानस्मान्मा देहि । इति मन्त्रद्रष्टॄणां वचनमेतत् । तर्हि केभ्यो मन्त्रा दातव्या इति चेदुच्यते ये श्रद्धालवो विव्रयः सम्भजनकर्तारः

सन्तो हृदि स्वचित्ते देवानामिन्द्रादीनां यागादिरूपं सम्बन्धमा समन्तादोहते वितर्कयन्ति। सर्वदा यागं कर्तुं विचारयन्ति। तादृशेभ्यो मन्त्रान्देहीत्यर्थः। ते च साम्नः समत्वादार्जवात्परः श्रेयान्सेतुर्नास्तीत्येवं विदुर्जानन्ति। अतस्ते मन्त्रोपदेशयोग्याः। अत्र यथा शिष्याणां व्यवहारे समत्वं प्रशस्तमेवं संहितायामपि समात्रोचारणं प्रशस्तमित्यर्थः। एतस्य मन्त्रस्य प्रदर्शनार्थं चतुर्थं पादं पठति। बृहस्पत इति। पूर्ववत्फलवाक्यमनुस्मारयति स य इति ॥५॥

ऐतरेयारण्यकभाष्ये तृतीयारण्यके प्रथमाध्याये पञ्चमः खण्डः।

# ८। तैत्तिरीयारण्यकभाष्यम्

॥ १ ॥

१.२

कल्पः। (बौ० श्रौ० १६-१०) स्मृतिः प्रत्यक्षमैतिह्यमित्यष्टौ मध्ये शुक्रं ते अन्यदिति चेति। उपदध्यादित्यनुवर्तते। तत्र प्रथमामाह स्मृतिरिति। स्मृतिरनुमेयश्रुतिमूलं मन्वादिशास्त्रम्। प्रत्यक्षं सर्वपुरुषाणां श्रोत्रेण ग्राह्यं वेदवाक्यञ्च। ऐतिह्यमितिहासपुराणमहाभारतब्राह्मणादिकम्। अनुमानं शिष्टाचारः। तेन हि मूलभूतश्रुतिस्मृतिलक्षणं प्रमाणमनुमीयते। तदेतत्स्मृत्यादिचतुष्टयमवगतिकारणभूतं प्रमाणम्। एतैः स्मृत्यादिभिः सर्वैरेव प्रमाणैरादित्यमण्डलं विधास्यते प्रमीयते यादृशमिदं मण्डलं भवति यथा च प्रवर्तते यथा वा मन्वन्तरादिभेदभिन्नं कालं प्रवर्तयति यथा चोदकवृष्ट्यादिना विश्वमुत्पादयति। तत्सर्वं स्मृत्यादिप्रमाणसिद्धम्। हेऽविष्टके त्वं तथाविधमण्डलस्वरूपासीति स्तुतिः॥ अथ द्वितीयामाह सूर्य इति। अयं सूर्यो जगदादौ मरीचिं सर्वव्यवहारहेतुभूतं कञ्चिद्रश्मिमादत्ते। कुत्रादत्त इति तदुच्यते सर्वस्माद्भुवनादध्नि सर्वस्य भूतजातस्योपरि रसवीर्यविकारादिभिः सर्वभूतजातमनुग्रहीतुमित्यर्थः। तस्या मरीचेः पाकविशेषेण तत्कृतेन पदार्थपरिपाकतारतम्येन कालविशेषणमस्माभिः स्मृतं भवति। प्रथमं तावद्बीजं मरीचिकृतेन केनचित्पाकेनाङ्कुरः पाकान्तरेण काण्डी भवति तच्च काण्डं पाकान्तरेण पत्रपुष्पाण्युत्पादयति तच्च पुष्पं पाकान्तरेण फलीभवति। एवं कालकृततत्तत्पदार्थावस्था दृष्टा। तदुचिताः क्षणमुहूर्तदिवसपक्षमासादिरूपाः कालविशेषा अस्माभिर्निश्चीयन्ते। ईदृशकालरूपा त्वमसीतीष्टका-

स्तुतिः । एवं सर्वत्र द्रष्टव्यम् ॥ अथ तृतीयामाह नदीवेति । अत्र कालस्य दृष्टान्तोऽभिधीयते । प्रभवत्युत्पद्यते जलमस्मादिति गोदावर्याद्युत्पत्तिदेशः प्रभवः । स च निरन्तरजलदर्शनादक्षय्यः । तस्मादक्षय्यात्प्रभवादुत्पन्ना महानदी स्यन्दते प्रवहति । सा नदी यादृशी तादृशोऽयं संवत्सरः । यथा च तां महानदीमन्याः क्षुद्रा नद्योऽभिसमायन्त्याभिमुख्येन संयोगं प्राप्नुवन्ति । सा च महानदी बहुक्षुद्रनदीमेलनादुरुर्विस्तीर्णा सती न निवर्तते कदाचिदपि न शुष्यति किन्तु निरन्तरं प्रवहति ॥ अथ चतुर्थीमाह । एवमिति । अत्र दार्ष्टान्तिकोऽभिधीयते । यथा दृष्टान्ते क्षुद्रा नद्यः सर्वा महानदीमेकामभिसमायन्ति एवमेव नानासमुत्थाना नानासमाकारा अणुशश्च महच्छश्च क्षणमुहूर्तादिरूपाः क्षुद्रकालाश्च दिवसपक्षादिरूपा महाकालाश्च संवत्सरं श्रिताः । ते क्षुद्रा महान्तश्च सर्वे समवयन्ति तम् । रेफस्य छान्दसत्वात्प्राप्नुवन्तीत्यर्थः ॥ अथ पञ्चमीमाह । स तैरिति । स च संवत्सरस्तैरणुभिर्महद्भिश्च कालावयवैः सर्वैः सम्यगाविष्ट उरुर्विस्तीर्णः सन्न निवर्तते कदाचिदपि न विच्छिद्यते । किन्तु प्रभवविभवादिरूपेणानुवर्तत एव । तस्मादधिसंवत्सरं संवत्सरस्योपरि सर्वं कालाधीनं जगदाश्रितमिति विद्यात् । लक्षणे काललक्षणे निरूप्यमाणे सति तदेव संवत्सररूपमेव व्यावहारिककालस्य तत्त्वमवगम्यत इति शेषः ॥ अथ षष्ठीमाह । अणुभिश्च स्वल्पैः क्षणमुहूर्तादिभिरपि महद्भिश्च दिवसपक्षादिभिरप्यवयवैः समारूढः सम्यक् प्राप्तः संवत्सरः प्रत्यक्षेण प्रदृश्यते आविपालगोपालं हि सार्वजनीनेनानुभवेन व्यवह्रियमाणत्वात् । अधिसत्त्वः सत्त्वात्सर्वप्राणिनामस्तित्वेन प्रतीयमानात्संवत्सररूपात्कालादधिको नित्यो निरवयवः परमात्मरूपो व्यावहारिककालस्याप्युत्पादकः कालात्माधिसत्त्वः । योऽयं शास्त्रदृष्टिमन्तरेण न प्रदृश्यते ॥ अथ सप्तमीमाह । पटर इति । योऽयमधिसत्त्वनामको व्यावहारिककालस्याप्युत्पादकः परमात्मरूपश्चैतन्यात्मकः कालोऽस्ति । स कालकाल (श्वे० उ० ६-१६) इति श्रुत्यन्तरात् । तस्य कालस्य शास्त्रदृष्टिवर्जितैरदर्शने कारणमुच्यते । पटो वस्त्रसदृशश्चर्मविशेषोऽस्यास्तीति पटरः । विक्लिधो विविधक्लेदनयुक्तः । पिङ्गः पिङ्गलवर्णः । एतच्छुक्लकृष्णादेरप्युपलक्षणम् । एतैस्सर्वैर्विशेषणैर्मांसमयोऽक्षिगोलकविशेषो विभज्यते । अस्ति हि तस्य पक्ष्मफलकाख्यश्चर्मखण्डः पटसदृशः । विक्लेदनमप्यस्ति यदा तदा चक्षुषो जलस्रवणात् । पिङ्गलः शुक्लादिवर्णः स्पष्ट एव । तादृशं यदक्षिगोलकमेतदेव वरुणस्य पारमार्थिककालतत्त्वावरकस्य लक्षणं स्वरूपं वरुणलक्षणम् । मांसदृष्टिरेव तत्त्वविपर्यां शास्त्रदृष्टिमावृणोतीत्यर्थः । तत्र यस्यां मांसदृष्टावेतज्जगत्प्रतीयते । तत्र क्षणो मुहूर्तो दिवस इत्यादिरूपभेदेन कालभेदानां सहस्रं नीयते व्यवह्रियतेऽवगम्यत इत्यर्थः ॥ अथाष्टमीमाह । एकमिति । एकमेवास्य व्यावहारिककालस्य शिरः संवत्सर एव शिरोवदुत्तमावयवस्थानीयः ।

मुखे तु नाना मुखस्थानीये दक्षिणोत्तरायणे द्विविधे। यच्छिरःस्थानीयस्य संवत्सरस्यैकत्वं यच्च मुखस्थानीययोर्दक्षिणोत्तरायणयोर्द्वित्वं तत्कृत्स्नमपि ऋतुलक्षणमृतूनां ज्ञापकम्। सति हि संवत्सरे ततश्च तदंशयोर्दक्षिणोत्तरायणयोः पश्चात्तदंशत्वेनर्तवो ज्ञातुं शक्यन्ते। उभयतस्तयोरुभयोर्मुखस्थानीययोरयनयोः सप्तेन्द्रियाणि सप्तसङ्ख्याकेन्द्रियाधारशीर्षण्यच्छिद्रयुक्तानि शरीराण्युत्पद्यन्ते। तदेवं शास्त्रदृष्टिवर्जितानामेकः संवत्सरो द्वे अयने तदवयवा ऋतवस्तेषु च सर्वेषु कालेषु प्राणिशरीराण्युत्पद्यन्त इत्येवं भ्रान्तो व्यवहारः प्रवर्तते। परमार्थतस्तु शास्त्रदृष्ट्या पर्यालोच्यमानो जल्पितमेव विद्यते संवत्सरायनादिनाममात्रमुपचीयते न त्वभिधेयः कश्चिदर्थोऽस्ति। अत एवोपनिषत्सु वाचारम्भणं विकारो नामधेयम् (छा० उ० ६-१-४)। नेह नानास्ति किञ्चन (बृ० उ० ४-४-१६)। मायामात्रमिदं द्वैतमिति व्यवहारस्य मिथ्यात्वं बहुशश्चाम्नायते। एवमष्टौ मन्त्रा अभिहिताः॥ अथ ब्राह्मणमुच्यते शुक्लकृष्णे इति। संवत्सरस्य व्यावहारिकस्य मुख्यस्य कालस्य दक्षिणवामपार्श्वस्थानीययोरुभयोः शुक्लकृष्णे तथाविधवर्णयुक्ते अहोरात्रे विद्येते। तस्यैतस्यार्थस्य प्रतिपादिका काचिदृग्विद्यते। अथ तामृचमाह शुक्रमिति। हे पूषञ्जगतः पोषक संवत्सर ते तवांशरूपं शुक्रं श्वेतवर्णमन्यदहराख्यं वस्तु पृथगेवास्ति। तथा ते तव यजतं यजनीयं निशितायां निर्वपेदित्यादियागोपलक्षितं रात्रिरूपमन्यत्पृथगेवास्ति। तदेवं विषुरूपे परस्परविलक्षणरूपे अहनी अहोरात्रे वर्तेते। तयोर्मध्ये द्यौरिव त्वमसि। तयोः प्रवर्तयिता वर्तसे। हे स्वधावोऽन्नवन्संवत्सर विश्वा मायाः सर्वाः पक्षमासादिकल्पितकालावयवाकृतीरवसि पालयसे। हे पूषन्निह कर्मणि ते तव रातिर्भद्रास्तु। फलप्रदानं समीचीनमस्तु। इत्यनेन मन्त्रेण पूर्वमन्त्रवदुपधानं कल्प एवोदाहृतम्। अथ ब्राह्मणमुच्यते नात्रेति। अस्मिन्ब्राह्मणे पारमार्थिकतत्त्वं व्यावहारिककालश्च विविच्य प्रदर्श्यते। अत्र पारमार्थिकतत्त्वे भुवनं भूतजातं नास्ति। तथा सति सर्वस्माद्भूतादधीति यदुक्तं तन्नोपपन्नम्। न वा पूषा कश्चिद्देवोऽस्ति तेन भद्रा ते पूषन्नित्येतदयुक्तम्। नाप्यादित्यः कश्चिदस्ति तस्मादेतैरादित्यमण्डलमित्येतन्न युक्तम्। किं तर्हि विद्यत इति चेदुच्यते संवत्सर एव निरस्तसमस्तक्षणमुहूर्तावयवविशेषोऽखण्ड एकाकारः कालतत्त्वमेव विद्यते। तर्हि तथाविध एव नित्यो निरवयवः संवत्सर एव परमार्थभूतः प्राणिभिरवबुध्यतामिति चेत्। मैवम्। प्रत्यक्षेण हि लोकसिद्धेन सर्वो जन्तुः प्रियतममेव रूपं विन्देन्न तु वस्तुतत्त्वम्। किं तर्हि प्रियतममिति चेत्तदुच्यते। क्षणमुहूर्तदिवसपक्षाद्यात्मकं काल्पनिकं संवत्सरे यद्रूपमेतदेव शास्त्रदृष्टिरहितानां प्रियतमम्। अस्य यजमानस्य योऽयमिष्टकोपधानपूर्वकः क्रतुरुत्पत्स्यमानो महानधिकोऽर्थः फलहेतुत्वेन पुरुषार्थो भवति। तमेवाहरणमाहर्तव्यमनुष्ठेयमिष्टकोपधानपूर्वकं कर्तुं दयाच्छिष्येभ्य उपदिशेत्। उपदेशप्रकार एवेदं पुण्यं कुरुष्वेति वाक्येन

स्पष्टीक्रियते। नात्र भुवनमित्यादि परमार्थतत्त्वं नोपदिशेत्। यद्यपि तत्त्वमेवोत्तमं तथाऽपि विवेकाभावान्नाद उपदेशार्हमित्यभिप्रायः ॥२॥

कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये प्रथमप्रपाठके द्वितीयोऽनुवाकः।

॥ २ ॥

१.७

कल्पः। आरोग इत्यष्टौ पदशो यत्ते शिल्पमिति चेति (बौ० श्रौ० १६-१०)। तत्र ब्राह्मणमारोग इत्यादिपदप्रतिपादिकामृचमुदाहरति। आरोग इति। आरोगादीनि विभासान्तानि सप्तपदानि सप्तानां सूर्यविशेषाणां नामधेयानि। ते सप्तापि सूर्या अस्मै लोकार्थं दिवमाकाशमापतन्ति। सर्वतः प्रकाशयन्ति। किं कुर्वन्त ऊर्जं दुहाना वृष्टिद्वारेण क्षीरादिरसं संपादयन्तः। अनपस्फुरन्तः प्राणिनां प्रातिकूल्येन प्रकाशनमपस्फुरणं तदकुर्वन्तः। अनुकूलमेव प्रकाशनं सर्वदा कुर्वन्तीत्यर्थः। श्रौत इतिशब्द उपधानप्रदर्शनार्थः। उदाहृतायामस्यामृचि उक्तैरारोगादिनामभिः सप्तभिरिष्टका उपदध्यादित्यर्थः। आरोगस्तया देवतयाङ्गिरस्वद् ध्रुवासीदेति एवमुपधानमन्त्रा उन्नेयाः। अथाष्टमं नामधेयं दर्शयति कश्यप इति। पूर्वोक्तारोगादिसप्तसूर्यापेक्षया योऽयमष्टमः सूर्यस्तस्य कश्यप इति नामधेयम्। तेन नाम्नेष्टकामुपदध्यात्। स च कश्यपो मेरुपर्वतं न कदाचिदपि जहाति परित्यजति। मेरुस्थानमेव सर्वदा प्रकाशं करोति। तस्य कश्यपस्य प्रतिपादिका काचिदृग्विद्यते। अथ तामृचं दर्शयति यत्र इति। हे कश्यपाष्टमसूर्य यत्ते तव शिल्पं जगत्प्रकाशलक्षणं चित्रं कर्म यस्मिन्स्वकीये प्रकाशरूपे चित्रकर्मण्यारोगादयस्ते सप्त सूर्याः साकमर्पितास्त्वया सह स्थापितास्तस्मिञ्छिल्पे प्रकाशलक्षण इमं यजमानं राजानं दीप्तियुक्तं कृत्वाधिविश्रय सर्वेषामुपरि विशिष्टत्वेन स्थापय। कीदृशं शिल्पं रोचनावत्प्रकाशयुक्तम्। इन्द्रियावदिन्द्रियसामर्थ्ययुक्तम्। पुष्कलं संपूर्णम्। चित्रभानु विविधरश्मियुक्तम्। इत्येषा कश्यपप्रतिपादिकाऽभिहिता। कश्यपस्य शिल्पे सप्तसूर्याणामर्पितत्वं स्पष्टीकरोति ते अस्मा इति। ते सर्वे सप्तापि सूर्या अस्मै जगत्प्रकाशनार्थं कश्यपात्सकाशाज्ज्योतिर्लभन्ते। यद्यपि सूर्याः पूर्वमेव ज्योतिष्मन्तस्तथापि तान्सूर्यान्सोमो देवः कश्यपात्सकाशादधिनिर्धमत्यधिकत्वेन निस्तमस्का यथा भवन्ति तथा शोधयति। सोमो हि तानाहूय कश्यपसकाशं प्रापितवान्। तस्य कश्यपस्यानुग्रहादेतेषां प्रकाशाधिक्यं सम्पन्नमित्यर्थः। भ्रस्तेत्यादिस्तत्र दृष्टान्तः। रेफस्य व्यत्यये सति भस्त्राशब्दो धमनसाधनमाचष्टे। यथा चर्ममय्या हत्या वायुमुत्पाद्य ज्वलिताग्निना सुवर्णादेः किट्टादिकु-

मपनीय भस्त्राकर्मकृत्सुवर्णकारः शोधयत्येवं कश्यपसम्बन्धकारी सोमस्तान् सूर्यानशोधयत् । तेषां सप्तसूर्याणां स्वरूपे मतभेदं दर्शयति । प्राण इति । मुखनासिकयोः सञ्चारी यः प्राणः स एव सप्तभिर्वृत्तिभेदैः सप्त सूर्या इत्येवं केचिदाचार्या आहुः । जीवानि जीवननिमित्तभूतानि महदहङ्कारपञ्चतन्मात्ररूपाणि तत्त्वानि सप्त सूर्या इत्येवमन्य आचार्याः प्रचक्षते । इन्द्रियजीवानि चक्षुरादीनि पञ्चेन्द्रियाणि मनोबुद्धिसहितानि जीवननिमित्तभूतानि सप्त सूर्या इत्येवमपरे प्रचक्षते । शिरस्यवस्थितानि यानि सप्तच्छिद्राणि तेषु सञ्चरन्तः प्राणाः सप्त सूर्या इत्यन्ये । एते सर्वेऽप्याचार्याः सप्तसूर्यबुद्ध्या स्वैरुपास्यानि तत्त्वान्याहुरतो नैते मुख्याः सप्त सूर्याः । अथ मुख्यानां सप्तसूर्याणां द्रष्टारावृषी उदाहरति । अपश्यमिति । पञ्चकर्णनामकः कश्चिद्वत्सस्य पुत्रो महर्षिरेतानारोगादीन्सप्तसूर्यान्प्रत्यक्षेणैवाहमपश्यमित्युवाच । तथा सप्तकर्णनामकः कश्चित्प्लक्षस्य पुत्रो महर्षिरप्यहमपश्यमित्युवाच । अतो मनुष्यैः सन्निहितत्वादेक एव सूर्योऽवलोक्यते न तु व्यवहितत्वादितरे षट् सूर्या अवलोक्यन्ते । किञ्च तावुभावपि पञ्चकर्णसप्तकर्णाख्यौ महर्षी वेदयत इत्थं वेदयतः प्राणिनः सर्वान्बोधयतः । किमिति तदुच्यते । कश्यपाख्योऽष्टमः सूर्यो नावावयोरुभयोरपि आनुश्रविक एव न प्रत्यक्षः । गुरूपदेशमनुश्रूयत इत्यनुश्रवो वेदस्तत्रैवावगत इत्यानुश्रविकः । यत्ते शिल्पं कश्यपेत्यादिमन्त्रादेवावगम्यत इत्यर्थः । प्रत्यक्षादर्शने हेतुमप्याहतुः । महामेरुं कश्यपस्थानं गन्तुमावां नहि शेकुमिव न शक्तौ भवावेव । तस्माद्वेदादेव जानीवः । अथ कश्यपदर्शिनमृषिमुदाहरति अपश्यमिति । गर्गस्य पुत्रः प्राणत्रातनामकः कश्चिन्महर्षिस्तौ पञ्चकर्णसप्तकर्णौ प्रत्येवमुवाच । महामेरावेव परिवर्तमानमेतत्कश्यपाभिधं सूर्यमण्डलं प्रत्यक्षेणैवाहमपश्यम् । अतो हे मुनी युवामपि महामेरुं गच्छन्त योग्येन मार्गेण गच्छतम् । अजहत्‌ मेरुं कदाचिदप्यपरित्यजन्तम् । एकं कश्यपाख्यं सूर्यं च गच्छतम् । अथ मेरुगमने मार्गं दर्शयति भ्राजेति । य एते सप्त सूर्यास्तेषां मध्ये आरोगाख्यस्यास्माभिर्दृश्यमानस्य गतिः प्रसिद्धा । तदनन्तरभाविनो भ्राजादयस्त्रयस्ते निम्ने मेरुमार्गस्य निम्नप्रदेशेऽधोभागे तिष्ठन्नातपन्ति । अवस्थिताः सन्तो रश्मिभिरधोमुखैर्मेरुमार्गादधोवर्तिनः प्राणिनः सर्वतः प्रकाशयन्ति । यस्मादेषामधोमुखा रश्मयस्तस्मादिह लोके तप्तितपास्तपनशीलरश्मियुक्ताः । इतरे तु भ्राजपटरपतङ्गेभ्योऽन्ये स्वर्णरज्योतिष्मद्विभासास्त्रयः सूर्यास्तेऽमुत्र मेरुमार्गादुपरिभागे वर्तन्ते । यस्मात्तेषां रश्मय ऊर्ध्वमुखास्तस्मात्त इहाधोलोकेष्वतप्तितपास्तपनशीलरश्मियुक्ता न भवन्ति भ्राजादीनामधोमुखरश्मित्वेन स्वर्णरादीनामूर्ध्वमुखरश्मित्वाच्च वर्गद्वयमध्ये तापाभावाच्छीतलेन मार्गेण मेरुं गन्तुं शक्यत इत्यर्थः । अथ सूर्याणां मध्यवर्तिमार्गप्रतिपादिकामृचमवतारयति । तेषामेषेति । तेषां सप्तसूर्याणां सम्बन्धिनी मेरुमार्गप्रतिपादिकेयमृग्विद्यते ।

तामृचं दर्शयति। सप्तेति। आरोगादयः सप्त सूर्या दिवमन्तरिक्षमनुप्रविष्टा अनुक्रमेण व्याप्ताः। दक्षिणावान्दक्षिणोक्ताविष्टकादक्षिणायुक्तोऽनुष्ठितारुणकेतुकाग्निः प्रागुक्तान्सप्त-सूर्याननुसृत्य पथिभिः सूर्यवर्गद्वयवर्तिभिः शीतैर्मार्गैरिति मेरुं गच्छति। ते सर्वेऽपि सूर्या अस्मै यजमानाय घृतमातपन्ति मेरुमार्गरूपमाकाशं घृतादिभोग्यवस्तुसंपूर्णं यथा भवति तथा प्रकाशयन्ति। किं कुर्वन्तः। ऊर्जं दुहाना भोग्यं क्षीरादिकं सम्पादयन्तः। अनपस्फुरन्तः। सन्तापमकुर्वन्तः। हे यजमानेहास्यतामिह भुज्यतामिति एवं प्रियोक्तिं वदन्ति। तथा चाथर्वणिका आमनन्ति एह्येहीति तमाहुतयः सुवर्चसः सूर्यरश्मिभिर्यजमानं वहन्ति प्रियां वाचमभिवदन्त्योऽर्चयन्ते। इति। इत्येषा सप्तसूर्या इत्यादिका मार्गप्रतिपादिका तयेष्टका-मुपदध्यात्। तथा च बौधायनः सप्त सूर्याः सप्त दिशो नाना यथावश्विनं देवानामिति चतस्रः सौरीः पुरस्तात् (१६-१०) इति। इदानीं सूर्यस्वरूपे पक्षान्तरमुपन्यस्यति सप्तर्त्विज इति। य एते यज्ञे होत्रादयः सप्तर्त्विजस्त एव सप्तसूर्या इति केचिदाचार्याः प्रचक्षते। अस्मिन्नर्थे कांचिदृचमप्यवतारयति तेषामिति। तेषामृत्विग्रूपाणां प्रतिपादनार्थेयमृग्विद्यते। तामेतामृचं दर्शयति सप्तदिश इति। अष्टसु दिक्षु मध्ये या प्राची सा सूर्यवतीति सर्वेषां प्राणिनां प्रसिद्धा। यास्त्वन्या आग्नेय्याद्याः सप्त दिशस्ता अपि नानाविधसूर्योपेताः। ते च सप्तसु दिक्ष्वव-स्थिताः। तत्स्वामिनः सूर्या इह कर्मणि होत्रादय ऋत्विजो भूत्वा चरन्ति। होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाच्छावाक आग्नीध्र इत्येते सप्तहोतारः। य एतेऽत्र होत्रादय ऋत्विजो देवा भूत्वा सप्तादित्या इत्युच्यन्ते हे सोम यागाधिपते तेभिर्होतृरूपैरादित्यैर्नोऽस्मान-भिरक्ष। इत्यनयापीष्टकामुपदध्यात्। ननु सूर्या ऋत्विग्रूपा इत्यस्मिन्नर्थे इयमृगुदाहृता। तत्र दिशो नानासूर्या इत्येतदप्रस्तुताभिधानमित्याशङ्क्योत्तरमाह। तदपीति। यदुक्तं दिशां नानासूर्योपेतत्वं तदप्याम्नायः। शाखान्तरे कश्चिन्मन्त्रो ब्रूते। अतो वेदान्तर-सिद्धत्वादेतदपि वक्तव्यमेव न त्वप्रस्तुतम्। किंच तस्मिन्नर्थे युक्तिरप्यस्ति। दिग्भ्राजस्तां तां दिशं प्राप्यावस्थिताः सूर्या ऋतून्वसन्तादिसूचितानृतुधर्मान्कुर्वन्ति। तस्यां तस्यां दिशि कुर्वन्ति। न हि ऋतुनिष्पादकसूर्यव्यतिरेकेण तत्तदृतुधर्माः सम्भवन्ति। तस्मात्सन्त्येव दिक्षु विभिन्नाः सूर्याः। अथ कैमुतिकन्यायेन दिशां बहुसूर्यत्वं दृढीकरोति। एतयैवेति। एतयैवावृता अनेनैव प्रकारेणर्तुधर्मा यत्र सन्ति तत्र तत्सम्पादकः सूर्योऽस्तीति न्यायेनासहस्र-सूर्यतायाः सहस्रसङ्ख्याकसूर्योपेतत्वपर्यन्तं दिक्षु सूर्यभेदाः कल्पनीयाः। तत्र सप्तसूर्यत्वे किमाश्चर्यमिति वैशम्पायन आचार्यो मन्यते। आसहस्रमित्युपलक्षणमनन्ताः सूर्या इत्यर्थः। अनन्तसूर्यप्रतिपादिकामृचमवतारयति तस्यैषेति। तस्य सहस्रसूर्यवत्त्वस्य प्रतिपादिकेय-मृग्विद्यते। तामेतामृचं दर्शयति यद्द्याव इति। यद्यदि हे इन्द्र ते तव शतं द्यावः

स्युर्बहुभिः शतसंख्याभिर्युक्ता द्युलोकाः सम्भवेयुः। उतापि च शतं भूमीः स्युर्बह्वीभिः शतसङ्ख्याभिर्युक्ता भूमयोऽपि यदि सम्भवेयुः। हे वज्रिंस्तदानीमपि रोदसी जातं द्यावा-पृथिव्योर्मध्ये उत्पन्नं त्वां सहस्रं सूर्याः सहस्रोपलक्षिता अनन्ताः सूर्या नान्वष्ट नान्वश्नुवते त्वामनु न व्याप्नुवन्ति। एतावत्सु द्युलोकेषु भूलोकेषु च सत्स्वपि तत्र तत्र स्थितं त्वामनु सूर्यव्याप्तेरपर्याप्ता देशाः। सूर्याणामनन्तत्वादित्यर्थः। इत्यनयापीष्टकामुपदध्यात्। मन्त्रोक्त-मनन्तसूर्यत्वं युक्त्योपपादयति नानेति। यद्येक एव सूर्यः स्यात्तदानीं वसन्ताद्यृतूनां नाना-लिङ्गत्वं न स्यात्। न हि कारणभेदमन्तरेण कार्यभेदः सम्भवति। तस्मादृतुधर्मवैलक्षण्य-सिद्धये बहुसूर्यत्वमभ्युपेयम्। कथं तर्हि पूर्वत्र कश्यपोऽष्टम इत्येवमष्टसङ्ख्या स्वीकृतेत्या-शङ्क्य तदभिप्रायं दर्शयति अष्टाविति। बाढं सन्त्येव तत्तल्लिङ्गकल्प्या अनन्ताः सूर्याः किन्तु तत्रास्ति कश्चिद्विशेषो व्यवसिता निश्चिताः सूर्या अष्टावित्येवंविधः पञ्चकर्णसप्तकर्णाभ्यां सप्तानां सूर्याणां प्रत्यक्षेण दृष्टत्वात्प्राणत्रातेनाष्टमस्यापि दृष्टत्वात्। अष्टसङ्ख्यां निगमयति सूर्येति। यस्मादृषिभिर्दृष्टत्वेनाष्टौ सूर्या निश्चिता अतः कारणादस्माभिरदृश्यमानान्यप्यूर्ध्व-माकाशे सूर्यमण्डलान्यष्ट विद्यन्ते इत्यभ्युपेयम्। तत्र सन्निहितत्वादेकमेवास्माभिर्दृश्यते। बहुमण्डलप्रतिपादिकामृचमुदाहरति तेषामिति। तेषामनेकसूर्यमण्डलानां प्रतिपादिकेय-मृग्विद्यते। तामेतामृचं दर्शयति चित्रमिति। चित्रं बहुमण्डलरूपत्वेन विचित्रं देवानाम-नीकमन्धकाररूपप्रबलशरीरात्मकस्य शत्रोर्विनाशकत्वेन देवसैन्यरूपमादित्यमण्डलमुदगात्पूर्वस्यां दिश्युदेति। तच्च मण्डलं मित्रादीनां चक्षुःस्वरूपम्। अन्धकारनिवारणेन चक्षुषो-ऽनुग्राहकत्वात्। तादृशं सैन्यं द्यावापृथिवी अन्तरिक्षं चाप्राः। लोकत्रयं स्वकीयप्रकाशे-नापूर्य वर्तते। तथाविधमण्डलसमूहस्वामी सूर्यो जगतो जङ्गमस्य तस्थुषः स्थावरस्य चात्मा स्वरूपम्। इत्यनेनेष्टकामुपदध्यात् ॥७॥

कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये प्रथमप्रपाठके सप्तमोऽनुवाकः।

॥ २ ॥

२·१

प्रपाठके हि प्रथमे वह्निरारुणकेतुकः। सम्यक्प्रोक्तो द्वितीये स्यात्स्वाध्यायब्राह्मणाभिधा ॥ तत्राद्येऽनुवाकेऽध्ययनाङ्गत्वेन यज्ञोपवीतं विधातुं तत्प्रशंसार्थमादावुपाख्यानमाह सह वा इति। वयमेवाधिपत्यनिमित्तं स्वर्गं गमिष्याम इत्येवं देवा यदा यज्ञे प्रवृत्तास्तदानीमेवासुरा अपि तथैवाभिप्रेत्य यज्ञे प्रवृत्ताः। तावुभौ यज्ञौ प्रततौ विस्तीर्णावास्ताम्। तदानीं तथाविधा असुराः सन्नद्धाः कृतसन्नाहाः सहसैव भुजबलान्न शास्त्रेणैवाचरन्यज्ञमारब्धवन्तः।

ते मौर्ख्याद्ब्रह्मचर्यादिनियमप्रधानादत्तवन्तः। देवास्तु ब्रह्मचर्यात्समस्ततपसा युक्ताः सन्तो यथाशास्त्रमनुष्ठितवन्तः। ते मूर्खा असुरा अमुह्यन्मौर्ख्यपारवश्येन मोहं प्राप्ताः। मूढाः सन्तः कर्तव्याकर्तव्यं किमपि न प्राजानन्। ततो यथाशास्त्रानुष्ठानाभावात्स्वर्गं न प्राप्ताः। देवास्तु प्रसृतेनैव यज्ञेन स्वर्गं प्राप्ताः। अप्रसृतेन यज्ञेन युक्तानसुरान्पराभावयन्। अथ प्रसृताप्रसृतयोः स्वरूपं विभजते प्रसृत इति। यज्ञोपवीतयुक्तस्य यो यज्ञः सोऽयं गुणाधिक्या-त्प्रसृतः प्रकर्षेण सृत इत्युच्यते। अनुपवीतिनो यज्ञोपवीतरहितस्य यज्ञो गुणहीनत्वादप्रसृत इत्युच्यते। किञ्च ब्राह्मणो यज्ञोपवीतयुक्तः सन्यत किमप्यधीते तत्सर्वं यागानुष्ठानसमं भवति। तदेवं यज्ञोपवीतं प्रशस्याध्ययनोपयोगं वदन्यज्ञानामङ्गत्वेन विधत्ते तस्मादिति। प्रसृतिः प्रकृष्टगुणयुक्तत्वम्। यज्ञोपवीतसाधनं द्रव्यं विधत्ते अजिनमिति। कृष्णाजिन-वस्त्रयोरन्यतरद्द्रव्यं दक्षिणभागे लम्बमानं कृत्वाधीयीतेत्यर्थः। एवमध्ययनादावनेनैव वाक्येन विहितस्यापि यज्ञोपवीतस्य दर्शपूर्णमासप्रकरणे निवीतं मनुष्याणामित्यत्र पुनर्विधानं तदतिक्रमे तत्रत्यविशेषप्रायश्चित्तार्थम्। यज्ञोपवीतप्रसङ्गात्त्रयाणामपि लक्षणं दर्शयति दक्षिणमिति। दक्षिणं बाहुमूर्ध्वं धृत्वा सव्ये बाहौ लम्बमाने सति यद्वेष्टनं तद्यज्ञोपवीतम्। एतदेव विपरीतं सव्यबाहोरूर्ध्वधारणं दक्षिणबाहोर्लम्बमानं चेद्भवति तदावेष्टनं प्राचीनावीतमित्युच्यते। बाह्वोरुभयोरप्यधोलम्बमानयोरंसद्वये यद्वेष्टनं तत्संवीतं तदेतन्मानुषं मनुष्याणामृषीणां यज्ञोपवीतं यथा देवानां यथा वा प्राचीनावीतं पितॄणां तद्वत् ॥१॥

कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठके प्रथमोऽनुवाकः।

॥ ५ ॥

५.२

प्रथमानुवाकोक्तमन्त्रजपेन परिहृतविघ्नस्य पुरुषस्योपासनार्थं ब्रह्मावबोधार्थञ्च तत्प्रति-पादको ग्रन्थो वक्तव्यः। तस्य च ग्रन्थस्यार्थज्ञानप्रधानत्वात्पाठे मा भूदौदासीन्यमित्येतदर्थं द्वितीयानुवाके शिक्षाध्यायोऽभिधीयते। भवत्वौदासीन्यमिति चेन्न। अनर्थप्रसङ्गात्। मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधाद् (पा॰ शि॰ १०-४) इत्यादिन्यायात्। इन्द्रशत्रुवृत्तान्तश्च त्वष्टाहतपुत्र इत्यनुवाके विस्पष्टमभिहितः। एवं तर्हि कर्मकाण्डेऽप्ययमध्यायो वक्तव्य इति चेद्बाढम्। अतः काण्ड-द्वयशेषत्वाद्देहलीदीपन्यायेनोभयोः काण्डयोर्मध्येऽभिहितः। नोभयशेषत्वेन वेदस्योपक्रम एव पठ्यतामिति वाच्यम्। उभयशेषस्यापि विद्यायां प्रयोजनाधिक्यद्योतनाय विद्याकाण्डे पठनीयत्वात्। कर्मकाण्डे क्वचित्स्वरवर्णादिव्यत्यये यथाशास्त्रमर्थानवबोधेऽपि प्रायश्चित्तेना-

नुष्ठानवैकल्यं परिहर्तुं शक्यम् । अत एव प्रायश्चित्ताज्याहुतिमन्त्र एवमाम्नायते । अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पय त्वँ हि वेत्थ यथातथम् ॥ इति । विद्याकाण्डे अयथाशास्त्रमवबोधे सति वैकल्यं न समाधीयेत । न हि अन्यथाबोधः प्रायश्चित्तेन परिहर्तुं शक्यते । रज्जुसर्पादिभ्रान्तेर्गायत्रीजपादिभिः परिहारादर्शनात् । अत एव कर्मस्विव विद्यायां वैकल्यपरिहाराय प्रायश्चित्तं किमपि नाम्नातम् । प्रत्युत विद्यामभ्यस्यतः पापे प्रसक्तावप्यन्यप्रायश्चित्ताभावः स्मर्यते । यदि स्यात्पातकं किंचिद्योगी कुर्यात्प्रमादतः । योगमेव निषेवेत नान्यं मन्त्रं कदाचन ॥ इति । तस्माद्विद्यायामवैकल्याय यथाशास्त्रं बोद्धुमुपनिषत्पाठे प्रयत्नातिशयं विधातुमत्रैव शिक्षाध्यायोऽभिधीयते । शीक्षामिति । शिक्ष विद्योपादाने इति धातुः । शिक्ष्यन्ते वेदनीयत्वेनोपदिश्यन्ते स्वरवर्णादयो यत्रासौ शिक्षा । सैव शीक्षा । तां विस्पष्टमासमन्ताद्व्याख्यास्यामः कथयिष्यामः । अकारादिर्वर्णः । उदात्तादिः स्वरः । ह्रस्वदीर्घादिका मात्रा । स्पृष्टत्वमीषत्स्पृष्टत्वमित्यादिकः प्रयत्नो बलम् । अतिद्रुतत्वमतिविलम्बितत्वं च परिहृत्य यस्य यः काल उचितस्तावति काले तदुच्चारणं साम्यं तदेव सामशब्देनोच्यते । पूर्वोत्तरवर्णयोः संहिता सन्तानः । त एते वर्णादयः सन्तानान्ताः षडपि तत्तल्लक्षणलक्षिताः पठनीयाः । इत्यनेन प्रकारेण शिक्षारूपोऽध्याय उक्तः । वर्णादयः षडेव शिक्षणीया न त्वन्यः कश्चिच्छिक्षणीयोऽस्ति इति द्योतयितुमध्यायोपसंहारः । अध्येतव्यः पठनीयो ग्रन्थोऽध्यायः । यद्यप्यत्र शीक्षादिशब्दानामेकश्रुत्याऽधीयमानत्वाद्व्याकरणोक्तप्रकृतिप्रत्ययादिप्रयुक्तः स्वरो नोपलक्ष्यते तथापि सम्प्रदायसिद्धः स्वरस्तथैवाभ्यसनीयस्तस्य चार्थविशेषज्ञानोपयोगाभावेऽप्येतेन शीक्षाध्यायेन विधीयमानत्वाददृष्टोपयोगो भविष्यति । तच्चादृष्टमुपासनायां तत्त्वजिज्ञासोस्तत्त्वविद्यायां च प्रतिबन्धपरिहाराय संपद्यते ॥२॥

कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये सप्तमप्रपाठके द्वितीयोऽनुवाकः ।

॥ ५ ॥

८·८

अथाष्टमोऽनुवाकः । भीषेति । विद्यान्तरयुक्तस्यापि ब्रह्मज्ञानरहितस्य भयमित्यस्मिन्नप्यर्थे श्लोकमुदाहरति तदप्येष श्लोको भवतीत्यादिना । यः पूर्वजन्मनि प्रकृष्टे ज्ञानकर्मणी अनुष्ठायास्मिञ्जन्मनि वायुदेवत्वेनोत्पन्नः सोऽयं तथाविधमहिमोपेतोऽपि देवोऽपि सन्नस्मादन्तर्यामिरूपाद् ब्रह्मणो भीषा भयेन पवते निरन्तरमनलसः सञ्चरति । एवं सूर्यादिषु योजनीयम् । अग्निरिन्द्रश्च स्वस्वव्यापारं कुरुत इति शेषः । उक्तदेवताचतुष्टयापेक्षया मृत्योः पञ्चमत्वम् ।

स च क्षीणायुषः प्राणिनो मारयितुं तत्र तत्र सदा धावति। यद्यप्यसङ्गस्य निर्गुणस्य ब्रह्मणो भयहेतुत्वं नास्ति तथापि मायोपाधिकस्यान्तर्यामित्वेन तत्सम्भवति। तदुक्तं वार्त्तिककारैः। नियम्यकार्यमापेक्ष्य नियन्तैष तमोऽवधिः। इति। श्रुत्यन्तरञ्च। यो वायुमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः। एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादिकमुदाहार्यम्। अस्य च भयहेतोर्नियामकस्यान्तर्यामिणो ब्रह्मत्वं प्रथमाध्यायस्य द्वितीयपादे चिन्तितम्। प्रधानं जीव ईशो वा कोऽन्तर्यामी जगत्प्रति। कारणत्वात्प्रधानं स्याज्जीवो वा कर्मणो मुखात्॥ जीवैकत्वामृतत्वादेरन्तर्यामी परेश्वरः। द्रष्टृत्वादेर्न प्रधानं न जीवोऽपि नियम्यतः॥ बृहदारण्यके पञ्चमाध्याये याज्ञवल्क्य उद्दालकं प्रत्याह। यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः। इति। तत्र पृथिव्यादिजगत्प्रति योऽन्तर्यामी श्रूयते तस्मिंस्त्रेधा संशये सति प्रधानमिति प्राप्तम्। तस्य सकलजगदुपादानत्वेन स्वकार्यं प्रति नियामकत्वसंभवात्। अथ वा जीवोऽन्तर्यामी। स हि धर्माधर्मरूपं कर्मानुष्ठितवान्। तच्च कर्म स्वफलदानाय फलभोगसाधनं जगदुत्पादयति। अतः कर्मद्वारा जगदुत्पादकत्वाज्जीवोऽन्तर्यामीति प्राप्ते ब्रूमः। एष त आत्मान्तर्याम्यमृत इत्यन्तर्यामिणो जीवतादात्म्यममृतत्वं च श्रूयते। तथा पृथिव्यन्तरिक्षादिषु सर्ववस्तुष्वन्तर्यामित्वोपदेशेन सर्वव्यापित्वं प्रतीयते। तेभ्यो हेतुभ्योऽन्तर्यामी परमेश्वरः। न च प्रधानस्यान्तर्यामित्वं सम्भवति। अदृष्टो द्रष्टाऽश्रुतः श्रोतेति द्रष्टृत्वश्रोतृत्वाद्यवगमात्। अचेतनस्य प्रधानस्य तदसम्भवात्। नापि जीवोऽन्तर्यामी। य आत्मानमन्तरो यमयतीति जीवस्य नियम्यत्वश्रवणात्। तस्मादन्तर्यामी परमेश्वरः। एतस्माद्भयमज्ञानिन एव। न तु तत्त्वविदः। तदेवं सर्वेषां प्रश्नानामुत्तरं सम्पन्नम्। पूर्वत्र यदुक्तं सोऽश्नुते सर्वान्कामान्सह इति। यदपि रसो वै स इत्यानन्दरूपत्वं सूचितं तदुभयं निर्णेतुं विचारमवतारयति। सैषेति। तच्छब्देन मीमांसायाः श्रुत्यन्तरप्रसिद्धिः प्रदर्श्यते। बृहदारण्यके हि स यो मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः सम्पन्नतमः स मनुष्याणां परम आनन्दः (४-३-३३) इत्यादिनाऽऽनन्दनिर्णयः प्रपञ्चितः। राद्धो देहेन्द्रियादिपाटवलक्षणसिद्ध्युपेतः। समृद्धो विद्यादिगुणसम्पन्नः। एतच्छब्देनानन्तरग्रन्थे वक्ष्यमाणतां दर्शयति। किमयं ब्रह्मानन्दो लौकिकानन्दवद्विषयविषयिसम्बन्धेन जन्यत आहोस्वित्स्वाभाविक इत्येषा मीमांसा प्रवर्तते। तत्र स्वाभाविकं ब्रह्मानन्दं विवेक्तुं द्वारभुता अन्ये विषयानन्दाः क्रमेणोपन्यस्यन्ते। एतेषां ब्रह्मानन्दलेशत्वात्तन्निश्चयद्वारत्वमुपपन्नम्। तल्लेशत्वं चैवं द्रष्टव्यम्। अविद्यया विवेके तिरस्क्रियमाणे सत्युत्कृष्यमाणायां चाविद्यायां हिरण्यगर्भमारभ्य मनुष्यपर्यन्तेषु जीवेषु

ब्रह्मानन्दस्तत्तत्कर्मवशाद्विषयादिसाधनसम्बन्धवशाच्च यथाविज्ञानं भाव्यमानतयाऽपचीयमाणश्चञ्चलोऽव्यवस्थितो लौकिकः सम्पद्यते। स एव पुनरविद्याकामकर्मप्रकर्षेण मनुष्यगन्धर्वादिषु हिरण्यगर्भपर्यन्तमुत्तरोत्तरभूमिषु शतगुणोत्कर्षयुक्तोऽकामहतविद्वच्छ्रोत्रियप्रत्यक्षो विभाव्यते। विद्यया तु अविद्याकृते विषयविषयिभावे निवृत्ते सति स्वाभाविकः परिपूर्ण एक एवात्मानन्दोऽवतिष्ठते। तस्य द्वारभूतेषु विषयानन्देष्वस्मत्प्रसिद्धमानन्दमादौ तावद्दर्शयति युवेति। मनुष्यस्य बाल्ये विषयगुणानभिज्ञतया स्रक्चन्दनवनितादिविषयानन्दो नास्ति। वार्धके तदभिज्ञत्वेऽपि भोक्तुमसमर्थत्वादसौ नास्ति। अतो यौवनमेव परिशिष्यते इत्यभिप्रेत्य युवा स्यादित्युक्तम्। यौवनेऽपि कुरूपत्वक्रोधादिग्रस्तस्य दुःखबाहुल्यात्तदभावाय साधुयुवेत्युच्यते। तादृशस्यापि चतुःषष्टिकलासु चतुर्दशविद्यास्वेकस्या अप्यभावे दुःखं भवेदिति तद्व्यावृत्त्यर्थमध्यापक इत्युक्तम्। विद्यावतोऽपि कार्येषु मन्दप्रवृत्तेरग्निमान्द्यादिना भोजनादौ रुचिहीनस्य वा सुखं न भवतीति तन्निवृत्त्यर्थमाशिष्ठ इत्युक्तम्। आशुतमः सर्वकार्येषु शीघ्रं प्रवर्तत इत्यर्थः। यद्वा सर्वेषु भोज्यद्रव्येषु रुचिबाहुल्येनाशितृतमः। ईदृशस्यापि मनोदार्ढ्याभावे सति युद्धादौ न धृतिः स्यादिति तद्वारणाय द्रढिष्ठ इति उक्तम्। धैर्ययुक्तोऽपि शारीरबलहीनोऽश्वारोहणादावक्षमः स्यादिति तद्वारयितुं बलिष्ठ इत्युक्तम्। एतावता भोक्तृत्वसम्पत्तिरुक्ता। तस्येयमिति भोग्यसम्पत्तिरुच्यते। चतुर्दिक्षु समुद्रवेष्टिता या पृथिवी सा सर्वापि वित्तस्य पूर्णा भोग्यद्रव्यजातेन पूरिता। एतच्चान्येषामधिपतिरित्यादिकस्य श्रुत्यन्तरोक्तस्योपलक्षणम्। यदि कस्यचित्सार्वभौमस्यैतत्सर्वं सम्भवेत्तदानीमयं मानुष आनन्दो भवति। इतोऽर्वाचीनास्तु दुःखमिश्रत्वादानन्दा एव न सम्भवन्ति। न खलु कश्चिदपि मनुष्यो यथोक्तसार्वभौमादन्यः क्वचिदपि सर्वतस्तृप्तिमानुपलभ्यते। आनन्दो नाम तृप्तिः। तस्याः कश्चिद्विषयाभिलाषो विरोधी। स चालब्धे कस्यचित्कस्मिंश्चिदवश्यं सम्भवत्येव। सार्वभौमस्य तु सर्वविषयाणां मनुष्यलोकवर्तिनां लब्धत्वेन विरोध्यभावान्निर्विघ्ना तृप्तिरभिव्यज्यते। एवं च सति यावद्यावदभिलाषनिवृत्तिरुत्कृष्टा भवति तावत्तावदानन्दोऽप्युत्कृष्यते। एतदेवाभिप्रेत्य पूर्वोक्तानन्दादधिकमुदाहरति। ते य इति। ते पूर्वोक्ताः सार्वभौमनिष्ठा मानुषा आनन्दाः शतसङ्ख्याकेषु सार्वभौमेषु या तृप्तिस्तावती मनुष्यगन्धर्वस्यैकस्य। विद्याकर्मविशेषानुष्ठानेन गन्धर्वत्वं प्राप्ता मनुष्यगन्धर्वाः। ते ह्यन्तर्धानादिशक्तियोगेन मनुष्येभ्य उत्कृष्टाः। स चोत्कर्षो वार्त्तिके दर्शितः। सुगन्धिनः कामरूपा अन्तर्धानादिशक्तयः। नृत्यगीतादिकुशला गन्धर्वाः स्युर्नृलौकिकाः॥ इति। ततस्तेषां मनुष्यवदानन्दप्रतिघातः प्रायेण नास्ति। कदाचित्प्रसक्तस्यापि परिहाराय साधनसम्पत्तिरस्ति। तथा सति चित्तप्रसादविशेषात्सुखविशेषाभिव्यक्तिरुपपद्यते। सार्वभौमस्य

मनुष्यत्वेन तदीयस्यानन्दस्यास्माभिरपेक्षितुं शक्यत्वान्न तत्र श्रोत्रिय उदाहृतः। मनुष्य-गन्धर्वास्त्वन्तरिक्षलोकवासिनः। यक्षगन्धर्वाप्सरोगणसेवितमन्तरिक्षमिति (नृ० पू० उ० १-२) श्रुत्यन्तरात्। अतस्तदीयस्यानन्दस्याप्रसिद्धत्वात्तत्प्रसिद्धिं मनुष्यलोके दर्शयितुं श्रोत्रिय उदाह्रियते। श्रोत्रियंश्छन्दोऽधीते (पा० ५-२-८४) इति पाणिनिना सूत्रितत्वात्। स हि सर्वेषु लोकेषु वर्तमानस्यानन्दहेतोर्विषयस्य भोगे प्रयाससाध्यत्वसातिशयत्वानित्यत्वदोषाञ्छास्त्रानुभवाभ्यां निश्चित्य तत्र निष्कामो भवति। तथा सति मनुष्यगन्धर्वलोकगतान्विषयान्भुञ्जानस्य यावानानन्दस्तावानकामहतवेदविच्छ्रोत्रियस्यापि विद्यते। अकामहतत्वं तु गन्धर्वलोकान-भिज्ञस्य मूढस्येदानीं विद्यमानमपि कालान्तरेण शास्त्रादभिजानानस्य तल्लोकभोगेच्छाया-मुत्पन्नायां निवर्तते। श्रोत्रियस्य तु तद्दोषदर्शिनः कदाचिदपि कामानुत्पत्तेरकामहतत्वं सुस्थितम्। ननु गन्धर्वस्य नृत्यगीतादिभिर्यदा कदाचित्तद्वृत्त्युल्लासलक्षणो हर्षाभिधेय आनन्द उपपद्यते। न त्वसावकामहतस्य श्रोत्रियस्य विद्यत इति चेन्मा भूदयं हर्षः। तस्य क्षणि-कत्वेन चित्तविकारत्वेन च मुख्यानन्दत्वाभावाद्विषयप्राप्त्या तदिच्छायां निवृत्तायां हर्षादि-विकारेषु च शान्तेषु या तृप्तिभङ्गिरनुगच्छत्यसौ च मुख्यानन्दः। तथा च स्मर्यते। यच्च काम-सुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥ (बृ० वा० ४-३-१८८४) इति। तृप्तिरूपश्चानन्दो गन्धर्वेण समानोऽकामहतश्रोत्रियस्य विद्यते। यथोक्त-पर्यायद्वयमुत्तरेष्वपि पर्यायेषु चित्तस्य प्रसादातिशयमनुसृत्य तृप्तिलक्षणस्यानन्दस्याविर्भावातिशयो व्याख्येयः। तत्र तृतीयपर्यायमाह ते य इति। सृष्टिकाल एव देवलोके समुत्पन्ना गायका देवगन्धर्वाः। चतुर्थं पर्यायमाह ते य इति। चिरस्थायी यो लोकस्तमालोकयन्त इति चिरलोकलोकाः। पञ्चमं पर्यायमाह ते य इति। पितृलोकादूर्ध्वभावी कश्चिदाजानाख्यो देवलोकविशेषः। तत्रोत्पन्ना आजानजाः। षष्ठं पर्यायमाह ते य इति। आजानजदेव-भोगादप्युत्तमं भोगं प्राप्तुं ये वैदिकं कर्मविशेषमनुष्ठाय देवान्प्राप्नुवन्ति ते कर्मदेवाख्या देवाः। सप्तमं पर्यायमाह ते य इति। त्रयस्त्रिंशद्धविर्भुजोऽत्र देवशब्देन विवक्षिताः। अष्टमं पर्यायमाह ते य इति। इन्द्रो हविर्भुजां स्वामी। नवमं पर्यायमाह ते य इति। बृहस्पति-रिन्द्रस्याचार्यः। दशमं पर्यायमाह ते य इति। प्रजापतिर्विराट्पुरुषः। एकादशं पर्यायमाह ते य इति। ब्रह्मा हिरण्यगर्भः। कृत्स्नसंसारमण्डलव्यापी समष्टिव्यष्टिरूपः सूत्रात्मा। स च शरीरिणां मध्ये प्रथमः। हिरण्यगर्भः समवर्तताग्र (ऋ० स० ८-७-३) इति श्रुतेः। स वै शरीरी प्रथमः स वै पुरुष उच्यते। आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत॥ (बृ० वा० १-४-२१) इति स्मृतेश्च। तेन सांसारिक आनन्दस्तत्र विश्राम्यति। उक्तरीत्या श्रोत्रिये सर्वेषामा-सद्भावेन नन्दानां सोऽश्नुते सर्वान्कामान्त्सहेत्ययमर्थ उपपादितो भवति। तदेवं परमानन्द-

द्वारभूतः सांसारिक आनन्दोत्कर्ष आगमेन श्रोत्रियप्रत्यक्षेण चोदाहृतः । अथ बोधनीयं ब्रह्मानन्दं दर्शयति । स य इति । पुरुषशब्देन बुभुत्सुर्मनुष्यो विवक्षितः । तस्मिन्कश्चिदानन्दो विद्यते । तत् सद्भावे यौक्तिकप्रसिद्धिरनुभवप्रसिद्धिश्च सोऽयमित्येताभ्यां पदाभ्यां क्रमेण निर्दिश्येते । तत्र यौक्तिक-प्रसिद्धिः श्रुत्यन्तरे प्रपञ्चिता । आत्मनस्तु कामाय सर्वं प्रियं भवति (बृ० उ० ४-५-६) इति प्रति-ज्ञाय पुत्रवित्तादिरूपस्य सर्वस्य भोग्यजातस्यात्मशेषतया प्रियत्वे सत्यात्मनः परप्रीतिविषयत्वेना-नन्दरूपत्वमुपपादितं भवति । तथा सर्वदाऽहं भूयासं कदाचिदपि ममासत्त्वं मा भूदित्येवमात्मन आनन्दरूपत्वं सर्वैः प्राणिभिरनुभूयते । चकारो बुभुत्सुसजातीयप्राण्यन्तर्गतानन्दसमुच्चयार्थः । तेनाध्यात्मिक आधिभौतिकश्च सर्वोऽप्यानन्दः सङ्गृहीतो भवति । वेदे प्रायेणास्माल्लोकादमुं लोकमित्यादाविदमदःशब्दौ प्रत्यक्षपरोक्षवाचकौ । ततोऽत्राप्यस्माकं परोक्ष आदित्यदेहेऽवस्थित आनन्दोऽसावित्यनेन शब्देन विवक्षितः । चकार आदित्यसजातीयदेवतान्तरगतानन्द-समुच्चयार्थः । तेनाधिदैविकः सर्वोऽप्यानन्दः संगृहीतो भवति । एवञ्च सत्यध्यात्ममधि-भूतमधिदैवं च सर्वेषूपाधिषु योऽयमानन्दोऽस्ति स सर्वोऽपि स्वरूपेणैक एव न तु भिद्यते । मानुषानन्दो देवानन्द इत्येवमुपाधिपरामर्शपुरस्सरमेव हि भेदः प्रतीयते । यथा घटाकाशो मठाकाश इत्येवमुपाधिपरामर्शादेव तारतम्यलक्षणो भेदस्तद्वत्सर्वोऽयमखण्डैकरसो ब्रह्मानन्द-स्तदीयो हिरण्यगर्भादिस्थावरान्तोपाधिकृतश्च भेदः श्रुत्यन्तरे विस्पष्टमाम्नातः । एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति (बृ० उ० ४-३-३२) । यस्या-खण्डैकरसस्यास्य समुद्रस्थानीयस्यानन्दस्य बिन्दुस्थानीया हिरण्यगर्भाद्यानन्दाः सोऽयमेक आनन्दो बुभुत्सुभिर्बोद्धव्यइत्येवं मीमांसया निर्णयः सम्पन्नः । यथोक्तानन्दवेदनस्य फलं दर्शयति स य इति । यः पुमानेवमुक्तप्रकारेण निजानन्दं वेत्ति स पुमाननेनैव क्रमेण तमानन्दं प्राप्नोति । सत्यज्ञानादिलक्षणं ब्रह्म स्वकीयमायाशक्तिवशादाकाशादिकमस्मद्देहान्तं जगत्सृष्ट्वा देहादिपञ्चकोशरूपायां गुहायां प्रविष्टमिवाभ्यन्तरे निरुपाधिकरूपेण साक्षात्कारयोग्यं सदव-तिष्ठते । तच्चाखण्डैकरसं परमानन्दस्वरूपमित्ययमुक्तप्रकारः । तेन प्रकारेण विदितवत आनन्दप्राप्तौ क्रमोऽभिधीयते । भोक्ता भोग्यं चेति द्विविधं जगद्ब्रह्मणा सृष्टम् । तत्र प्रत्यक्चैतन्यरूपमात्मानमारभ्य देहपर्यन्तोऽहंप्रत्ययगम्यो जगद्भागो भोक्ता । देहाद्बहिरिदं-प्रत्ययेनावलोक्यमानः पुत्रभार्यादिरूपो जगद्भागो भोग्यः । तत्र यद्यप्यात्मव्यवहारोऽस्ति तदीय-सुखदुःखयोरहं सुखी दुःखीत्येवं सर्वैरभिगम्यमानत्वात् । तथापि पुत्रादिषु स्वस्माद्भेदस्य विस्पष्टं भासमानत्वाद्गौणमेवात्मत्वं न तु मुख्यमित्यभिप्रेत्य श्रुतिस्तत्रात्मत्वबुद्धिं निवारयितु-मन्नमयमात्मानमुपदिदेश । बुभुत्सुरपि तदेतदवगम्यास्माल्लोकादिदंप्रत्ययेनावलोक्यमानात्पुत्रादेः प्रेत्य प्रत्यावृत्य तत्र निरपेक्षो भूत्वाऽन्नमयं श्रुतिबोधितमेतमुपसङ्क्रामति प्राप्नोति । पुत्रादि-

सुखदुःखयोः स्वकीयत्वाभिमानं परित्यज्यान्नमयमात्रे पर्यवस्यतीत्यर्थः । एवं क्रमेण प्राणमयाद्युपसङ्क्रमणं द्रष्टव्यम् । आनन्दमयमुपसङ्क्रम्य तत्रापि प्रियादिचतुष्टयं क्रमेण परित्यज्य ब्रह्म पुच्छमित्युक्तेऽखण्डैकरसानन्दे पर्यवस्यतीत्यर्थः । नन्वेवंविच्छब्देन किं परमात्मा विवक्षितः किं वा ततोऽन्यः कश्चित् । नाद्यः । तस्य वेदितव्यत्वेन वेदितृत्वानुपपत्तेः । न द्वितीयः । तत्त्वमस्यादिश्रुतिविरोधात् । नैष दोषः । परमात्मन एव देहेन्द्रियाद्युपाधिविशिष्टत्वाकारेण वेदितृत्वमखण्डैकरसानन्दरूपत्वेन वेद्यत्वमित्युभयोपपत्तेः । ननु य एवंवित्स उपसङ्क्रामतीति श्रूयते । सङ्क्रमणं नाम दृढसंयोगरूपप्राप्तिः । जलूका तृणे सङ्क्रामतीत्यादौ तथा दृष्टत्वात् । न हि देहेन्द्रियाद्युपाधिविशिष्टस्य वेदितुरन्नमयादिषु यथोक्तसङ्क्रमणं संभवति इति चेन्न । सङ्क्रमशब्देनात्र भ्रान्तिविनाशलक्षणस्य विद्याफलस्य विवक्षितत्वात् । तथा च भाष्यकारैरुक्तम् । एतस्मिन्नविद्याविभ्रमनाशे सङ्क्रमशब्द उपचर्यते इति । न हि मुख्यसङ्क्रमणस्य वेदनमात्रं साधनं भवति । कललमयमित्यादिज्ञानमात्रेण तत्सङ्क्रमणादर्शनात् । अस्माल्लोकात्प्रेत्येत्यनेनैव वाक्येन प्रथमपर्याये बाह्यपुत्रादिविषयभ्रान्तिनाशोऽभिहित इति चेदेवं तर्ह्यन्नमयसङ्क्रमणोक्त्या पुत्रादिभ्रमस्य पुनरनुत्पत्तिर्विवक्ष्यताम् । अत एवास्माभिर्देहमात्रे पर्यवस्यतीति संक्रमणाभिप्रायोऽभिहितः । अनेनैव न्यायेन प्राणमयात्मवेदने सत्यन्नमयात्मत्वभ्रमस्य विनष्टस्य पुनरनुत्पत्तिः प्राणमयसंक्रमणम् । एवमुत्तरत्रापि द्रष्टव्यम् । अन्नमयादिषु मुख्यात्मत्वाभावेऽपि अहंप्रत्ययगम्यत्वलक्षणं भ्रान्तिप्रतीतमात्मत्वमभ्युपेत्यान्नमयमात्मानमित्यात्मशब्दः प्रयुक्तः । आनन्दमयकोशगतस्य प्रियाद्यवयवचतुष्टयस्यानन्दे मुख्यानन्दब्रह्मण्यवाङ्मनसगोचरत्वमभिप्रेत्य विद्यमानमपि संक्रमणं श्रुत्या नोक्तम् । अथाभिप्रेतमवाङ्मनसगोचरत्वं स्पष्टीकर्तुं श्लोकमुदाहरति तदप्येत्यादिना ॥८॥

कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्येऽष्टमप्रपाठकेऽष्टमोऽनुवाकः ।

॥ ६ ॥

१०.९

अथ विहितानुष्ठानरूपं पुण्यं ज्ञानसाधनतया प्रशंसति । निषिद्धाचरणं ज्ञानप्रतिबन्धकतया निन्दति यथेति । लोके यथा वृक्षस्योद्यानादौ स्थितस्य चम्पकपाटलकेतकीपुन्नागादेः सम्पुष्पितस्य सम्यग्विकसितपुष्पोपेतस्य यो गन्धः सुरभिरस्ति सोऽयं दूराद्देशाद्वाति वायुना सहागच्छति । एवं पुण्यकर्मणो ज्योतिष्टोमादेः सत्कीर्त्तिः सुगन्धसमाना दूराद्वाति मनुष्यलोकात्स्वर्गं गच्छति । तस्मात्पुण्यमनुष्ठेयम् । अथ पापस्य दृष्टान्त उच्यते । यथा लोके राजामात्यादीनां विनोदाय प्रवृत्तो वंशाग्रनृत्तादिदुर्घटव्यापारेष्वत्यन्तकुशलमनाः कश्चित्कर्त्तं कूपादावगाधे कस्मिंश्चिद्गर्तविशेषेऽवहितां प्रसारितामसिधारां खड्गधारामव-

क्रामेत्पादाभ्यां धाराया उपरि गन्तुं प्रवर्तेत। तदानीमसौ मनस्येवं विचारयति। यद्यदि युवे हुवे। हकारो व्यत्ययेन यकारस्थाने पठितः। अत एव केचिद्युवे युव इति पठन्ति। यौमि यौमि पुनः पुनः पादमसिधारया मिश्रयामीत्यर्थः। तदाहं विह्वदिष्यामि कर्तं वा पतिष्यामि। अह्-मित्येतमर्थं हशब्दो ब्रूते। लकारस्थाने व्यत्ययेन दकारः। असिधारायां पादस्य दृढस्पर्शे पादच्छेदेनाहं विह्वलितो विवशो भविष्यामि दृढस्पर्शाभावे त्वधोवर्तिन्यगाधे गर्ते पतिष्यामीति। एवं पापे वर्तमानः पुरुषो विचारयेत्। यद्यहं पापं प्रकटं कुर्यां तदानीमिह लोके निन्दितो भविष्यामि तत्परिहारायाप्रकटं कुर्यां तदापि नरके पतिष्यामीति। ईदृग्विचारयुक्तः पुरुषोऽनृतात्पापादात्मानं जुगुप्सेत्। धिङ् मां लोकद्वयभ्रंशहेतुमिति निन्दित्वा पापान्निवारयेत् ॥६॥

कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नवमोऽनुवाकः।

॥ ७ ॥

१०·६४

सन्न्यासस्यैव ब्रह्मज्ञानं प्रति अन्तरङ्गसाधनत्वाज्जिज्ञासोः सन्न्यास एव युक्तो न तु कर्मानुष्ठानम्। तर्हि निष्पन्ने तत्त्वसाक्षात्कारे कर्माण्यनुष्ठीयन्तामित्येतां शङ्कां निवारयितुमत्र तत्त्वज्ञानिव्यवहाराणां लौकिकानां सर्वेषां यागरूपत्वमुच्यते। न हि यागस्य यागाधिकारशङ्कास्ति। अतोऽस्मिन्ननुवाके पूर्वभागेन योगिनोऽवयवा यज्ञाङ्गद्रव्यत्वेनाम्नायन्ते यस्यैवमिति। तस्य पूर्वोक्तस्य सन्न्यासिन एवंविदुषः पूर्वोक्तप्रकारेण ब्रह्मणो महत्त्वं साक्षात्कृतवतो जीवन्मुक्तस्य सम्बन्धी यो यज्ञोऽस्ति तस्य यज्ञस्य देहेन्द्रियादिसाक्षी य आत्मा स एव यजमानसदृशः। तस्य स्वामित्वात्। या तु तदन्तःकरणे श्रद्धारूपा चित्तवृत्तिः सा पत्नी। यत्र शरीरं तदिध्मम्। एवमुरआद्यवयवानां वेद्यादिरूपत्वोपचारो योजनीयः। यस्तु दमाख्यः शमयिता सर्वेन्द्रियोपशमकारी चित्तवृत्तिविशेषः। तस्य दक्षिणारूपत्वमुन्नेयम्। वागादीनां होत्राद्यृत्विग्रूपत्वमुन्नेयम्। अथास्यानुवाकस्य द्वितीयभागेन योगिव्यवहारस्य ज्योतिष्टोमावयवक्रियारूपत्वं दर्शयति यावदिति। यावन्तं कालं भोजनमकृत्वा ध्रियते विदुषा धार्यते सा धृतिर्दीक्षाख्यसंस्काररूपा। एवं भोजनादौ हविरादिरूपत्वमुन्नेयम्। अथास्यानुवाकस्य तृतीयभागेन जीवन्मुक्तस्य सम्बन्धिनां कालविशेषाणां नानाविधयागरूपत्वमाह ये इति। संवत्सराश्च परिवत्सराश्चेति चकाराभ्यामिदावत्सरानुवत्सरेद्वत्सराः समुच्चीयन्ते। प्रभवादिषु षष्टिसंवत्सरेष्वेकैकं पञ्चकं युगशब्दाभिधेयं तस्मिंश्च युगे पञ्चापि क्रमेण संवत्सरपरिवत्सरेदावत्सरानुवत्सरेद्वत्सरसञ्ज्ञका द्रष्टव्याः। तथा च कालनिर्णये संग्रहकारेणोक्तम्। चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगे। संपरीदान्विदित्येतच्छब्दपूर्वास्तु वत्सराः॥ इति। अहर्गणा द्विरात्रत्रिरात्रादयः। सर्ववेदसं सर्व-

स्वदक्षिणाकम्। अत्रैतच्छब्देन प्रकृताहोरात्रादिपरिवत्सरान्तसर्वकालसमष्ट्युपलक्षितं योगिन आयुर्विवक्ष्यते। यदायुस्तत्सर्वस्वदक्षिणोपेतं सत्रमित्यर्थः। अस्यानुवाकस्य चतुर्थभागेन सर्वयज्ञात्मकं योगिन उपासीनस्य क्रममुक्तिलक्षणं फलमाह एतद्वा इति। जरामरणावधिकं यद्योगिचरितमस्ति तदेतद्वेदोक्ताग्निहोत्रादिसंवत्सरसत्रान्तकर्मस्वरूपमित्येवं यः पुमान् विद्वानुपासीन उत्तरायणे म्रियते स उपासको देवानामिन्द्रादीनां महिमानमैश्वर्यं प्राप्य तदूर्ध्वमादित्यस्य सायुज्यं सहवासं तादात्म्यं वा भावनातारतम्येन प्राप्नोति। अथ पूर्वोक्तवैलक्षण्येन य उपासको दक्षिणायने म्रियते स उपासकः पितृणामग्निष्वात्तादीनामैश्वर्यं प्राप्य चन्द्रमसः सायुज्यं पूर्ववत्प्राप्नोति। य एवमेतौ सूर्याचन्द्रमसोर्महिमानावनुभवन्ब्राह्मणस्तत्र सगुणब्रह्मरूपं हिरण्यगर्भं विद्वांस्तल्लोकनिवासिनामुपदेशिनामुपासीनोऽभिजयति। हिरण्यगर्भसाक्षात्काररूपं प्राप्नोति। तस्मात्साक्षात्कारात्तल्लोकवासिदेहपातादूर्ध्वं हिरण्यगर्भलोकं गत्वा तत्र ब्रह्मणो हिरण्यगर्भस्य महिमानमैश्वर्यं प्राप्नोति। तत्रोत्पन्नब्रह्मतत्त्वसाक्षात्कारस्तस्माज्ज्ञानाद्ब्रह्मलोकविनाशादूर्ध्वं सत्यज्ञानादिलक्षणस्य ब्रह्मणो महिमानं महत्त्वं च प्राप्नोति। इत्युपनिषदिति वाक्येन यथोक्तविद्यायास्तत्प्रतिपादकग्रन्थस्य चोपसंहारः क्रियते।

अथ मीमांसा। तृतीयाध्यायस्य तृतीयपादे चिन्तितम्। पुंविद्यैका विभिन्ना वा तैत्तिरीयकताण्डिनोः। मरणावभृथत्वादिसाम्यादेकेति गम्यते॥ बहुना रूपभेदेन किंचित्साम्यस्य बाधनात्। न विद्यैक्यं तैत्तिरीये ब्रह्मविद्याप्रशंसनात्॥ अस्ति तैत्तिरीये पुरुषविद्या तस्यैवंविदुषो यज्ञस्यात्मा यजमान इति। तथा ताण्डिनामपि शाखायां श्रूयते पुरुषो वाव यज्ञ इति। सेयमेकैव पुरुषविद्या। यन्मरणं तदवभृथो मरणमेवावभृथ इति उभयत्र समानधर्मश्रवणात्। प्रातःसवनादीनां च समानत्वात्। इति प्राप्ते ब्रूमः। वेद्यस्वरूपस्य भूयान्भेद उपलभ्यते। तथा हि विदुषो यो यज्ञस्तस्य यज्ञस्यात्मेति तैत्तिरीयके व्यधिकरणे षष्ठ्यौ। अन्यथाऽऽत्मा यजमान इति व्याघातात्। विद्वानेव यज्ञः स एव यजमान इति कथं न व्याहन्येत। ताण्डिनां तु पुरुषयज्ञयोः सामानाधिकरण्यं श्रुतमित्येको रूपभेदः। आत्मयजमानादिकं सर्वमत्र श्रुतं ताण्डिशाखायां नोपलभ्यते। यत्तु ताण्डिनामुपलभ्यते त्रेधा विभक्तस्यायुषः सवनत्रयत्वमित्यादि न तत्किंचिदपि तैत्तिरीयके पश्यामः। अतो मरणावभृथत्वाद्यल्पसाम्यबाधाद्विद्ययोर्भेद उचितः। अपि च न तैत्तिरीयाणामुपासनमिदं किं तर्हि ब्रह्मविद्याप्रशंसा। तस्यैवंविदुष इति ब्रह्मविदोऽनुकर्षणात्। तस्मान्न विद्यैक्यशङ्कायामप्यवकाशोऽस्ति। क्रममुक्तिस्त्वस्मिन्ननुवाके तत्त्वज्ञानिसेवानिमित्ताऽभिहितेत्यशेषमतिमङ्गलम्॥६४॥

कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके चतुःषष्टितमोऽनुवाकः।

# आश्वलायनश्रौतसूत्रटीका नारायणी वृत्तिः

॥१॥

१-२

तत्रावसायार्षेयान्प्रवृणीते यावन्तो यजमानस्य ते भवन्ति। ते च प्रवराम्नाये व्याख्याताः ॥१॥

अस्येम आर्षेया इत्यन्तः अयं परः अयमपर इत्येवमादिस्मृत्यनुसारेण प्रवराम्नाय एव वरणप्रकारः पठितः स एवेदानीमियन्तो वरीतव्या इत्थं वरीतव्या इति विधानमन्यत्तेत्रजातद्व्यामुष्यायणार्थम् ॥२॥

पुरोहितस्य य आर्षेयास्तानेव राजन्यवैश्ययोः प्रवृणीते। बहुवचनं त्रैवर्णिकस्त्रीजातानामनुलोमानां संग्रहार्थम् ॥३॥

मानवैलपौरूरवसेत्येवं वा पौरोहित्यान्वा ॥४॥

अज्ञाने संशये च त्रयाणां वर्णानां मानवेत्ययं शब्दः प्रवरो भवेत् ॥५॥

निगदेऽवसायेति। निगद इति सप्तमीनिर्देशात्पूर्वापरीभूतो निगदो न परिसमाप्त इति गम्यते। अतः प्रवरोऽपि तस्यैव शेषः। क्वचिन्मन्त्राम्नाये भारतशब्दानन्तरमसावसावित्ति प्रवरप्रकृतेः पठितत्वाच्च। सम्बुद्धिसामानाधिकरण्याच्च। देवेद्ध इति निवित्पदनिगदः। चतुर्दश निवित्पदानि परिभूरसीत्येवमन्तानि। आवह देवान्यजमानायेत्यादिस्वयजायजेत्यन्तमावाहननिगदः। सामिधेन्यादय एते मन्त्रा आहवनीयाभिधायिनः। तत्र भारतेत्यवस्येत्प्रवरान्ते च निवित्पदानामेकादशे च। चतुर्दशेनावाहननिगदं सन्धाय यजमानायेत्यवस्येत्। प्रतिपद्यावसायेत्यध्याहारात् प्रतिपद्येति वचनमस्य वाक्यस्य प्रतिपत्तिसञ्ज्ञाकरणार्थम्। तेन पित्र्यायां प्रतिपत्त्यन्तरविधान एतन्न भवति। तत्र स्थित्वा देवता वक्ष्यमाणा द्वितीयया विभक्त्यादिश्यादिश्यानन्तरमावहेत्यावाहयत्यावहशब्दस्यादिं प्लावयन्। द्वितीयाविधानं सर्वार्थम्। अत्र पाठादेव द्वितीया सिद्धेति तेन देवतामादिश्य प्रणुयाद्यजेचे त्यत्र द्वितीयैव भवति। विभक्त्यन्तरविधाने तु तदेव भवति। आवह देवान्, होत्रायावह, आवह जातवेद इत्येतेषु त्रिषु प्लुतावसाने न स्तः ॥६॥

प्रथमदेवतायामयं विशेषः। तुशब्देन यष्टव्यदेवतावाहनशब्दयोर्मध्येऽग्नेशब्दं ब्रूयात् ॥७॥

यागयोरियमाख्या तत्सम्बन्धाद्देवतयोरपीति ॥८॥

विशेषाभावात्सोमयाजिनोऽसोमयाजिनश्च प्रधानदेवते एते ॥९॥

पौर्णमास्याः प्रथमाम्नानात्सैव प्रथमं प्रयोज्या। स्थानशब्दः पौर्णमास्याधर्माणां प्रथमसम्बन्धं दर्शयति। प्राप्तावविशेषेऽपि प्रयोगावस्थायां विशेषग्रहणादिति। तेनेदं बोधितं भवति। असमाम्नातानामसति चोदनालिङ्गविशेषे पौर्णमासमेव तन्त्रमिति। दधिपयोभ्यां यागं कुर्वन्सन्नयन्नित्युच्यते। यो न सन्नयति तस्यैन्द्राग्नी द्वितीया ॥१०॥

सन्नयतोऽमावास्यायामिन्द्रं महेन्द्रं वाऽग्नीषोमस्थान आवाहयेत् ॥११॥

ऐतरेयिणः शाखाविशेषास्त एतमुपांशुयाजमुभयोरपि पर्वणोरन्तरेण हविषी इच्छन्ति ॥१२॥

उभयोरपि पर्वणोः कश्चनोपांशुयाजमेके नेच्छन्ति ॥१३॥

अन्येषामपीति पित्र्यादीनामङ्गोपांशूनां सङ्ग्रहार्थम्। आवाहनादिषु चतुर्षु निगदेषु यान्युपांशुयाजसम्बन्धीनि षट्पदान्यावहादीनि तेषामुच्चैरिति सञ्ज्ञामात्रं विधीयते। तन्त्रस्वराण्युपांशोरुच्चानीत्यनेन सर्वेषामुच्चसञ्ज्ञानां तन्त्रस्वरो विधीयते ॥१४॥

येऽन्य इति सर्वनाम्नः सन्निहितविषयत्वात्तेष्वेव निगदेष्विति गम्यते। तद्वचना उपांशुयाजवचनाः। परोक्षास्ते। येषां पदान्तरसन्निधानादेव विशेषनिष्ठताऽवसीयते न स्वतः। अजुषतादयः क्रियावचना इत्यर्थः। तेषामुपांशुत्वं प्राप्तमनूद्यते। उच्चैःसञ्ज्ञा विकल्पेन विधीयते ॥१५॥

यागं प्रति चोदितं देवतानामधेयं प्रत्यक्षमित्युच्यते। तस्य प्राप्तमुपांशुत्वं नियमार्थं विधीयते तस्यैवोपांशुत्वं भवेत्। उपांशुदेवतायाः प्राथम्येऽपि प्रथमदेवतायाः सम्बन्धी योऽग्निशब्द आवाहनस्विष्टकृन्निगदयोर्न तस्यापीति। अत्र किञ्चिदुच्यते। उपांशु यष्टव्यमितिवचनादुपांशुत्वं यागधर्मतयाऽवगम्यमानं तत्रासम्भवादानर्थक्यात्तदङ्गन्यायेन तत्सम्बन्धिनः शब्दान्परिगृह्य तिष्ठति। तत्रावहादीनामागूरादीनां च होता यक्षदित्यस्य चोपांशुत्वं निवर्त्य तन्त्रस्वरोऽनुज्ञातः। परोक्षाणामजुषतादीनां विकल्पेन तन्त्रस्वर उक्तः। प्रत्यक्षस्य विष्णवादेर्याज्यादीनां चोपांशुत्वनियमादन्यस्य सर्वस्य तन्त्रस्वरे प्राप्ते याज्यानुवाक्ययोरागूरादिभिः प्राणसन्तानविधानादुपांशुत्वमेव स्थितम् ॥१६॥

चोदनां चोदनां प्रतीति प्रतिचोदनम्। चोदना देवताचोदना। यावत्यो देवताश्चोदितास्तावन्त्यावाहनानि भिन्नानीत्यर्थः। प्रत्यावाहनमुच्छ्वासनिःश्वाससिद्ध्यर्थमिदं भेदसाधनम् ॥१७॥

यत्र बहुभिर्हविर्भिरेकया याज्यया बह्वीभ्यो देवताभ्यो युगपद्यागाः क्रियन्ते त एकप्रदाना यागाः। तत्सम्बन्धाद्देवता अप्येकप्रदाना इत्युच्यन्ते। सर्वा इति बहुवचनं सर्वासां पृथगादेशार्थम्। आदिश्यवचनं सर्वा आदिश्यान्त आवहशब्दप्रयोगार्थम्। सकृद्वचनमन्तेऽपि सकृदेव वक्तव्यो न यावद्देवतमित्येवमर्थम् ॥१८॥

एकामिवेति वचनं यथैकस्या देवतायाः पुरस्तात्स्वाहायाट्शब्दावजुषतादयश्चैकवचनेन तथैतास्वपीति ॥१९॥

निगमेष्वेकामिव संस्तुयादित्यत्रापि सम्बध्यते। विशेषापहणात्प्रयोजनवत्त्वात्सम्प्रदायाच्च। समानामिति। एकशब्दामित्यर्थः। समानार्थामिति। एकप्रयोजनामित्यर्थः ॥२०॥

अव्यवहितामन्यया देवतया। निगमेषु सकृदुच्चार्य यादेकवचनेनैव ॥२१॥

आवापिका आवापोद्धारयोग्याः प्रधानदेवता इत्यर्थः। तासु कृतावाहनासु देवानाज्यपानावाहयेत्स्विष्टकृतं च। पाठोऽनुनासिकत्वाभाय नकारलोपाय च। होत्रायावहशब्दयोः स्विष्टकृदावाहनप्रयोगाय च। किञ्च पठितावाहनानां पाठादेवोत्तरेषु अपि निगमेषु निगमनसिद्धिर्लभ्यत इत्येवमर्थम्। आज्यपाः प्रयाजानुयाजदेवताः। अग्निं होत्रायावह स्वं महिमानमावहेत्येतावत्स्विष्टकृदावाहनार्थम्। आवह जातवेद इत्यादिः सुयजायजेत्यन्तो निगदशेषः। आवाह्य-

वचनं सुयजायजेत्यन्तस्यावाहननिगदत्वात्। सामिधेन्यर्थं यथास्थितस्तथोर्ध्वजानुरुपविश्यो-दग्वेदेर्ध्यंश्च वेद्यास्तीर्णानि तृणानि वेद्यां भूमौ प्रादेशं कुर्यादिदितिमार्तेति मन्त्रेण ॥२२॥

अध्वर्युग्रहणमुत्तरार्थम् ॥२३॥

ब्रूयादिति शेषः। नायमुत्थानमन्त्रः। पूर्वेणात्र निरपेक्षत्वात्। अत ईदृशो मन्त्रो मन्त्रसञ्ज्ञकः ॥२४॥

अत्राध्वर्युग्रहणेन प्रयोजनमभिक्रमणान्वारम्भणं अध्वर्योरेव कुर्यान्न प्रतिप्रस्थातुरित्येतत्। जान्वाह्वोः सन्धिरंसस्तस्मिन्देशेऽध्वर्युमन्वारभेत। पार्श्वस्थेन पाणिना। पार्श्वेन तिष्ठतीति पार्श्वस्थः कनिष्ठिकाप्रदेशे न स्थितो न न्यग्भूतो नोत्तान इत्यर्थः। तेनान्वारभेताध्वर्युम् ॥२५॥

सव्येन पाणिना पार्श्वस्थेनांस एवाङ्के नोरुणा वा ॥२६॥

उभयोः साधारणो मन्त्रः। अतो नावर्तते नोह्यते च ॥२७॥

इध्मसंनहनानि संमार्गशब्देनोच्यन्तेऽग्निसम्मार्जनसाधनत्वात्तेषाम्। तैस्तृणैरभ्यात्मं मुखं संमृजीत। तृणैरिति वचनात्तृणभूतैरेव। तैः सम्मृजीत न ग्रन्थिभूतैः पाशभूतैर्वेति गम्यते। अभ्यात्ममात्माभिमुखं पाणितलमवागपवर्गञ्च सम्मार्जनम् इति ॥२८॥

सकृन्मन्त्रेण द्विस्तूष्णीमित्येतत् सर्वत्र भवत्येवंप्रकारस्य कर्मण आवृत्तौ सत्यामिति। एवंप्रकारशब्देन संस्कारकर्मत्वमुच्यते। एतदुक्तं भवति यत्र संस्कारकर्मणि त्रिरावृत्तिर्विधीयते तत्र सकृन्मन्त्रेण द्विस्तूष्णीमिति। न प्रधानकर्मणि ॥२९॥

होतृषदनमपरेण स्थित्वा प्राङ्मुखोऽभिमन्त्रयेत। इदमुदकोपस्पर्शनं पूर्वाङ्गम्। अग्निसम्मार्जन-तृणैरात्मनो मुखसम्मार्जनादात्मनो यदौष्ठ्यं तच्छान्त्यर्थत्वेनास्य दृष्टार्थत्वं भवति ॥३०॥

दक्षिणां च तदुत्तरञ्च दक्षिणोत्तरम्। तञ्चानुपस्थो दक्षिणोत्तरी। तेनोपविशेत् ॥३१॥

एते इति प्रकारमन्त्रविशिष्टयोर्ग्रहणार्थम्। ते च सर्वेषां सर्वासनेषु प्रथमोपवेशने भवतः। न द्वितीयादिप्रयोगे इत्येकोऽर्थः। समानेऽप्यासनेऽहर्गणेष्वहरहः प्रथमोपवेशने भवतः। अयम-परोऽर्थः। समानेऽपि स्थाने प्रयोगावृत्तौ पुनः पुनरावर्त्यते प्रवर्ग्यादिषु। अयञ्चापरोऽपिशब्दा-ल्लभ्यते। अस्य विधेर्दर्शपूर्णमासप्रकरणे पठितत्वात्तदतिदिष्टेष्वेवेष्टिपशुसोमेषु भवतो नाग्नि-होत्रादिष्विति। अङ्कधारणं भवत्येव ॥३२॥

अस्याचार्यस्य द्विः। द्वितीयेऽपि प्रयोगे भवतीत्यभिप्रायः ॥३३॥

इत्याश्वलायनश्रौतसूत्रटीकायां नारायणवृत्तौ प्रथमाध्याये तृतीयः खण्डः ॥

---

## ७१-तमे पत्रे दशमपङ्क्त्यारम्भे

॥ ३ ॥

१·५·२·१

प्रथमेऽनुवाके वैकृतिनक्षत्रेष्टकामन्त्रा उक्ताः। अथ द्वितीयतृतीययोः कर्मानुष्ठानाय पुण्यकालो निरूप्यते। तस्य चानारभ्याधीतत्वात्कर्मविशेषसम्बन्धापादकस्य वाक्यादेरभावाच्च क्रत्वर्थत्वं नास्ति किन्तु पुरुषार्थत्वमित्यवगन्तव्यम्। तत्रास्मिन्ननुवाके नक्षत्रमुपजीव्य कालविशेषं विधत्ते। ज्योतिःशास्त्रप्रसिद्ध्या कर्तुः स्व[illegible] क्रियमाणस्य कर्मणश्चानुकूलत्वेन पुण्यं यन्नक्षत्रमस्ति, उपव्युषमुषःकालसमीपे तन्नक्षत्रं [illegible]वान वाढं कुर्वीत। आकाशे सूर्योदयदेशादूर्ध्वमेतावति दूरे तन्नक्षत्रं तिष्ठतीति [illegible] दृढनिश्चयं कुर्यात्। उपव्युषमित्यस्यैवाभिप्रायः स्पष्टीक्रियते। यस्मिन्काले सूर्य उद[illegible]त तस्मिन्काले तन्नक्षत्रं पुरुषो नैति न प्राप्नोति। सूर्यप्रकाशेन तिरोहितत्वाद्द्रष्टुं न शक्यत इत्युदयात्प्रागेव नक्षत्रदर्शनकाले तस्य स्थानविशेषं निश्चिनुयात्। तच्च नक्षत्रं यावत्प्राच्यामुदयं प्राप्य पश्चिमाभिमुखं गच्छति। तथा सति यस्मिन्देशे नक्षत्रस्थानं स्वेन निश्चितं तत्स्थानात्प्राचीनः समीपदेशस्तन्नक्षत्रापेक्षया जघन्यः। तस्मिञ्जघन्यदेशे यावति काले सूर्यो गच्छेत्तावति काले स्वेन कर्तव्यं कर्म कुर्यात्। यत्कर्म करोतीति यत्कारी। तादृशश्चिकीर्षुः पुरुषस्तस्मिन् काले प्रारभेत। तथा सति सत्स्वपि शास्त्रोक्तेषु कालदोषेषु तेषां दोषाणामुपशमादयं पुरुषः पुण्याह एव तत्कृतवान् भवति। तदेतत्सांप्रदायिकम्। यस्मान्मात्स्यो नाम कश्चिदृषिर्यज्ञेषुनामकं शतद्युम्नं च पुरुषमीदृशे मुहूर्ते कारयित्वा निःशेषेण श्रैष्ठ्यं प्रापयामास।

अथ प्रसङ्गाल्लोकद्वये श्रेयःसाधनं नक्षत्रसमूहध्यानं विधत्ते। नक्षत्राण्येव शरीरं यस्य प्रजापतेस्तं प्रजापतिं यः पुरुषो वेदोपास्ते तं पुरुषं लोकद्वये देवा मनुष्याश्च जानन्ति। तथाविधख्यातियुक्तो भवतीत्यर्थः। यदिदं हस्तनक्षत्रं तदेव प्रजापतेर्हस्तस्थानीयम्। चित्रानक्षत्रं तु शिरःस्थानीयम्। निष्ठ्या स्वातीनक्षत्रं तु हृदयस्थानीयम्। विशाखानक्षत्रमूरुस्थानीयम्। अनुराधानक्षत्रं पादस्थानीयम्। एवमुपास्यमानः प्रजापतिर्नक्षत्रियः। य एवं वेदेत्यादेः पुनरभिधानमुपसंहारार्थम्॥

---